श्यके ण्यत् । आत्मम्भरिणा तेन अवश्यं न भूयते इति
अहमिति पूर्णत्वावष्टम्भपरामर्शः । ननु लब्धदुर्लभतद्दा-
स्योऽहमेकाकिभक्तथेति वक्तव्यम्, किं लक्ष्मीसंपच्छब्दाभ्याम् ।
समस्तेति सौत्रस्य प्रत्यभिज्ञाविशेषणस्य दास्यविशेषणतापिशुन-
सूचनम्, न प्रयासान्तरेणेत्याशङ्क्य आह **'संपत्'** इति ।
ऐश्वर्यमयी महेश्वरसमावेशरूपा या प्रकृष्टा भक्तिः फलाङ्गिभाव-
भागिभवानीवल्लभभक्त्यन्तरविलक्षणा विवक्षिता, सा लक्ष्मीश-
ब्देन संपत्पदेन च समस्तेत्यस्य दास्यविशेषणतासूचनेन निर्दिष्टा ।
संपत्पदं व्याख्येयप्रत्यासत्तेः पूर्वमुपात्तम्, तत्प्रसङ्गात् तु चरमं
लक्ष्मीशब्दः । ननु प्रकृष्टा भक्तिः फलाभिसन्धिवन्ध्या कथं स-
मस्तेतिविशेषणं विरुद्धं सहते इत्याशङ्क्य आह **'यतः'** इति ।
समस्तत्वमनवच्छिन्नत्वं संपदाम् । तच्च परमेश्वरावेशवशादेवेति
न अत्र विरोधः । यत एवंभूता परमेश्वरापत्तिरूपा भक्तिः
प्रकृष्टा, तत एव बह्वर्थवृत्तिर्लक्ष्मीशब्दः इति दूरेण संबन्धः ।
मध्ये तु अत्र संवादको ग्रन्थः, तद्योजनं च **'गीतम्'** इति
गुरुणा अर्जुनं प्रति

'चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च······॥' (भ० गी० ३।१६)

इति । दुःखनिराकरणकारणतानिश्चयेन वा, सुखसंपत्तिहेतुता-
निश्चयेन वा तदुभयविषयार्थसंशयेन वा, जिज्ञासाशब्दवाच्येन
तत्त्वज्ञाननान्तरीयकतया वा परमेश्वरविषयः प्रह्वीभावो जायते ।
तदाह मामिति—अविच्छेदेन प्रकाशमानं परमात्मानं सोपाधिं
पूर्वे, चरमे निरुपाधिं, भजन्ते सेवन्ते उत्कर्षयन्ति । तेन भक्ता-
श्चतुर्विधाः । तेषां मध्येऽन्त्यो नित्ययुक्तो नित्यं

'मय्यावेश्य मनो ये मां············ ।' (भ०गी० १२।२)



इत्युक्तेन समावेशयोगेन युक्तः, नित्यं च भक्त्या युक्तः, नतु
आद्यत्रितयवत् फलप्राप्तौ विवर्तमानभक्तिः । तथा एकत्र परमेश्वर
एव भक्तिर्यस्य, नतु प्राधान्येन फले, स विशिष्ट इति प्रकृष्टतां
निरूप्य परमेश्वरावेशरूपतया समस्तसंपन्निमित्तभावं संवादयति

'···············ज्ञानी त्वात्मैव मे··· ।' (भ०गी० ७।१८)

इति । मम प्रत्यभिज्ञातपरमेश्वरात्मनो ज्ञानी आत्मा स्वभावः
परमेश्वर इत्ययमर्थो भङ्ग्या उक्तः, नतु ज्ञानिनोऽहमात्मेति ।
एतदेव स्फुटयति **'ज्ञानी हि भक्तः'** इति । ज्ञानित्वमेव नाम
भक्तिरिति यावत् । ईश्वरोचिता, ईश्वरतादात्म्यनान्तरीयिकाः ।
बह्वर्थस्य वृत्तिर्यस्य; नच अनभिधानं कबभावादेव बहुत्वा-
वगतेः । लक्ष्मीशब्दान्तात् हि 'नद्यृतश्च' (५।४।१५३) इति
नित्ये कपि सिद्धे उरःप्रभृतिषु समानत्वात् नौर्लक्ष्मीरिति एकवच-
नान्तानां पाठस्तत्रैव नित्यः कप् यथा स्यात्, द्विबहुवचनान्तत्वे तु
विभाषेति । इयता महेश्वरदास्यं महेश्वरप्रत्यभिज्ञानप्राणितं भक्तत्व-
मात्मनो जातमिति प्रत्यभिज्ञागतमपि समस्तेत्यादिविशेषणं
कथञ्चिदिति विनिवेदिते ज्ञानिताद्वारायिते दास्ये बलादेव संक्रा-
न्तमित्युक्तम् । ईदृशेन य एकाकिसंपदा लज्जते, तत एव आर्द्रा-
शयः सरसविमलहृदयः, अत एव विश्वरूपपरमेश्वरसमावेशो-
चितहृदयस्तेन । शेषः प्रत्यभिज्ञातस्वस्वभावं, परमेश्वरतादा-
त्म्यापन्नं जनं मुक्त्वा यः कश्चिदन्यो भूतभविष्यद्वर्तमानप्रमातृप्र-
बन्धरूपो जनः, तस्य निज उचितो यः प्रभुः प्रत्यभिज्ञापयितुश्च
निजस्तद्विषयः

'भूतोऽनुसन्धेयद्वार्यो ज्ञानिना तु सृतोद्धृतौ ।'

इत्यागमः, तस्य प्रभोरसौ संबन्धः प्रत्यभिज्ञातृप्रत्यभिज्ञेयताल-
क्षणो महाफलः समस्तसंपदवाप्तिहेतुः, तस्येति वा प्रत्यभिज्ञा-

पयितुरार्द्राशयस्य ईश्वरसमावेशात् सर्वशक्तेर्जनैर्यः संबन्धः प्रत्य-
भिज्ञापयितृप्रत्यभिज्ञाप्यलक्षणः । एतत् तु व्याख्यानद्वयमपि
टीकावाक्यस्य अस्थानपुनरुक्ततावहम् । 'तस्यापि परमार्थ'
इतिवृत्तिखण्डव्याख्याने हि इदमुचितम् वक्ष्यते च 'ईश्वरप्रत्य-
भिज्ञापि जनस्य उत्तमफला' इति । तस्मादार्द्राशयगतत्वेनैव
व्याख्येयम् । तस्य आर्द्राशयस्य सर्वशक्तेरीश्वरस्य च य असाविति
प्रभुदासलक्षणः संबन्धः, स महाफलो विततफलः स्वात्मोपकार
इव परोपकारेऽपि पर्यवस्यत्येव । तेन समस्तस्य संपद इत्यपि
सूत्रार्थे वृत्तौ च एकाकिशब्देन सूचितमेतत् । यथाच प्रसिद्धः
सुजनोऽपेक्षावशेन परमस्य ईश्वरस्य अस्मि दासः एकाकी न
संपदो भुञ्जे, अपितु जनमपि प्रत्यभिज्ञापयामि, येन अस्यापि
लाभेन तुष्येयमिति परामृशति; तथा कथंचिदिति आत्माशय-
वशात् महत ईश्वरस्य दास्यमित्यादि उपपादयामीत्यन्तं विमृ-
शति । तथाहं विमृशामि सुजनस्वभावत्वादिति व्याप्तिघटनापि
सूत्रवृत्तिभ्यां कृतेति विवृणोति 'यो हि' इति । यो यः सुजनो
लब्धेश्वरगाढपरिचयो दीयतेऽस्मै सर्वमिति दासशब्दवाच्यः, स
एवं विमृशति । सुजनश्च ग्रन्थकृदिति स्वभावहेतुः । अनेवंविम-
र्शकत्वे हि सौजन्यविरुद्धं दौर्जन्यमिति स्वभावविरुद्धोपलम्भात्
सौजन्यं हेतुर्विपक्षादनेवंविमर्शकत्वात् व्यावृत्तमेवंविमर्शकत्वेन
साध्येन व्याप्यते इति व्याप्तिसिद्धिः । परिचयपदेन प्रक्रियावि-
रहितो दासभावो दृष्टान्ते व्याख्यातः । प्रसिद्धस्य अत एव प्रत्य-
भिज्ञापनायां कर्तृकर्मणः, नतु मुख्यकर्मणः । 'ईश्वरम्' इति
प्रसिद्धमपि मायावरणादप्रसिद्धमिति भावः । 'तं प्रति' इति
अन्यं जनम् । ननु दृष्टान्ते ईश्वरः कर्तृकर्म, प्रकृते तु मुख्यक-
र्मेति शब्दसाम्यमात्रं साध्यस्य, ततश्च यथा गोमानयं देशो



व्यवहर्तव्यस्तेजोयोगादिति दृष्टान्ते गोमत्त्वव्यवहारेण व्याप्तौ
साध्यधर्मिणि माहेयीमत्त्वव्यवहारो न सिध्यति, तथा प्रकृते-
ऽपि इत्याशङ्क्य आह 'उभयोऽर्थः' इति । न अत्र वैषम्यं
किंचित् । प्रत्यभिज्ञापनं द्विकर्मकमुपकारकं सत् संपाद्यत्वेन सु-
जनो विमृशतीति हि व्याप्तिः । ततः पक्षधर्मताबलात् विशेषः,
येन असौ हेतुसाध्ययोः कंचित् दोषमाधत्ते । अत एकोऽयमर्थो
द्विधा विशद्यते इति 'उभयोऽर्थः' इति उक्तम् । जनस्य
प्रयोज्यकर्मता प्रकृते—स्वामिनं प्रत्यभिजानीहीति, स्वामिनश्च
प्रयोज्यकर्मता दृष्टान्ते—उचितमिमं कृत्येषु स्वं प्रत्यभिजानातु
स्वामी इति पर्यायेण प्रयोज्यकर्मता । संज्ञापनवत् प्रत्यभिपूर्वो
जानातिर्न बुद्ध्यर्थः इत्याशङ्कात आह 'बुद्ध्यर्थत्वात्' इति ।
ज्ञातस्यापि मोहवशादज्ञातस्य इव आभिमुख्येन हृदयंगमीभावेन
ज्ञानं प्रत्यभिज्ञानम् । ननु व्याप्तिविषयोपदर्शनं सूत्रे न दृश्यते,
तत्कथं वृत्तावित्याशङ्क्य आह 'तेन तस्य च' इति । एतदर्थ-
द्वयविषये संबन्धसामान्यविवक्षया या शेषषष्ठी तया सह यः
समासः, तत्र योऽर्थद्वयस्य श्लेष एकशब्दवाच्यतात्मा संबन्धः;
ततो हेतोः सूत्रेऽपि उपात्तः उभयोऽयमर्थ इति पूर्वेण संबन्धः ।
ननु प्रत्यभिज्ञापनं यत् वृत्तावुक्तं यत्र पर्यायेण मुख्यामुख्यकर्म-
योगः, तत् सूत्रे नोपात्तम्; तत्र हि उपपादनमुक्तं प्रत्यभिज्ञाक-
र्मकमित्याह 'प्रयोजक' इति । अनेन सूत्रे उपात्तमिति संबन्धः ।
ननु सूत्रे उपपदिः, नतु प्रत्यभिजानातिः; तत् कथमैकार्थ्यमित्या-
शङ्क्य आह 'प्रत्यभिज्ञोपाय' इति । प्रत्यभिज्ञापनं हि प्र-
योजकव्यापारः, नतु प्रत्यभिजानीष्वेति प्रैषाध्येषणरूपोऽसाविह,
अपितु तत्समर्थाचरणलक्षणः । प्रत्यभिज्ञायां च यत्तत्समर्थाचरणं,
तदुपपत्त्या तत्संभवनिरूपणं, न अन्यत् । अतः प्रत्यभिज्ञामु-

पपत्त्या निरूपयामि, तद्विषयान् उपायान् प्रदर्शयामि, संभवन्तीं तां संभावयामि, प्रत्यभिज्ञामुपपादयामि, प्रत्यभिज्ञापयामीति एक एव अर्थः । तथाच **'वक्ष्यमाणोपायेन'** इति वृत्तिः **'उपपादयामि'** इत्यस्य व्याख्या, यत उपपादयामीत्यस्य तद्विषयानुपायान् प्रदर्शयामीति । वक्ष्यमाणव्याख्यान्तरसूचनं च इदं समस्तसंपदित्यस्य । तथाहि प्रतीपं ज्ञातस्यापि विस्मृतस्येव छादितस्येव पुनराभिमुख्येन, नतु स्मर्यमाणतया, अपितु स्फुटत्वेन ज्ञानं प्रत्यभिज्ञानं स एवायमिति भातभासमानानुसन्धाने स्थिरस्य अधुनातनकालव्यापिनोऽपि ज्ञातत्वमेव । अयमसावद्य मया प्रत्यभिज्ञात इत्यत्रापितु कुतश्चित् सामान्याकारेण ज्ञानमभूदेवे । एवमात्मनि सततं भात्यपि मोहादावृते इव पुनराभिमुख्येन ज्ञानम् । तत्र च उपायः—समस्तस्य नीलसुखादेः संपत् सिद्धिः, तस्याः सम्यगवाप्तिरचलविमर्शोपारोहः । अतोऽयमर्थः—समस्तसंपदवाप्तिहेतुरुपायो यस्यां प्रत्यभिज्ञायां, तादृशीं तदुपायिकामुपपादये । उपपादनं च प्रत्यभिज्ञायां विश्रान्तमिति तत् प्रयुज्यमानं तां स्वविशिष्टां प्रयुक्तां फलतः करोति,—इति न सूत्रार्थवृत्त्यर्थवैषम्यं किंचित् । शक्तिर्दृक्क्रियात्मा, तदेव लक्षणरूपमभिज्ञानम् । यत् यत् ज्ञानक्रियास्वतन्त्रं, तदीश्वरः पुराणागमसिद्ध इव । प्रमातृतत्त्वं च एवम्, एतावन्मात्रलक्षणं च ऐश्वर्यम् । पुराणादिसिद्धेऽपि ईश्वरेऽनङ्गीक्रियमाणे गृहग्राममण्डलेश्वरप्रसिद्धौ तद्विषयाप्रतिहतज्ञानकरणे एव ऐश्वर्यस्य लक्षणम् । ते च प्रमातृतत्त्वे सर्वविषये अप्रतिहते एवेति । अपिशब्दो भिन्नक्रमः । न केवलं मम महाफला, यावत् जनस्यापि । इयता **'समस्त'** इत्यस्य उभयविशेषणत्वं स्फुटीकृतम् । ननु समस्ताः संपदः



फलत्वेन सूत्रिताः, वृत्तौ तु परमार्थलाभमात्रं फलं विवृतमिति किमेतत् । अत्र आह **'यत्र'** इति । समस्तसंपद्योगेन पूर्णता लक्ष्यते । राज्यभोगस्वर्गभुवनभोगप्राप्तावपि उत्तरोत्तराशंसनीयसंभवे कः पूर्णतावकाशः । परमे तु अर्थनीये यतः परमर्थनीयान्तरं नास्ति, तस्मिन् परमेश्वरभावे समासादिते किमाशंसनीयं परं स्यादिति तात्पर्यम् । **'एतावता च'** इति सूत्रवृत्तिग्रन्थेन । ननु लोकगतः पुरुषार्थलाभः शास्त्रकृतः कथं प्रयोजनम् । आह **'प्रवृत्तिहेतुतया'** इति । नहि प्रयोजनस्य शृङ्गमस्ति—यदेव हि प्रवर्तकं, तदेव प्रयोजनम् । 'यमर्थमधिकृत्य' (न्या० सू० १।१।२४) इति वदन्ति 'इष्टलक्षणत्वात्' इति च । लोकफलसिद्धौ शास्त्रकृतः किमिति चेत्, स्वगतफलसिद्धावपि अस्य किम् । तस्यां परितुष्यतीति चेत्, इहापि समानमित्याशयेन आह **'शास्त्रकृतस्तु'** इति । ननु परितुष्येयमिति वृत्त्या कः सूत्रांशो व्याख्यातः इत्याशयेन आह **'अनेन'** इति । **'स्वात्मनि निराकाङ्क्षता'**, इति विशेषविषयो निषेधः शेषमभ्यनुजानातीति इच्छारूपाया आकाङ्क्षाया गत्यन्तरविरहात् पर एव विषयो भवति । नच परापकारविषया असौ युक्ता तस्य अपूर्णस्वात्मकैरेषणीयत्वात्, अस्य तु ईश्वरदास्येन समस्तसंपत्प्राप्तिहेतुना परिपूर्णत्वात् स्वात्मनि किंचिदपि कर्तव्यमेषणीयं नास्ति । अप्रतिहता च चित्स्वभावत्वादिच्छा । सा परार्थविषयैव बलात् संपद्यते । स्वसंपाद्यनियन्त्रितो हि न परमुपचिकीर्षेत्, स्वसंपाद्याभावे तु बलादेव परोपकारविषया सा भवति । यथोक्तं मयैव श्रीषडर्धश्लोकवार्तिके तन्त्रालोके

'स्वं कर्तव्यं किमपि कलयंल्लोक एष प्रयत्ना-
न्नो पारार्थ्यं प्रति घटयते कांचन स्वात्मवृत्तिम् ।

यस्तु त्यक्ताखिलभवमलः प्राप्तसंपूर्णबोधः
कृत्यं तस्य स्फुटमिदमियल्लोककर्तव्यमात्रम् ॥' (२।३९)

इति । तेन आत्मनोऽशेषसंपन्निधानमहादेवदास्यलाभात् संपन्ने उपकारे परस्यापि तमिच्छन्निति अप्रतिहतेच्छाप्रसरत्वादेव परितुष्यामीति प्राप्तकालो युक्तो मेऽत्र, आशु परितोषः इति प्राप्तकाले लिङ् । तदेतत् '**उपकारमिच्छन्**' इत्यस्य व्याख्यानं '**परितुष्येयम्**' इति । प्रसरन्त्या हि इच्छाया अनिरोधः परितोषः परोपकारे समर्थः, तद्विषयामिच्छां प्रसरन्तीं स्वार्थसंपादनप्राबल्येन वा स्वार्थप्रतिघातपराकरणतात्पर्येण वा अनाशङ्कितप्रसरनिरोधां कथंकारं निरुन्ध्यामिति तात्पर्यम् । एवं सूत्रवृत्ती व्याख्याय विवृतिकारस्तदधुना '**व्यवहर्तृमात्रस्यापि**' इत्यादिना ग्रन्थेन निर्णयति यदुक्तवान् सूत्रावतारणोपक्रमे '**श्रोतृजनप्रवृत्तये प्रयोजनं कथयति**' इति । तथाहि केचित् मन्यन्ते पुरुषवचसां सत्यासत्यत्वावलोकनात् वाक्यावगमितेऽपि प्रयोजने सन्देह उपजायमानोऽर्थः प्रयोजनं संशयरूपत्वात् प्रवर्तकः संभावनाप्रत्ययरूपत्वात् वा; यतः शीलसमाचारौ शास्त्रकारस्यावगतौ, तदेतत् न सहते '**व्यवहर्तृमात्रस्यापि**' इत्यादिना । '**इहार्थित्वम्**' इति तदुपायलाभेऽपि जनस्य कथं प्रवृत्तिर्भवेदिति अर्थितैव मुख्यतया प्रवृत्तिकारणम्, उपायवेदनं तु केवलं प्रवर्तमानस्य विषयमर्पयत् करावलम्बनमाधत्ते । तत्र अभ्यस्ते व्यवहारे व्यवहर्ता सुवर्णरूप्यपरीक्षादौ सुवर्णकारवैकटिकादेरपि वचः प्रामाण्येन अभिमन्यते, किमङ्ग शास्त्रकारस्य । परमेश्वरप्रसादतश्च अस्य परमेश्वरस्वरूपावेशात्मनि प्रयोजने मतिरुन्मनायते; उपायमविद्वांस्तु किं कुरुतामिति कान्दिशीको झटिति आदिवाक्यं शृण्वन्



प्रवर्तत एव निःशङ्कः । तदाह '**दृष्ट**' इति अनपह्नवनीयोऽयमर्थः । अत एव अभ्यस्ते विषये स्वत एव प्रामाण्यमभ्युपागमन् । '**शास्त्रादिनिर्दिष्टात्**' इति । पत्रमात्रमेव हि अवलोकयन् प्रवर्तते, नतु लोकं पृच्छेदुपाध्यायं वा, सशङ्को वा शास्त्रं श्रुत्वा ततः सत्यतां प्रतीयादिति । एतत्प्रयोजनेन योऽर्थी जनो यः कश्चिदिति अधिकारिणोऽत्र नान्यो नियम इति । '**प्रवर्तताम्**' इति अर्हति प्रवर्तितुमेतस्य शास्त्रस्य श्रवणे इति । विस्पष्टनमर्थः प्रयोजनं यस्य प्रयोजननिबन्धनस्य, तस्य न आनर्थक्यम् । '**अत्रैव**' इति '**कथञ्चित्**' इति श्लोके । वृत्तिकारो हि प्रत्यभिज्ञां ग्रन्थकार उपपादयतीति ब्रूयात्, नतु उपपादयामीति । ननु वृत्तिकारोऽन्यथापि अनवबोधादिना प्रयोजनं ब्रूयादित्याशङ्कातोऽनाश्वासस्थानम् । तत् यदि विप्रतारकतया वृत्तिकारः शङ्क्यते, इदमपि कस्मात् न आशङ्क्यते—उपपादयतीति वक्तव्ये वृत्तिकृत् वितारणार्थमुपपादयामीति उक्तवानित्याशङ्क्य आह '**प्रसिद्धेः**' इति मूलग्रन्थकारसमानकालभाविनो हि साक्षाद्दर्शिनः क्रमेण इमां प्रसिद्धिं प्रसारयन्ति । ननु प्रसिद्धिर्नाम न किंचन प्रमाणम् । यदि परं कल्पितः स्वभावहेतुः, नच कल्पनया परमार्थव्यवहाराः सिध्यन्तीत्याशङ्क्य आह '**यद्वक्ष्यते**' इति व्याख्यास्यते आगमविचारे वितत्य एतदित्यर्थः । नहि मूलवृत्तिग्रन्थयोरेतद्भविष्यति । नापि तत्रत्यमेतत् टीकावचनम्, अपितु आगमग्रन्थवाक्यम् । तस्य पाठमात्रे इह च अग्रे च तुल्ये वक्ष्यते इति कथम् । अग्रे हि उक्तमेतदित्यपि वक्तव्यं स्यात् । तस्मादेतदर्थः प्रमाणलक्षणावसरे

'इदमेतादृक्………………… ।' (२।१६)

इत्यत्र व्याख्यास्यत इत्यर्थः । तत्र हि दृढानुन्मूलनीयविमर्शा-

धायकं प्रमाणम् । तथाच 'प्रसिद्धिः स्वयमेव विमर्शजीविता आगमप्रमाणरूपा' इति वक्ष्यते । '**युक्तिमान्**' इति, न्याय-दत्तहस्तावलम्बो यथा ईश्वराद्वयाद्यागमः । '**इतरः**' इति न्यायाननुगृहीतः । इयन्ति तत्त्वभुवनानीत्यादित आरभ्य तेषा-मेतैर्मन्त्रैरेतावतीभिराहुतिभिः शुद्धिरपुनर्बन्धकत्वलक्षणा भ-वति, तत एवं शिवयोजनेत्यादिना अगमः, स एवंरूपो विद्या-यामपवर्गरूपस्वरूपलाभोपाये, अविद्यायां संसारभुवि भोगो-पाये, युक्तिमान् दानाद्धर्मो हिंसातस्तु अधर्म इति । उपकारा-पकारचित्तात् हि निर्मलसमलरूपात् तादृक् फलमिति संभाव-नानुमानम् । निर्युक्तिकः

'स्नानात् धर्मो दीक्षितस्याधर्मो दानात् ।'

इति । '**अविगानतः**' इति प्रामाण्ये हेतुः, विरुद्धं गानं तद्विमर्शोन्मूलनेन विमर्शान्तरस्य अभावात् प्रामाण्यम्, तदुदये तु अप्रामाण्यमेव । ननु स आगमः कुत आयातः । आह '**ऐश्वरी**' ईश्वरात् आगता सा '**सत्या वाक्**' अतश्चैवं येन हि निरुरुत्सितापि न निरोद्धुं शक्या, अत एव हि '**अविगीता**' विरुद्धविमर्शानुन्मूलितविमर्शा; तया प्रसिद्धरूपया ऐश्वर्या वाचा । '**यत्र**' अधिकारिविशेषे, देशे च । '**यदा**' इति काले । '**यत्**' इति प्रमेयम् । सिद्धं विमर्शभूमिप्राप्तं हृदयकोटरे हठकृतदृढ-निरूढिकम् । '**तत्**' इति तद्देशतदधिकारितत्कालकप्रमेयरूपम् । '**अविशङ्कितैः**' इति अशङ्कितत्वादेव '**ग्राह्यम्**' न न ग्राह्यम्

'अन्यद्वचसि कण्ठेऽन्यत्.................. ।'

इति न्यायेन आश्रयणीयमित्यर्थः । तेन

'रिक्तस्य जन्तोर्जातस्य.................. ।'



इति रिक्ता वाचोयुक्तिः । प्रसिद्धिशतपूर्णे जीवलोके कस्यचित् काचिदेव प्रसिद्धिः

'लीनेव प्रतिबिम्बितेव लिखितेवान्तर्निखातेव च'

(मा०मा० ५।१०)

इति न्यायेन हृदयभित्तौ उत्पाटनशतैरपि हृदयमनुन्मूल्य नाप-सर्पतीत्याशयेन आह '**बौद्धस्यापि**' इति । स हि

'तथा विशुद्धे विषयद्वये शास्त्रपरिग्रहम् ।
चिकीर्षोः स हि कालः स्याद्यदा शास्त्रेण बाधनम् ॥'

इति आह, तथा

'तद्विरोधेन चिन्तायास्तत्सिद्धाभीष्टयोगतः ।
तृतीयस्थानसंक्रान्तौ न्याय्यः शास्त्रपरिग्रहः ॥'

इति । तत्र च सुदूरमपि गत्वा कथमेतत् निश्चेयम्—येनैव प्रत्यक्षानुमानावगमयोग्यमेतत् विषयद्वयमवितथं कथितम्, ते-नैव अयं तदविषयस्तृतीयस्थानात्मा विषयो भाषित इति । नहि अत्र संभावनानुमानमपि वीतरागसर्वज्ञन्यायेन संभवति, वितार-कोऽपि कोऽपि तन्मध्ये '**चैत्यवन्दनात्**' इत्यादि अक्षैप्सीदिति संभावनानपगमात् । अथ बुद्धेन इदं भाषितमिति स्वयूथ्यपरयू-थ्यप्रसिद्धिरनतिशङ्कनीया उच्येत । तदस्मदुक्तसन्मार्गारोहण-मेतत्, अलमत्र अस्थानविशङ्कयेति । एवं प्राधान्येन प्रयोजन-मुक्तं पार्यन्तिकं समस्तसंपदिति, तत्संपादकं तु उपपादयामीति । तयोश्च साध्यसाधनभावः संबन्धः । अभिधेया प्रत्यभिज्ञा । तस्याः शास्त्रस्य च व्युत्पाद्यव्युत्पादकतासंबन्धः । तदुपायत्वात् शास्त्रस्य अभिधानमीश्वरप्रत्यभिज्ञेति । गुरुपर्वक्रमस्तु

'इति प्रकटितो.................. ।' (४।१५)

इति शास्त्रान्ते निरूपयिष्यते आगमार्थाभिधानप्रसङ्गात्, व्यव-

हारसाधनप्रमाणचिन्तावसरे तु किं तेन । नहि वचनबलात् व्याप्तिर्हेतोः स्वरूपं वा । परार्थानुमाने च सर्वमेव आगमरूपतानपेक्षम् । केवलं मोहव्यपोहनमात्रमत्र फलं धर्मिणो हेतोर्व्याप्तेश्च सिद्धाया अपि मोहाच्छादनकृतासत्कल्पनापसारणेन साफल्यात् ।

'केवलं दृष्टसाधर्म्यात्स्मार्यते समयं परः ।'

इति न्यायेन धर्म्यसिद्धौ हेत्वसिद्धौ व्याप्त्यसिद्धौ वा परस्य वचनमात्रस्य अनुपयोगात् वचनप्रत्यये वा आगमरूपतैव स्यात्, न अनुमानमिति । तदिह आत्मनि ईश्वररूपतया स्वयं प्रकाशमाने मोहापसरणे व्यवहारसाधकप्रमाणव्यापारः । अत एव

'तर्कोऽप्रतिष्ठः………………… ।'

इति न अवतरति मौलिकसंवेदनपरिघटनात् 'घटोऽयं तथा भासमानत्वात्' इति न्यायेन । नहि एतत् 'नित्योऽयं पक्षसपक्षान्यतरत्वात् मदुपगमात्' इत्यादिवत् सत्यानुभवबाह्यं स्वविकल्पमात्रोपरचितम् । तत एव एतत्पृष्ठे आगमोऽपि उपोद्बलकोऽस्त्विवति । कथंचिदित्यनेनैव गुरुपर्वक्रमोऽपि न न सूचितः । दुर्लभो हि सद्गुरुसंबन्धः इत्युक्तं श्रीमन्मतङ्गादौ

'………………संबन्धोऽतीव दुर्घटः ।'

इति । वृत्तौ च गुरुभट्टारकोऽपि परमेश्वरशब्देनैव निर्दिष्टः

'आचार्यस्य च मन्त्रस्य शास्त्रस्य च शिवस्य च ।
नानात्वं नैव कुर्वन्ति विद्येशा……… ॥'

इति हि आगमः । टीकाकारोऽपिच '**साक्षात्कृतपरमेश्वराकारैः**' इति वक्ष्यति । ननु वृत्तिकारः कथं प्रत्यभिज्ञापयामीति अहंभावनिष्ठत्वेन ब्रूयात्, तेन हि वक्तव्यं प्रत्यभिज्ञापयति परि-



तुष्येदिति च,—इत्याशङ्क्य आह '**तत्र वृत्तौ**' इति अत्र सूत्रे या वृत्तिस्तस्याम् । सूत्रस्य विवरीतव्यस्य अनुसारेण हेतुना एष निर्देशः, नतु स्वात्मनिष्ठत्वताभिप्रायेण । कस्मात् सूत्रस्य अनुसरणमिति । आह संवृतो यथास्थितत्वेन अनन्यथाकृतो यः सूत्रकृतो निर्दिश्यमानोऽर्थः, तस्य या विवृतिर्भञ्जनं; तावानेव यतोऽस्या व्यापारः । यदि सौत्रं निर्देशमन्यथा कुर्यात्, तर्हि वादिप्रतिवादिनोः सिद्धान्तपूर्वपक्षगतयोरुत्थापनं भवेत्; ततश्च प्रतिवादिकृतस्य आक्षेपस्य, पुनस्तृतीयस्थाने वादिकृतस्य प्रतिसमाधानस्य करणं स्यात् । तथाकरणे टीकैव स्यात्, न वृत्तिः । पूर्वं च उक्तं '**शनैः सूत्रवृत्त्योः**' इति । तत आक्षेपाद्यकरणेन प्रयोजनेन पूर्वपक्षाद्यनुत्थापनं, तदर्थं च संवृतसौत्रविवरणम् । ततो हेतोः सूत्रानुसरणम् । ततो हेतोरुत्तमप्रयोगः । उपपादयामीति हि सूत्रम्, तदनुसारात् तु वृत्तौ प्रत्यभिज्ञापयामीति । एतच्छायाप्रसङ्गादविलक्ष्यात् परितुष्येयमित्यपि प्रयोगः '**इच्छन्**' इत्येतत्सूत्रांशभञ्जनावसरेऽपि । एवमुत्तमपुरुषनिर्देशस्य प्रधानं प्रयोजनमाख्याय अन्यदपि आह '**सूत्रकार एव**' इति । प्रणामाकरणप्रमाणान्तरज्ञापितेऽर्थे उपोद्बलकोऽपि अयं निर्देश इति अन्वाचयसूचनार्थश्चकारः । एतच्च पूर्वमुक्तमेव ॥ १ ॥

## ॥ आदिवाक्यम् ॥

मौलिकदृढप्रमाणप्रभावप्रकाशमानतायोगिनि वस्तुनि व्यवहारसाधनरूपं प्रत्यभिज्ञानं, मोहापसारणफलं कामं केवलं निरूप्यतामपूर्वप्रकाशस्य सिद्धिरूपत्वात् । यत्र तु अवभास एव न वृत्तः, तत्र मौलिकं तावत् प्रमाणं वाच्यम् । तत्र तु निरूपितेऽपि यो मोहः स्यात्, तदपासनाय भवतु व्यवहारसाधनमिति मात्रशब्दाभिप्रायः । तेन '**सैव**' इत्यत्र एवकारः प्राथम्यं द्यो-

तयति । सा तावत् प्रथमं साध्या, तत उच्यतां प्रत्यभिज्ञेति ।
व्यवहारसाधनविषयताया व्यापकमवभासमानत्वं, तद्विरुद्धं च
अनवभासमानत्वमत्र उपलभ्यते इति व्यापकविरुद्धोपलब्धिः ।
ईश्वरो न व्यवहारसाधनप्रमाणमात्रविषयः कथंचिदपि अनव-
भासमानत्वात् । नहि ईश्वरो विश्वत्र कस्यचित् कदाचित् भासते
इत्याशयेन आह **'ननु'** इति **'सिद्धसत्ताकस्य'** इति **'स-**
**त्तैव न सिद्धा'** इति च । सिद्धत्वमत्र प्रकाशमानत्वम् ।
**'सैव'** इति सत्ता साध्या । अपूर्वप्रकाशनरूपं तत्र ज्ञानं यतो
भवति, तादृक् प्रमाणं वक्तव्यम् । तथाच उद्योतकारादयः ईश्वर-
सिद्धिरित्येवं व्यवहारमकार्षुः । अथ चेतनतया कर्तृतया च
सामान्यरूपेण सावयवत्वादिधर्मकतनुभुवनादिकर्तृस्वरूपमवभा-
तम्, एवं व्याप्तिग्रहसमये एव सामान्यात्मना सर्वं प्रतिभात-
मिति । विच्छिन्नस्तर्हि अनुमानस्य अपूर्वप्रमेययोगः,—इति ईश्वरे
कोऽतिशयः । अथ तत्कालापरिच्छिन्नमयोगव्यवच्छेदादि अपू-
र्वमत्र प्रमेयम् । प्रकृतेऽपि तर्हि तन्वादिनिर्माणोचितज्ञानक्रि-
यासामर्थ्यायातमेव प्रमेयमिति ईश्वरसिद्धिरेव उचिता, न ईश्व-
रप्रत्यभिज्ञा । एतत् निराकरोति **'न'** इति । अत्र हेतुः **'सर्वा-**
**त्मरूपतया'** इति । अवश्यं हि किञ्चित् साधयता किञ्चित्
सिद्धमुपगम्यम् । ततो हि साधयितृसाधनधर्मिप्रकाशोऽनपह्नव-
नीयः, अन्यथा सर्वं स्यादिन्द्रजालम्, तदपि वा न स्यात् । किञ्चित्
चेत् सिद्धं, तत् तर्हि प्रकाशमानं प्रकाशाव्यतिरेकि । प्रकाश
एव च विश्वात्मा परमेश्वरः इति सर्वस्य यावदसावात्मरूपः
पारमार्थिकः स्वभावः, तावत् यत् किञ्चित् सिद्धमङ्गीक्रियते;
तत्सिद्धिरेव तस्य ईश्वरस्य सत्त्वसिद्धिः सद्भावप्रकाश इति
किमपूर्वमप्रकाशितं प्रकाश्यतामिति उचितैव ईश्वरप्रत्यभिज्ञावा-



चोयुक्तिः । एवं यत् आशङ्किते पूर्वपक्षे संक्षेपेण उक्तम् **'एतत्**
**न'** इत्यादि, तत् वस्तु आह **'श्लोकेन'** इति । सूत्रवक्ष्यमाणव-
स्तुपिण्डीकरणमिह टीकायां श्लोकावतारणमिति शैली टीकाका-
रस्य । ननु सूत्रे **'स्वात्मनि'** इति शुद्धमुपात्तम्, वृत्तौ तु
**'सर्वेषाम्'** इति संबन्धिपदं यदुक्तम्, तत् कुत आनीयेति
आशङ्कमान आह **'स्व'** इति । आत्मशब्दोऽपि यद्यपि

'आत्मा वस्तु स्वभावश्च..................।'

इति दृष्ट्या स्वभाववाची संबन्धिशब्दः, तथापि वैशेषिकादि-
दृशि स्वतन्त्र एव आत्मपदार्थ इति शङ्केतापि; स्वशब्दोपादाने
तु स्वभाववचनता अस्य गम्यते । ननु स्वो यदि आत्मीयः, तदा
आत्मनो यः संबन्धी स्वभाव इति आत्मार्थः प्रकृतिवाच्यः
स्वभाव एवेति स्वभावस्य स्वभावः, इति न किञ्चिदुक्तं स्यात् ।
सत्यम्, किन्तु आत्मपदे उच्यमाने पृथगेव आत्मपदार्थो घट-
स्थानीयः प्रतीयते । स्वशब्दे तु स्वं वस्त्रमित्यत्र यथा अनन्यल-
ग्नत्वं प्रतीयते आत्मीयं वस्त्रमिति, एवमात्मीय आत्मेति ।
कस्य आत्मीयः, इति अवतरति अन्याकाङ्क्षा, नच कश्चिदुपात्तः
इति सर्वस्य आत्मीय आत्मेति गम्यते । तत्र आत्मीयार्थेऽपि
य आत्मार्थः, स पृथक् सृष्ट एव उपदेश्योपदेशोपायतया ।
अन्यथा हि न संबन्धिप्रतीतिर्भवेदिति सर्वेषामात्मनीत्यादिश-
ब्यान्तरसमाश्लेषेऽपि संयोगित्वादिसंबन्धान्तरशङ्का न निवर्तेत ।
आत्मीयत्वे तु अव्यभिचरणीयत्वमनन्यापेक्षत्वं स्वविश्रान्तत्वं
गम्यते इत्येतदर्थं सृष्ट एव भेदेन आत्मा उपदेशस्य प्रकृतिसि-
द्ध्यङ्गस्य अन्यथानुपपत्तेः । सर्वस्यात्मेत्यपि हि सृष्ट एव भेदः
स्वभावव्यतिरेकिणः सर्वस्य अभावात् । सर्वत्र हि शब्दज्ञानानु-
पातिनि वस्तुशून्ये विकल्पे अयमेव क्रमः । वस्तुशून्यत्वं च

पारमार्थिकरूढप्रत्ययापेक्षया उच्यते, सृज्यमानत्वेन तु वैकल्पिकं वस्तु एवेति वक्ष्यामः

'स्वातन्त्र्यामुक्त................ ।' (१।४७)

इत्याद्यन्तरे । तदयं स्वशब्दः संबन्ध्याकर्षणमात्रोपयुक्तो यं संबन्धिनमाकर्षति, स नियतस्तावत् न भवति अनुक्तत्वात् अप्रकरणापन्नत्वाच्चेति सर्व एव प्रतीयते । **'अनुपादानात्'** इति शब्देन प्रकरणेन वा । **'सर्वान्तर्भावात्'** इति चोद्यम् । **'यद्यसौ'** इति सिद्धान्तः । तत्र चोद्ये तावदयमाशयः—अनियतत्वात् संबन्धिनो निखिल एव जडश्च अजडश्च भाववर्गः प्रतीयते । तत्र अजडानां स आत्मा चैतन्यलक्षण एकः, कदाचित् शक्योऽभिधातुम्, जडास्तु अमी पृथक्परिच्छिन्नस्वरूपाः कथमेकात्मानः पृथक्स्वभावानामेकस्वभावत्वविरोधादिति । उत्तरस्य तु अयमाशयः—इह स्वात्मेति स्व आत्मनः स्वसामान्यलक्षणार्थक्रियाकारित्वादेरन्यापेक्षस्य संबन्धी आत्मीयोऽनन्यापेक्षोऽनौपाधिको भवति । तत्र ये जडास्ते यावत् जडाभिमताः, तावत् सदसत्त्वमपि एतैर्दुर्लभमात्मनि, का तु कथा नीलपीतसुखदुःखादित्वस्य । तथाहि यः स्वात्मनि सन्, स यदि असन् स्यात्, किमस्य दुष्येत् । तथैव अर्थक्रियां कुर्यादिति चेत्, करोति इत्येवं यदि स्यात् तत्किं स्यात् । तथैव प्रकाशेतेति चेत्, प्रकाशमानता किमस्य स्वमहिमा । ओमिति चेत्; मम प्रकाशते, चैत्रस्य प्रकाशते इति कथं संगच्छताम् । प्रातिपत्त्री सा प्रकाशतेति चेत्, प्रतिपत्तुर्यद्यसौ, तत् तस्य सा किं भवतु । तद्वशात् स प्रकाशत इति तु अपूर्वा युक्तिः । एवं हि श्वेतवशात् पीतं श्वेतते इत्यपि स्यात् । यदि अस्य आत्मीयं, तद्वशादन्यत्र न भवति नीलतेव पीते; तथाच प्रकाशरूपता प्रमातुरा-



त्मीयेति कथं सा नीले भवेत् । तत्र भवनस्य तादात्म्यं व्यापकमन्यथा नीलेऽपि पीततेत्यादि सहस्रशाखमासमञ्जस्यं दृश्यमानताद्रूप्यव्यापकस्य नियमस्य विरुद्धं प्रसज्येत । तस्य तादात्म्यस्य विरुद्धमन्यात्मत्वं, तदेव च अन्यदीयत्वम्; अन्यथा अन्यस्य तत्संबन्धीति कथम् । नच इदं नीलादेः प्रकाशमानत्वं विना किञ्चित्, निजजीवितमस्तीत्यनपह्नवनीयप्रकाशमानताबलात्, प्रमातृप्रकाशतादात्म्यमस्य अङ्गीकार्यमिति, बोधात्मान एव नीलादयोऽपि, ननु एषामन्यत् वपुरिति तेषामपि स एव स्वात्मा महेश्वर इति इष्टमेव । कः प्रसङ्गार्थः । अनिष्टापत्तिर्हि प्रसङ्गः । तदेतदाह **'आस्तां लोष्टादिः'** इति । तस्य हि स्फुटं प्रकाशमानस्य को बोधात्मतायां विवादः । अभावोऽपि यस्तुच्छो न किञ्चिदित्येवं कस्यापि संमतः, सोऽपि यावदेवमिति न चकास्ति; तावत् भावादन्यत् स इत्येतदेव कुतो भवेदिति । बुध्यमानश्चेत्, तदस्यापि महेश्वर एव स्वात्मा । अथ अबुध्यमानोऽसावभावः, तर्हि न कश्चिदसाविति कस्य असौ तदानीं स्वात्मा प्रसज्यते । एवं नीलादेरपि अबुध्यमानस्य कः स्वात्मेति बुध्यमानपदम् । एतदुक्तं भवति—यदा चोद्यं क्रियते नीलतदभावादेरपि स्वात्मा महेश्वरः प्रसज्यते इति, तदा बुध्यमानत्वस्य अङ्गीकार एव उत्तरमन्यथा निराश्रयं चोद्यमिति । ननु एवं महेश्वरश्चेत् नीलस्य आत्मा, पीतस्यापि स एवेति, नीलमिदं, पीतमिदमिति कुतो विभाग इति । आह **'सर्वमेव'** इति । यस्मात् चिद्रूपस्य आत्मनः प्रकाशरूपस्य स्वस्वभावस्य सर्वमेव वेद्यं शरीरमिव । यथा शरीरं वेद्यमपि अहमित्यवष्टम्भादनुपचरितात् चिद्रूपानुविद्धं, तथैव विश्वम् । नहि कम्बलादिवत् देहे उपकरणत्वादुपचरितता अहंभावस्य लोके भासते पृथगात्ममानिनामपि ।

एवं च चिद्रूपतानुवेधात् यथा संवित् विश्वरूपा वक्ष्यमाणनयेन, तथा नीलपीतादिभावावली अपीति अनुमिमत एव अस्माकं विभागः। एतत् वेदान्तवादिग्रन्थवचसा संवादयति **'प्रदेशोऽपि'** इति। यथा घटाकाशं पटाकाशमिति आकाशस्य घटादियोगेन कल्पिताः प्रदेशाः, आकाशस्य यावद्रूपं विभुत्वादि तेन अनूनाधिकाः; एवं ब्रह्मणो बृहत्त्वेन व्यापकस्य बृंहकत्वेन विश्वसृष्ट्याप्यायनविधायिनः प्रकाशरूपस्य स्वशक्तिप्रत्यवभासितनीलाद्युपाधिकृता ये प्रदेशा नीलप्रकाशः पीतप्रकाशः इत्यादयः; ते ब्रह्मणि यत् सार्वरूप्यं, सर्वशक्त्यविभागवृत्तित्वं, यच्च प्रकाशमानतामात्ररूपेण प्रतियोगिवैकल्यादपोहनीयाभावे विकल्परूपत्वायोगादप्रतियोगिसंवेदनरूपमविकल्पत्वम्, तत् प्रत्येकमनतिक्रान्ताः, ततो मनागपि अनधिकाश्च। द्वयमन्योन्यं हेतुहेतुमद्भावं द्योतयति। ननु एवमविभागरूपता अस्तु युक्त्युपनिपतिता, यस्तु अयं नीलं पीतमिति वेद्ये, चैत्रोऽहं मैत्रोऽहमिति वेदके विभागप्रतिभासः, तत्कथं समर्थयामहे इति। आह **'केवलम्'** इति **'जडः'** इति। जडत्वेन अन्याधीनप्रकाशतया भासमान इत्यर्थः। **'वक्ष्यमाणा'** इति

'द्वेया त्रयीयं प्राणादेः प्राधान्यात्कर्तृतागुणे।' (३।२९)

इत्यत्र वक्ष्यते। परमेश्वरप्रकाश एव स्वमायाशक्त्या अतिदुर्घटकारित्वस्वातन्त्र्यरूपया, स्वरूपमनाच्छादितमपि आच्छादितमिव अवभासयति। तत्र अनाच्छादनांशप्रधानतायां सदाशिवेश्वररूपतासमावेशदशा, आच्छादनभागावभासप्रधानतायां मायाविजृम्भारूपा संसारिदशा; ततो नीलमित्यादिवेद्यभेदः, आभासमानकायभेदोपलक्षितबुद्धिप्राणपुर्यष्टकाद्युपाधिभेदारूपितचैतन्यच्छायाकृतो वेदकभेदः इति भेदविजृम्भायां मायाप्रमातृत्वे



कायो मूर्धाभिषिक्तः, तथा च तदुच्छेदादेव प्रभृति मोक्षव्यवहारस्तत्र तत्र 'वैकरण्यं मोक्षः' इत्यादौ। तत्प्राधान्यमस्य सूचयति **'कायोऽपिवा'** इति। **'अयम्'** इति पूर्वं प्रकाशरूपत्वात् चिद्रूप एव स्वातन्त्र्यात् वेद्यतां नीत इति लोष्टादिवदेव वेद्य एव सन्ननात्मभावादपहस्तनेनैव अहमिति संवेदनतादात्म्यमधिशायितः। **'आत्मनि निमज्ज्य'** इति। नीलादिर्नीलरूपत्वे प्रकाशं निमज्जयति, येन प्रकाशबलात् नीलमिदमिति प्रकाशः परिमितीभवति; येन वेद्यधर्मत्वेन प्रकटोऽयमर्थो दृष्टः प्रमेय इति भाति। काये च निमग्नः सोऽहमिति प्रकाशः परिमित उपपत्तिदेशभेदेन अतीतादिकालकलनया रुद्रक्षेत्रज्ञतदवान्तरप्रकारप्रमातृरूपेण स्वरूपभेदेन अन्यदेशकालस्वरूपविविक्तत्वेन भाति। **'यदा-तदा'** इति निपातौ वाक्यार्थस्वरूपपरामर्शे। यत् परिमितीकरणम्, एतत्संसारोत्थापकं मोहनं मायाव्यापारः। **'तदभिप्रायेण'** इति संसारमोहमभिप्रेत्य अनुसंधत्ते विषयत्वेन यस्तेनोक्तं गुरुणा तत्रभवता वासुदेवेन अर्जुनं प्रति। तदनुसन्धानेन तद्विवक्षयेति हेतुतृतीया वा।

'ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेह तान्विद्धि·····················॥' (७।१२)

इत्यनेन सर्वमिदं वेद्यरूपं वेदकरूपं च प्रकाशतदभावतदुभयसंवलनामयतया विचित्रमहमितिशुद्धस्वभावादेव संवेदनात् प्रसृतमिति अभिधाय प्रसरस्य भेदावभासप्राधान्यात् अहंप्रकाशस्य च भिन्नस्वरूपदेशकालोत्तरत्वात् तत्र प्रसरे रूढो मयि न रूढो भवति। प्रसरस्य हि मद्रूपत्वाच्छादनभाग एव प्राणाः। मयि तु रूढिं विना ते न किंचित् स्युरप्रकाशत्वापत्तेः, नतु तैर्विना स्वतन्त्राहंप्रकाशस्य खण्डना काचित्। संसारमोहाभिप्रा-

येणैव च सर्वब्रह्मणोः किं विधेयं, किमनुवदितव्यमिति विचारयितव्यम् । तत्र यद्यपि पूर्वसिद्धं ब्रह्म, तदनूद्य अपूर्वत्वेन, सर्वं तु अस्य वेद्यवेदकरूपं विधेयं, ब्रह्मैव सर्वं भवति, नान्यत् किंचन सर्वं, ब्रह्म किल सर्वशक्ति,—इति विध्यनुवादौ; तथापि परस्य उपदेश्यस्य ब्रह्म न किंचित् सिद्धम् , येन अनूद्यते। सर्वं तु अस्य वेद्यवेदकरूपं सिद्धमिति तदनूद्य अस्य ब्रह्मतादात्म्यमुच्यते । यत् सर्वमिदं दृश्यते, तस्य अन्तस्तमां स्वरूपमनुप्रविश्य विचार्यमाणं प्रकाशपरामर्शरूपमेव अवशिष्यते । तत उक्तं

'सर्वं खल्विदं ब्रह्म ।' ( छा० ३।१४।१ )

इति । तत एव सर्वभागस्य यदिदं शङ्क्यते नानारूपं, तत् निषेधति

'..................नेह नानास्ति किंचन ।' (छा० ३।१४।१)

इति । इह दृश्यमाने सर्वशब्दस्य व्यपदेश्ये नाना यत् प्रकाशेन सह न भवति, प्रकाशतादात्म्येन न वर्तते, तत् किमपि रूपं नास्ति अप्रकाशमानस्य शपथैरपि अप्रत्येयत्वात् । शपथोऽपि हि तत्प्रकाशताकार्यो भवति । ननु यदि भेदांशप्राधान्यावभासः संसारः, तर्हि तद्भित्तिभूतस्य प्रकाशाभेदभागस्य प्राधान्ये किमिति।आह **'कर्तृतायाः'** इति **'वैश्वरूप्यम्'** इति। शुद्धस्वरूपस्पर्शप्रारम्भात् सदाशिवेश्वररूपतया वैश्वरूप्यं यथा इह ग्रन्थकार आह,तथा अन्योऽपि आह,तं प्रकारमन्योऽपि आहेति वा,तेन वा अस्मदुक्तेन न्यायप्रकारेण अन्योऽपि एतदाह **'तदाह'** इत्येवं **'तथा चाह'** इति वचनान्तरेण संवादनं वचनान्तरस्य वा सजीवताकरमनन्यथार्थत्वं भूयोभिर्वचनैर्दर्श्यते। **'माम्'** इति अहंरूपमनन्यापेक्षप्रकाशमनन्यविमर्शमयं स्वप्रकाशविमर्शं प्रकाशं **'सर्वत्र'** सर्वोपश्लेषेण **'यः पश्यति'** नीलमिति हि प्रकाशमाने



नीलं प्रकाशते इतीयदहं प्रकाशे इति प्रकाश एव प्रकाशितो भवति, प्रकाशं च सर्वत्र यः पश्यति, न प्रकाशस्य देशे काले स्वरूपे वा खण्डनात्मा व्यवच्छेदोऽस्तीति, **'मयि'** इति आत्मसंवेदनप्रकाशे च तदविनिर्भक्तं सर्वं प्रकाशितं भवतीति, तथा नीलादिकमात्मप्रकाशभित्तौ रूढं चकास्तीति यः पश्यति। **'तस्य'** अहमिति प्रकाशो **'न प्रणश्यति'** न खण्डनाविकारमेति प्रकाशरूपात् न च्यवते । **'अहं'** च तस्य विश्वेश्वररूप एव आत्मा **'न प्रणश्यामि'** न आच्छादितो भवामि, । तथा सोऽपि एवं द्रष्टा ममेति शुद्धप्रकाशात्मनः परमेश्वरस्य न प्रणश्यति आच्छादितो न भवति, तत्र परमेश्वर एव भातीति । अनेन चैत्रात्मना आच्छादितस्वस्वभावावभासने निर्भासे इत्येवं स प्रत्यगात्मतयापि अवियुक्त ईश्वरमेव आत्मानं मन्यते । परमेश्वरश्च तत्र प्रच्छन्नतयैव चकास्ति, येन परमेश्वरोऽत्र प्रसीदतीति व्यवह्रियते । सर्वेषु भूतेषु परमार्थरूपेषु आत्मा प्रकाशस्तिष्ठति विशेषेष्विव सामान्यं, सर्वाणि भूतानि आत्मन्येव तिष्ठन्ति धर्मा इव धर्मिणि,—इत्येवं सर्वमुखेन ब्रह्ममुखेन वा समव्याप्तिककृतकत्वानित्यत्वन्यायेन विध्यनुवादयोर्नास्ति वैचित्र्यम्। वैचित्र्येऽपि वस्तुभेदः प्रवेशवैचित्र्यादधिकः । तेन **'मयि'** इति **'सर्वं ब्रह्म'** इत्युपक्रमः, **'वासुदेवः सर्वम्'** इतिमध्यः, **'सर्वभूतस्थम्'** इत्यन्तोऽयमद्वयोपदेशो मन्तव्यः । एवं सर्वभागे प्रकाशभागे च स्थिते गुणप्रधानताकृतं संसारासंसाररूपत्वं प्रतिपादितम् । गलिते तु समस्ते भेदलेशे परमशिवदशा न इह वितानिता तावत् सर्वात्मरूपतामुखेन तत्प्रत्यभिज्ञानोपक्रमात् । ननु आत्मशब्द एव

'आत्मा वस्तु स्वभावश्च.................. ।'

इति स्थित्या स्वभाववाची व्याख्यायिष्यते किं स्वग्रहणेन इति ।

आह 'स्वशब्दः' इति । शास्त्रतस्तावत् काणादादिदर्शनप्रसिद्ध एव आत्मा लभ्यते; लोकेऽपि स्वभावो नीलादीनां नीलादिरूप- तैव आत्मेति प्रसिद्धः। नीलमात्मना अर्थक्रियाकारिणा सत् । न पररूपेणेति तदुभयमपि स्वशब्देन अव्यभिचरणीयं प्रतिष्ठास्था- नत्वादपर्यनुयोज्यं स्वं रूपमभिदधता निरस्यते । ननु किं तत् तथाभूतं रूपम् । तथाहि सर्वभावानां परमाण्वादि वा प्रधानं वा सत्ता वा शून्यं वा वाद्यन्तरैरुपगतं जडमेव स्वरूपम् । तद्विशेष्य वक्तव्यं चिद्रूपे स्वात्मनीति । आह 'तस्य च' इति । 'ज्ञातरि कर्तरि' इति हि उक्ते ज्ञानक्रियास्वातन्त्र्यमनन्यवदनावलोकि जानामि–करोमीत्येवंरूपं स्फुरत्येव, चिद्रूपे इति तु उच्यमाने नीलरूपे इत्येतत्तुल्यं स्यात् । ततश्च पुनरपि चिद्रूपत्वं ज्ञातृकर्तृ- त्वयोः संक्रामयितव्यम् । 'इयमेव' इति इदन्ताव्यपदेशनिका- रमात्रत्वात् तावत् रक्षणीयः स्वात्मा । तत्र ज्ञाता कर्तेत्यप्युक्तेर्ब- हिर्विश्रान्तिधामतात्मा विधेयत्वेन इदन्तैव उन्मीलेत् । जानाति करोतीत्यपि श्वेतते नीलतीतिवत् ताटस्थ्यम् । जानामीत्यपि कल्पिता अहन्ता । नच सर्वथा रक्षितुमिदन्ता शक्या अनुप- देश्यताप्रसङ्गादिति यावद्गति सा रक्षणीया । तत्र भूतवि- भक्तियोगे बहिः प्राधान्यन्यक्कारोऽन्तारूपविश्रान्तेरहंभावस्पर्श- रूपो भातीति संबन्धविचारे वक्ष्यते इति एवकारार्थः । 'श्रेयसि' इति अनूद्यमानपरमतोपक्रमेऽपीत्यर्थः । 'अत एव' इति । यतो ज्ञाने कृतौ च स्वातन्त्र्यमेव चित्त्वम् , ततः कर्तृशब्देन अव्युत्पन्नेन क्रियासामान्याभिधायिकरोतिप्रकृतिकेन वा क्रियाविशेषोपाधिसंबन्धकालुष्यानारूषितं स्वातन्त्र्यमभिद- धता तद्वित्तिलग्नं ज्ञानस्वातन्त्र्यं श्लेषेण च निर्मातृत्वस्य तदवि- नाभावितां दर्शयितुं यत्नपरिगृहीतेन, तत्पूर्वकं निर्माणे स्वातन्त्र्य-



मुक्तम् । 'अन्यथा' इति । यदि एष शुद्धस्वातन्त्र्यप्रतिपादनाभि- प्रायो न स्यात् । तत् ज्ञानपूर्वकं निर्माणं दृष्टम् । संविद्रूपस्य कार- णत्वं दूषयिष्यते । नच तत् निर्माणमित्येवं 'ज्ञातरि' इति प्राक् निर्दिश्येत । ननु एवं जानामि करोमीति उचितप्रतिभासे स्वतन्त्रै- करूपे संवेदनात्मनि तत्त्वे कथमधिकरणभावः । पारतन्त्र्यप्राणितं हि कारकान्तराणां तत्त्वम् । मत्तो विश्वं मयि विश्वमित्यादावपि हि सृष्ट एव अस्मदर्थः, पारमार्थिकमहन्तारूपं तु मत्तो मयि विश्वमिति प्रकाशे विमृशामि चेत्येवंरूपम् । तत् कथं सप्तमीत्या- शङ्क्य आह 'परमतेन' इति । परो हि तद्विषयं साधकं बाधकं वा अभिदधत् सिद्धिम्–अस्तीति प्रकाशव्यवहाररूपां, निषेधं वा–नास्तीति तच्छून्यवस्त्वन्तरप्रकाशव्यवहरणरूपं कर्तुमुद्युक्तः । स एवं कुर्वाणः प्रमाणस्य तत्कृतयोश्च सिद्धिनिषेधयोर्विषयतया अधिकरणमीश्वरं प्रमेयं परतन्त्रमेव अभिमन्यते । स एवं मन्वा- नोऽनूदितः, जाड्यं तु अस्य विधीयते । परमतेन सिद्धिविषयत्वं सूचितं, नहि उपपद्यते तत् प्रमात्रेकरूपत्वादिति अक्षरसंगतिः । ननु वृत्तिग्रन्थे कथं न सप्तमी श्रुतेति । आह 'वृत्तौ तु' इति 'स एव' इति । अनुपपद्यमान एव सन् विषयभावो विवरीष्यते षष्ठ्या । तामेव सिद्धिं संबन्धित्वेन अन्तःप्रवेश्य षष्ठ्या स एव विषयभावः क्रियाव्यवधितिरोधानतः स्वभावकल्पतां नीत इति निकटीभाव्यते सिद्धान्तः । कथं स्वभावभूतता । आह । प्रमातृ- मात्रताया यदुपपादनं पूर्वग्रन्थेन 'सर्वार्थसिद्धि' इत्यादिना कृतं, तेन । अनुपपद्यमानता कथं विवृता । आह । दूषणेन 'जडानामेवोद्यमः' इत्यनेन । एतदुक्तं भवति—सिद्धेरीश्वरो विषय इति वदन्ननुयोज्यः किमसौ सिद्ध्यन् प्रकाशस्वभावः, न वा । उत्तरपक्षे नैव सिद्धः स्यात् । आद्ये पक्षे तत्स्वभावस्य किं

साध्यते । पूर्वमतथेति चेत, सिद्धौ तर्हि अस्य स्वरूपं प्रत्युत लुप्येत । नीलादयोऽपि पृथक् न केचन प्रकाशादिति । तदयं सप्तम्यर्थः इदन्तामन्तर्धाप्य स्वयमप्रसृतो ज्ञातृकर्तृरूपमहंप्रकाशविश्रान्तमेव करोतीति । 'सर्वेषां स्वात्मनः' इत्यादिवृत्तिवाक्यं यतो व्याख्येयतया उपक्रान्तं, ततः 'तेन' इत्यादिवाक्यान्तरे भाविनि प्रसङ्गादिह व्याख्यायमाने उचितो भविष्यत्प्रयोगो 'विवरीष्यते' इति । ननु व्याख्यारूढेऽपि वाक्ये षष्ठ्येव अस्ति, तत् भविष्यद्वाक्यषष्ठ्येत्र कथमेवमुक्तेत्याशङ्क्य आह 'स्वात्मन इति तु' इति । कर्तरि एषा षष्ठी । तत्कर्तृकं हि ज्ञानं करणं च, ननु संबन्धषष्ठी । एवं प्रसङ्गात् भाविवाक्यषष्ठीं विचार्य पूर्वोक्तं 'तस्य च चित्स्वभावत्वम्' इत्यादि यदुक्तं, तदुपसंहरति 'तदेवम्' इति । यदभिमतं प्रस्तुतं प्रतिपाद्यं ज्ञातृकर्तृताभ्यां लक्ष्यते शुद्धं स्वातन्त्र्यमिति, तत् वस्तु एवमिति उक्तेन 'इयमेव शय्या' इत्युपक्रमेण 'विवरीष्यते' इत्यन्तेन व्याख्यानन्यायक्रमेण निर्व्यूढमित्यर्थः । ननु प्रमातृतया ज्ञातृत्वमुक्तं, ननु कर्तृत्वम् । तत् प्रत्युत एकशब्देन पराकृतम् । तत् किमेतदित्याशङ्क्य आह 'क्रिया हि' इति

'तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया ।' (२।५३)

इत्यत्र अप्रतिहतं प्रकाशस्वातन्त्र्यमेव करणमिति वक्ष्यते । ननु एवं निर्मातृतापि श्लेषनिर्देशादिति किमर्थं वृथा व्याख्यातम् । एवं मन्यते—कुम्भकारादिप्रवृत्तिरूपमपि यत् भेदेन निर्मातृत्वं चकास्ति, तदपि प्रकाशमानताप्राणतया परमेश्वरशक्तिविजृम्भितं न अस्मात्कमत्यन्तमुपेक्षणीयमिति । अत एव एकशब्दोऽत्र न कर्तृतां निराकरोति, अपितु

'नियमस्तद्विपक्षाच्च कल्प्यते न विरोधिनः ।'



इति न्यायेन प्रमातृतात्मकस्वातन्त्र्यविरुद्धां प्रमेयतात्मिकां परतन्त्रतामेव । तथाच आह 'अत एव' इति । यतः 'स्वातन्त्र्यं चित्तत्वम्' इति पूर्वेण संबन्धः । प्रमेयत्वाभावे च न तत्र प्रमाणमुपयोगि उपपत्तिमद्वा । यतः प्रमातृत्वमेव कर्तृत्वं, न अन्यत्; अत एव प्रमेयता अस्य निरसिष्यते, ननु कार्यता । अन्यथा प्रमेयत्ववत् तस्य कार्यत्वमपि, प्रमाणवच्च कारणमपि निषिध्येतेति तु व्याख्यानं न तथा हृदयग्राहि । नहि कार्यत्वं परमतेऽपि अस्ति भगवत इति । ननु यस्य प्रमातृतैव रूपं, तत् तावत् प्रमाणस्य न विषयः । यच्च एवं, तत् न व्यवहारपदं पिशाचवत् । तत् वरं स्वसंवेदनसिद्धत्वमस्य वक्तुमुचितम्, ननु सर्वथैव प्रमाणाविषयतेति । आह 'नच' इति । ननु पूर्वसिद्धतायामपि पूर्वमस्य प्रमाणविषयत्वं स्यात् यथा अग्नेः पूर्वसिद्धो धूम इत्याशङ्क्य ब्रूते 'एतदुक्तम्' इति । यदा यदा उपक्रमः, तदा तदा पूर्वसिद्धत्वमित्येषोऽत्र परमार्थः । तत् नीले इव न अत्र व्यतिरिक्तं प्रमाणं, नापि चित्तचैतन्यवत् स्वयंप्रकाशत्वेऽपि नूतनापूर्वप्रकाशरूपत्वेन स्वसंवेदनम् । इदन्तादेशकालस्वरूपनियमारूढं प्रथनं यस्य नीलसुखादिकस्य, तस्य भावस्तन्निषेधोपलक्षितः सन् प्रमाता प्रकाशते च, प्राकाशिष्ट च, प्रकाशिष्यते चेति यावत् । अत एव पुराणः पूर्वसिद्धश्चेति न पर्यायौ, पुराणोऽपि हि न पूर्वसिद्धः पिशाच इव, पूर्वसिद्धोऽपि न पुराणो धूम इवेति उभयोक्तिः । 'कविं पुराणम्' इति,

'पुराणं तत्परं तेजो येनाभिनवतेजसाम् ।
ह्रियते चार्प्यते तेजस्तज्ज्योतिर्भैरवात्मकम् ॥'

इति इतिहासरहस्यादावुक्तं संवादयति सम्यक् भूतमभिमतं पूर्णमर्थं जल्पयति; अथवा पूर्वसिद्धतैव आगमेषु पुराणता, ननु

आकाशादिवत् चिरन्तनतामात्रं प्रकाशावेशशून्यं, तेन संवाद-
यति समं तुल्यमर्थमभिधापयतीति । '**एतच्च**' इति पूर्वसिद्ध-
त्वमस्य प्रमातुर्भवति । सर्वे तस्मात् प्रमातुरन्ये येऽर्थाः तेषां
या सिद्धिः प्रकाशमानता, तस्या यतः स प्रमाता निबन्धनं वि-
श्रान्तिस्थानं विमर्शरूपतया समाश्रयः; तेन वृत्तौ '**सर्वार्थ**'
इत्यादि पूर्वसिद्धत्वे हेतुत्वेन व्याख्येयमित्याशयः । ननु सिद्धिः
संवेदनरूपा, तस्याश्च किमाश्रयेण अन्येनेति । आह '**यत्किञ्चित्**'
इति । तथात्वे स्फुरद्रूपत्वे । दार्ढ्यमचलता । नीलमिति यत् स्फु-
रितं, तत् न पीतादि, नच न नीलं, नापि न स्फुरितमिति सिद्धि-
र्वस्तुनः । '**कंचित्**' इति प्रमातारम् । '**एवंस्वभावत्वात्**'
इति मम नीलं स्फुरति, चैत्रस्य नीलं स्फुरतीति हि स्फुरणम्,
नतु नीलं स्फुरतीत्येतावत् । अत एव सौगतैः सन्तानरूपो
विकल्पो वा अवश्यमेकः प्रमाता कल्प्यते अनपह्नवनीयत्वादेवं-
स्फुरितस्य । '**अत एव**' इति यत एवं स्फुरति दार्ढ्यमस्य ।
'**वक्ष्यते**' इति

'विश्ववैचित्र्यचित्रस्य समभित्तितलोपमे ।' (३०)

इति द्वितीयेऽधिकारे । ननु एतावता अस्तु प्रमाता अभिमतो
विकल्पो वा, विकल्पकल्पितो वा; पूर्वसिद्धस्तु कुत इत्यनुयोगे
कथयति '**ते ते च**' इति । नहि साध्यता नाम साध्ये निरुपाख्ये
पदमुपनिबध्नाति, अपितु ममेदं साध्यमिति साधयितरि । सा-
धयितेति अहमात्मानं निराकरोमीति हि स्वनिराकरणेऽपि
प्रमातैव प्रपतति, आत्मरूपो निराक्रियते परं विकल्पितो वा क-
ल्पितधर्मा वा । आक्षिप्ता अवश्यंभाविनीत्वेन अङ्गीकृता सिद्धिः
प्रकाशमानता येन । अहमात्मानं साधयामि, निराकरोमि, वा नीलं
वेत्यत्र हि यदहमिति, न तत् मूर्छास्वापकल्पम्, अपितु प्रकाश



एव अयम् । नच इदन्तया असौ भाति । तथात्वे हि पृथक्-
सिद्धिनिबन्धनार्थान्तरान्वेषणे अहमित्येतदेव कथं भवेत् । ननु
अहमिति विकल्पमात्रं, तत्र सन्तान एव कल्पितोऽध्यवसीयते ।
संवेदननिष्ठैव, नतु जडनिष्ठा, प्रमेयाणां, नतु कार्याणां, सिद्धि-
र्व्यवस्था । तत् संवेदनमात्रमस्तु किं प्रमात्रा कल्पितेन ।
भवतु वा असौ । तथापि संविदाधारमात्ररूपोऽसौ काणादवत्
संविद्रूपोऽपिवा विमर्शशून्य एव सांख्यवदस्त्विति संक्षेपेण
बौद्ध काणाद-कापिल व्यामोहं विहन्तुमाह '**संविन्निष्ठा हि**'
इति । प्रमेयाणां भावानां संविन्निष्ठा या सिद्धिरुच्यते,
सा न संविदि । आकारार्पणेन एकसामग्रीकतया जनकत्वेन
वा योऽनुप्रवेशो विषयतापत्तिः, तावन्मात्रतत्त्वा हि यदि
स्यात्, तत् पदार्थास्तावन्मया दृष्टाः, नतु तृणादिविशेषा
इति भेदेन प्रतिष्ठा न भवेत् । नहि पदार्थमात्रं किञ्चिदस्ति
पृथक् विशेषतः, यदाकारमर्पयेत् समानसामग्रीकं वा स्यात्
जनकं वा भवेत् विशेषस्यैव परमार्थसत्त्वात् । सदपि सामान्यं
तादात्म्यवृत्ति वा समवायवृत्ति वा न विशेषनिष्कृष्टं प्रतिभान-
योग्यं भवति । 'गोः पथ्यं क्षीरम्' 'गौर्न पदा स्प्रष्टव्या' इत्या-
दिबुद्धावपि परिदृष्टविशेषोल्लेखनप्रमुखतयैव सामान्यावभासः ।
यद्वक्ष्यते टीकाकृत् '**एकतममभिभानतश्शृङ्गम्**' इत्यादि ।
तत् मार्गेण धावतोऽप्रतिष्ठितमेव पदार्थतत्त्वम् । ननु का तर्हि
संविन्निष्ठा सिद्धिरभिमतेति । आह । तृणमिदमित्यादिर्यो विमर्शः,
स एव प्रकृतः परमार्थस्वभावो यस्य प्रकाशस्य; तत्र सम्यक्
बन्धनं विश्रमणं संविदि निश्चयेन स्थानमिति निष्ठा उच्यते । ननु
एवं पदार्थमात्रत्वेऽपि तर्हि संविदि निष्ठा व्याख्येयेति । आह
'**पदार्थमात्रत्वेन तु**' इत्यादि । पदार्थोऽयमित्यपि हि विमर्श-

एव । ननु एतावता निश्चयारूढता निष्ठा, नतु प्रमातृसिद्धिरिति ।
आह 'य एव च' इति । विमर्शः प्रकृतः स्वभावभूतो यस्य
तादृक् यः प्रकाशः संबन्धी, यत्र सम्यक् बध्यन्तेऽर्थाः, स एव
प्रमाता । यस्मादेव संवेदनमात्रातिरिक्तः प्रमाता सिद्ध्यति, तत
एव स परोक्षरूपस्तावत् नोपपद्यते काणादवदिति प्रमेयान्तरं
हेतौ समुच्चिनोति चकारः । ननु इयता तृणगतौ प्रकाशविमर्शौ स्तां
नाम, प्रमातुः पुनः कथं प्रकाशविमर्शरूपतेति । आह 'तस्य च'
इति । तृणमिति यो विमर्शमयः प्रकाशः, स यदि प्रमेयशरीर-
निष्ठितः; तत् ममेति प्रत्यवभासो न भवेदेव । स्वात्मन्येव हि
तदा तृणं स्फुरेत् । नच एवं, ततस्तृणमिदमिति प्रकाशविमर्शौ
तृणांशादुत्तीर्णौ संविद्भागमवलम्बेते । तयोश्च तत्रगयोः प्रकाश-
विमर्शनायोगे प्रकाशनविमर्शनापर्यवसाने वा पुनरपि न किञ्चि-
द्भवेत् । तेन तृणमिदमित्ययं विमर्शः स्वातन्त्र्ये विश्राम्यति यत्,
तदहमित्युच्यते । यथोक्तम्

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥'
(अ० प्र० सि० १'५ का०)

इति । एतदुक्तं भवति—संवेदनमविमर्शरूपं तावत् न किञ्चित् ।
विमर्शमयतायां स्वातन्त्र्यं प्रमातृता स्वप्रकाशत्वमिति कथं संवेद-
नमात्रं तदाधारमात्रं निर्विमर्शसंवित्पुरुषरूपं वा सिद्ध्येदिति ।
यो हि अपर्यन्तप्रकाशविमर्शात्मा अहमिति वेद्यावभासभित्ति-
भूतः, तस्य वेद्यतारूपेदन्ताभावात् देशकालभेदाभावे स्वरूपभे-
दाभावे च एकत्वं व्यापित्वं नित्यत्वं न यत्नान्तरमवलम्बते ।
नीलसुखादिप्रमेयव्यवहारः प्रकाशविमर्शात्मकसिद्धिनिबन्धनभू-
तप्रमात्रविनाभावी प्रमेयव्यवहारत्वात् । यः किल प्रकाशविम-



र्शात्मकसिद्ध्यधीनो न भवति, न असौ प्रमेयताव्यवहारो
बीजाङ्कुरादीनामिव कार्यकारणभावः । तेन उक्तरूपप्रमातृविर-
हेण भवनात् विपक्षात् प्रमेयव्यवहारस्तद्व्यापकनियमवत्त्ववि-
रुद्धानियमवत्त्वप्रसङ्गात् व्यावृत्तः प्रमातृविरहाभवनेन व्याप्यते
इति व्याप्तिसिद्धौ स्वभावहेतुः । 'पूर्ववत्' इति । यथा विम-
र्शमयप्रकाशाननुग्रहात् पूर्वमसौ न सिद्धः, तथा तदनुग्रहेऽपि न
सिद्ध एव भवेद्विशेषाभावात् । तेन हि तदानीमपि तस्य भावस्य
प्रकटतात्मकं रूपं जातं सर्वान्प्रति तथा प्रसङ्गात्; न कंचन
प्रति वा । ननु एतावता स्वसंवेदनं तत्र प्रमाणं सिद्धिं वितरतीति ।
आह 'नच' इति । प्रमेयत्वे हि स्वातन्त्र्यं विघटते तदैव तत्रैव
स्वातन्त्र्यपारतन्त्र्ययोर्विरोधात् । एवं प्रमेयं परतन्त्ररूपं विभिन्ने
स्वतन्त्रे प्रमातरि विश्राम्यत् प्रमेयं भवति । नच नीलं स्वात्मनि
प्रकाशविमर्शमये विश्रमयन् प्रमाता स्वात्मानं प्रकाशविमर्शान्तरे
विश्रमयेदनवस्थानात् । नच प्रकाशविमर्शान्तरमपि अस्ति स्वरू-
पदेशकालभेदासंभवात् । तदयं प्रमाता अनन्याधीनस्वाभाविक-
प्रकाशविमर्शमयः प्रमेयतां कथं यायात् । प्रमेये च प्रमाण-
चिन्ता । तदयं प्रयोगः—प्रमेयप्रतिष्ठानं यतः प्रमाता, ततः
प्रमेयो न भवति । प्रमेयताया व्यापकं पारतन्त्र्यं, तद्विरुद्धेन च
प्रमेयप्रतिष्ठानत्वं स्वातन्त्र्येण व्याप्तं पारतन्त्र्येऽनवस्थानात् प्रमेय-
प्रतिष्ठानायोगात् । तदियं व्यापकविरुद्धव्याप्तोपलब्धिः प्रमातरि
प्रमेयतां निषेधति । स्वप्रकाशोचित एव परामर्शोऽहमिति उच्यते ।
ननु दृष्टः प्रमातरि प्रमेयताव्यवहार उपदेशादौ । न असौ
प्रमातरि, अपितु नीलादिस्थानीये सृष्टे वस्त्वन्तरे एव । ननु च
देशकालरहितत्वमविच्छिन्नावभासत्वयोगात् विच्छिद्यावभासन-
कृतपुनरर्थप्राणत्वनिषेधपर्यवसिता सकृद्विभातरूपता प्रमातृत्वं च

कथं सृष्टे संभवेत्। कथं च अतो वाक्यात् प्रमातरि आत्मनि प्रतिपत्तिर्भवेत्। सत्यमेवम्, किन्तु स्वप्रकाशस्वभावोऽनन्याधीनाहमितिविमर्शमयश्च प्रमाता। तत्स्वातन्त्र्यादुदितो यो मेयः, स तमेव मूलत्वेन अवलम्बमानो दृश्यविकल्प्यैकीकारन्यायेन विकल्परूपया सृष्ट्या तत्स्वप्रकाशरूपैकीकारेणैव सृज्यते। तदेतदाह '**अपितु अहन्ताव्यवधानेन**' इति। ननु न प्रकाशते। आत्मशब्दात् किञ्चित् नापि व्यतिरिक्तमेव प्रकाशते, अपितु आत्मैव। अहंपरामर्शसोपानव्यवधानेन तु यथा गुणः क्रिया शृङ्गार इति शब्दैः गुणाद्यर्थः गुणोऽयं क्रियेयमिति हि विकल्पयेत् सृष्टम्। शुक्लः पटः पचतीत्येतत् विकल्पारूढवस्तुपर्यवसानेन सृज्यते। यो हि परामर्शो यत्परामर्शान्तरं नियमेन मध्ये सोपानीकृत्य परामर्शनीयसमारोहणेन कृतकृत्यतामेति, स तेन व्यवहित उच्यते। ननु समयशरणीकरणेन शब्दोऽर्थं ब्रूते। स च समयः सर्वत्र समानः, शब्दारूषितं च विकल्पकं विज्ञानमिति किं कस्य व्यवधायकम्। भवेदेवम्, यदि समयमुखप्रेक्ष्येव शब्दार्थव्यवहारो भवेत्। यावता संविद्रूपे प्राणितकल्पं यत् विमर्शरूपत्वं शब्दनात्मत्वम्, तत् तावदसाङ्केतिकमिति वितत्य वक्ष्यते। तत्संकेतानपेक्षसहजपरामर्शोचितं यदेतत् शब्दनं, तदेव संकेतकृतानां च शब्दान्तराणां च तदुपजीविनां च विकल्पान्तराणां तद्विकल्पविकल्पनीयतया सृष्टानां च आभासान्तराणां भित्तिकल्पत्वेन निर्भासमानं व्यवधायकमिति अभिधीयते। तथाहि आत्मा पर इति संकेते, स्वान्तःप्रवेशमिव बहिर्निर्गममिव, दृष्टिवक्राङ्गुलीक्रियाविशेषाविर्भावकं परामृशन् स्वभावो भाति। तत्र च 'अहं हं अम्हे हगें' इति 'एषः एहो एसो' इति च सोदराः संकेताः, आत्मा पर इत्या-



दयश्च तद्व्यवहिता इति युक्तम्। संकेतवदनावलोकनप्राणितमात्रशब्दार्थव्यवहारवादिनोऽपि लोकदृढनिरूढव्यवहारसिद्धसंकेतकैरेव शब्दैस्तद्विकल्पैश्च व्यवहिता एव सामयिकप्रायाः संकेता भान्ति। पचति, शुक्लः पट इति लोकनिरूढशब्दव्यवहारोपरि पाकः पचनं क्रिया, वर्णो गुणो धर्म इति पार्षदप्रायसंकेतोपजीवीनि शब्दान्तराणि। तत्रापि पर्षदोऽपि संकोचासंकोचादिना भेदाः। तथाच

'कृच्छ्रेणोरुयुगं व्यतीत्य.............।'

इति

'वक्त्रेन्दौ तव सति.................।

इति

'यत्त्वन्नेत्र.................।'

इति अभिलाषसंभोगविप्रलम्भभिन्ने, काव्यरसे 'विभावानुभाव' इत्यादि सामान्यलक्षणं 'रतिस्थायिभावप्रभव' इत्यादि विशेषलक्षणम्। तावता शृङ्गारशब्दस्य अर्थसंकेतनमिति लौकिकोदाहरणापेक्षिणि लक्षणवाक्यार्थे लोकनिरूढे पदवचनं पार्षदप्रायमिति सोदाहरणलक्षणवाक्यश्रवणप्रत्यये काव्यरसे शृङ्गारादिशब्दो निवेशितोऽपि तादृग्वाक्योचितपरामर्शव्यवहितामिव प्रतीतिं जिजनयिषुरपि नियतं किंचिद्वाक्यं लौकिकमनुसारयितुं सामर्थ्यमलभमानः सर्वापणस्वायत्तताप्रथनन्यायेन, प्रधानब्रह्मभावापन्नभवन्यायेन च विशेषोल्लेखसाध्यास्वादाद्यर्थक्रियायोग्यपरामर्शसंपादनासमर्थत्वात् साक्षादवाचक एव। यत्र तु परामर्शनीयनिष्ठविशिष्टरूपतास्थगनमेव परामर्शौचित्यस्य जीवितम्, तत्र समस्तभावनिर्भरात्मकसंविन्मयपरमेश्वरपरामर्शादौ वाक्यार्थे

पदवचनं वर्णवचनं तदंशांशवचनमिति वा न्यायेन प्रणवादिवी-
जपिण्डतदंशगतमेव प्रत्युत मुख्यं वाचकत्वम् । यथाह गुरुः ।

'तस्य वाचकः प्रणवः ।' (यो० सू० १।२७)

इति । तदलमवान्तरेण बहुना । स्थितमेतत्—गुणक्रियाजाति-
शब्देभ्यो व्यवधानेन अर्थप्रत्यय इति । स्मरणेऽपि न अर्थस्य
अपूर्वः प्रकाशः, अपितु पूर्वप्रकाशस्यैव उन्मीलनमिव । पूर्व-
प्रकाशश्च असावनुभव इति स्मृतावपि अर्थः अनुभवव्यवधा-
नेन भाति, न साक्षात् । तथैव इदन्तापरामृश्यो न साक्षात्
प्रमातेति साक्षात् प्रमातरि प्रमेयरूपता निषिध्यते । इदन्तानि-
र्देश्यो न प्रमाताप्रमेयत्वादिति प्रमातृत्वव्यापकस्य स्वातन्त्र्यस्य
विरुद्धेन पारतन्त्र्येण व्याप्तं प्रमेयत्वमुपलभ्यमानं प्रमातृनि-
षेधव्यवहारं करोतीति, व्यापकविरुद्धव्याप्तोपलब्धिः । ततश्च न
स्वसंवेदनं प्रमाणं प्रमेयशून्यत्वात्, प्रामाण्यव्यापकस्य प्रमे-
यवत्त्वस्य विरुद्धं तच्छून्यत्वमिति व्यापकविरुद्धोपलब्धिः । ननु
न कर्तृकर्मभावो वास्तवः । ततः किम् । ततः संविदः प्रकाशतैव
प्रमेयता घटवत् । प्रमातृता च सैव घटसंवेदनवदिति को वि-
रोधः । तत्र आह '**एवमपि**' इति । रूपद्वितयासिद्धौ शब्दद्वय-
मात्रमेतावता सिद्ध्येत्, न वस्तु किञ्चित् । नहि प्रकाशमानतैव
प्रमेयत्वम्, अपितु अन्याधीनसिद्धिकत्वमिति स्वाधीनसिद्धिकं
कथं प्रमेयं स्यात्, उपचारात् तु प्रमेयत्वं भवेत् । अपूर्वं हि प्र-
काशमानं प्रमेयं दृष्टमिति अपूर्वतात्कालिकप्रकाशमानतासाम्यात्
प्रमेयत्वमारोपितं भवेत् । प्रमेयत्वारोपणे च प्रमाणतापि आरो-
पितैव, न मुख्या । यद्यपि उपचरितोऽपि अयं प्रकारः उपचार-
बीजस्य धर्मभेदस्य निमित्तप्रयोजनरूपस्य अभावेन निराकरि-
ष्यते '**नापि प्रकाशात्मत्वात्**' इति, तथापि इयत् तावत्



परः प्रतिपद्यतामिति विवेकावतरणाय मुख्यत्वनिषेधं तावत्
करोति । तथाहि एकसामग्र्यधीनतया वा जनकत्वेन वा आका-
रार्पकभावेन वा यतो मुख्यं प्रमेयत्वम् । अत्र च क्रमादनेन
अस्य अस्मिन्निति अवश्यमन्यापेक्षा । विज्ञानदर्शनेऽपि

'यदाभासं प्रमेयं तत्………………।

इति स्थित्या व्यावृत्तिभेदोऽपेक्षणीयः । सच नीलबोधे नीलभागं
बहीरूपमिव बोधांशमन्तर्मुखं च स्वीकुर्वाणया कल्पनया उल्लि-
ख्यते । सुखबोधेऽपि साततासंवेदनताभ्यां स्यादपि व्यावृत्ति-
भेदः, नतु संवेदनांशे कथञ्चिदपि अयं पन्थाः समर्थनार्ह इति
औपचारिकं प्रमेयत्वम् । एवं संवेदनस्य प्रमामङ्गीकृत्य प्रमेयता
मुख्या न युक्तेत्यपि उपपादितम् । अधुना तु प्रमैव अस्य सिद्ध्य-
परपर्याया न युक्तेति उपपाद्यते—'**सा हि**' इति सिद्धिः । नी-
लसुखादेर्हि वास्तवी वा व्यावृत्तिसमुल्लिखिता वा विदूरतानव-
धानादिदशायां तस्यैव असिद्धस्य अन्यथासिद्धिः प्रमारूपा
रूपान्तरमुच्यताम् । सा च न स्वात्मनि विश्रान्ता युक्ता । पूर्व-
मपि स्वात्मनस्तथात्वेऽधुनैव सिद्धिरिति हि न स्यात् । ततश्च
स्वात्माव्यतिरिक्ते प्रकाशरूपे संविदात्मत्वेन अजडत्वादनन्यो-
न्मुखे स्वच्छतया अन्याकारधारिणि वासनावासितत्वेन अन्या-
कारनिर्भासवति वा भवन्ती सिद्धिः अन्यापेक्षैव प्रमेयत्ववदेव ।
'**सा हि**' इति सिद्धिः । '**परम्**' इति स्वात्मव्यतिरिक्तम् ।
आभासशब्दो वैभाषिकवैशेषिकपारमर्षसौत्रान्तिकयोगाचार-
विज्ञाननयेषु साधारणीकाकृता यथायोगं तदौन्मुख्यतत्प्रकाश-
तत्प्रतिबिम्बतदुल्लेखेषु प्रयुक्तः । '**स्वात्मा**' इति संवेदनम् ।
'**असिद्धस्य**' इति नीलादेर्हि असिद्धत्वमपि अस्तीति नीला-
दिरूपाधिका सिद्धिरुच्यतां कामम्, संवेदनस्य तु तद्रूपातिरिक्तं

न किञ्चित् सिद्धत्वं लभ्यते इति संवेदनं स्वसंवेदनसिद्धमिति परं शब्दसुभिक्षं न अर्थसंपदं व्यतिरेचयति । अस्तु तर्हि नीलवदेव अप्रकाशमानता बोधस्येति लब्धान्तरं वैशेषिकं प्रबोधयति 'तस्यापि' इति । बोधो यत्र बोधान्तरे विश्रान्त्या सिद्ध्यति, तत् चेत् न सिद्धम्; तर्हि वेद्यविश्रान्तस्य धर्मस्य प्रकाशमानत्वाभिधानस्य अभावे तदपि बोधान्तरं यदि न प्रकाशते, तदा न विषयः, नेन्द्रियम्, न मनः, न आत्मा, न बोधः प्रकाशते इति महान् मोहो हन्त जगद्व्यवस्थायाः । बोधान्तरकल्पनायां च अनिष्टात इयमेव वार्ता । ननु अस्ति अर्थेन्द्रियादि चेत्, जायते ज्ञानमात्मनि; ततोऽपीच्छा; ततः प्रयत्नः; ततोऽपि देहक्रिया; ततः संयोगः; ततः सुखमिति इयती जगद्यात्रा । किमस्याः त्रुट्यति स्वात्मप्रकाशत्वाभावे संवेदनस्य । न न बोध्यते नैयायिकग्रामणिम्मन्यः । बीजम्, अङ्कुरः, काण्डः, पलाशः, पुष्पं, फलानीति यः कार्यक्रमः, यश्च अयं भवदुक्तः, एतयोरपि विशेषे एकत्र जाड्यमपरत्र च अजाडयमिति कुतः । ज्ञानमेव अजाड्यमिति चेत्, बीजमेव अजाड्यमित्यपि किं न भवेत् परनिष्ठत्वाभावे प्रकाशमानताभावे च यस्य कस्यचित् विशेषस्य असत्समत्वादिति । ननु एवं किम् । संवेदनमप्रमाणकमेव अस्तु । प्रमेयस्य प्रमेयान्तरं विना किं दुष्यति, संवेदनस्यापि प्रमाणेन विना किं व्यसनमासीदति व्यसनमात्रमत्र प्रमाणसमर्थनम् । प्रकाशमानतैकात्मकं हि तदिति तावतैव सर्वमिष्टं लब्धम् । संवेदनं न प्रमा प्रमेयत्वव्यवहारपदमितरानपेक्षत्वात् । तद्व्यवहारपदत्वं हि इतरापेक्षया विनापि यदि भवेत्, तत् भूम्यन्तर्गतेऽपि घटे स्यात् । नच एवमिति दृश्यानुपलम्भात् तत्तथा कृतमिति निश्चिते कारणविरुद्धोपलब्धिरेषा । ननु स्वात्मना सिद्धा भावा इति



कथमेष व्यवहारः स्यादिति पराशङ्कां शमयति **'केवलम्'** इति । यथा बीजं बीजात्मना सिद्धं निष्पन्नं स्वात्मनि, तथा प्रमाता स्वसंवेदनात्मना निष्पन्नः स्वात्मनीत्यपि स्यात् यदि अनित्यो भवेत् । नित्यश्च असौ देशकालस्वरूपभेदाभावस्य उक्तत्वात् वक्ष्यमाणत्वाच्च । ननु त्वत्पक्षे नित्यः प्रमाता, सौगतस्य तु न तथेति तस्य तावत् संवेदनेषु असंवेदनसिद्धताव्यवहारो न अयुक्तः । नेत्याह **'नच तथा'** इति । तथेति तेन उत्पत्तिप्रकारेण सिद्धिः स्वात्मनि संवेदनात्मना निष्पत्तिरित्येवं या स्वसंवेदनसिद्धिः, सा तस्य संवेदनस्य स्वरूपमुक्तं भवेत्; ननु प्रमेयताप्रमेय इति व्यवहारः, प्रमासंबन्धश्च तया सिध्यति । प्रमेयता हि न कार्यता, अपि तु ज्ञाप्यता । सा च नास्ति । ततश्च स्वसंवेदनेन प्रमाणेन संवेदनं भातीति यत् परेण उक्तं, तदपसारितमेव भवति । यदि वा तथा सिद्धिर्या सा स्वसंवेदनसिद्धिरेव नोच्यते या प्रमेयतायाः प्रयोजिका । ननु बौद्धस्य मते मा भूत् संविदात्मनि प्रमेयत्वम्, तदविनाभूतं च मा भूत् मुख्यं प्रमाणत्वं वस्त्वन्तरस्य तत्प्रतिष्ठापदस्य असंभवे प्रमाणत्वप्रमेयत्वधर्मद्वयकल्पनाबीजस्य व्यावृत्तिद्वयस्य प्रकाशैकरूपे कल्पयितुमशक्यत्वात् । ईश्वरात्मवादिनस्तु मायाप्रमातॄन् परमार्थप्रमातारं च भेदेन अङ्गीकुर्वतः संवेदनमपि शून्ये यदिदं भाति तद्व्यतिरिक्तं यत् तदहमिति प्रसंख्यानवतां प्रमातृभावेन निर्भासमाने वा प्राणे क्षुधितोऽहमिति आत्मतया संमते वा आदिग्रहणात् बुद्धौ सुख्यहमित्यादौ गृहीतृत्वेन निर्भासिष्यते इत्याशङ्कां परास्यति । यथाहि शरीरं जडरूपं वेद्यप्रतिष्ठास्थानतया न आशङ्कनीयम्, तथा शून्यादिकमपि यत् वेद्यं, तत् न प्रमेयप्रतिष्ठास्थानम् । यथा शरीरं, तथा च शून्यादि । प्रतिष्ठास्थानत्वं हि

जडेभ्यो व्यापकस्य कचिदेव उपलम्भ इत्येवंरूपस्य नियमस्य अनुपलम्भात् प्रसज्यमानात् हेतोर्व्यावर्तते इति अजडत्वेन व्याप्यते । तद्विरुद्धं च वेद्यत्वमिति व्यापकविरुद्धोपलब्धिः । तेन संविदेव सर्वत्र प्रतिष्ठास्थानम् । सा परं शून्यादौ मायाशक्त्या समारोप्यते इति संकुचिता उच्यते । यदजडप्रमातृसिद्धिः

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥
तदात्मनैव तस्य स्यात्कथं प्राणेन यन्त्रणा ।' (२१)

इति, तथा

'नार्थव्यवस्था प्राणादावहंभावनिरोधतः ।
प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ॥' (२२)

इति । 'तस्यैव' इति शून्यादेः । 'तम्' इति प्रकाशम् । 'प्रमाणविषयता' इति प्रमाणता, विषयता च । 'प्रकाशात्मत्वात्' इति औपचारिकत्वस्य पूर्वमभ्युपगतस्य निषेधहेतुः । धर्मान्तराभावे हि यदेकमेव भूयोभिः स्वभावैरुपचर्यते, तत्र निमित्तभेदे प्रयोजनभेदे च असंभवति शब्दगड्डुमात्रमुपचारो जायते । स्वात्मनि 'अहं चक्रवर्ती दासश्चेत्यपि हि विरुद्धरूपोपचरणेऽपरायत्तत्वोपकरणत्वधर्मद्वययोगो निमित्तमदीनत्वपूर्णत्वप्रभृत्यभिमानाभावानन्योन्मुखत्वाभावप्रभृति च प्रयोजनं भिन्नमस्त्येव, ननु एवं प्रकाशैकरूपे संवेदने धर्मान्तरमस्ति । उक्तनीत्या च प्रमातृप्रमाणप्रमेयतानामुपचारे चिकीर्षितेऽन्ततो धर्मषट्कमुपयोगि । अथ 'स्वात्मप्रतिष्ठं नभः' इति न्यायेन स्वसंवेदनसिद्धमिति भङ्ग्या, संवेदनमनुपयुज्यमानानुपपद्यमानप्रमाणमिति उच्यते । तदियमस्मद्दृष्टिः । तथा च



चतुर्विधं प्रत्यक्षमिति स्वसंवेदनस्य प्रमाणभेदगणनानुपपत्तिः । 'प्रमाणाविषयत्वम्' इति । विषयत्वाभावोपसंहारे प्रमातृत्वप्रमाणत्वाभावोऽपि उपसंहृतो मन्तव्यः । सौगतस्य तु स्यादपि उपचारबीजं प्रमेयतायां पूर्वानधिगतत्वमपूर्वत्वं च तत्कालोचितस्य संवेदनस्य । सति च प्रमेयतोपचारबीजे प्रकाशात्मत्वात् प्रमाणत्वमपि उपचर्यते अन्यानपेक्षतां प्रतिपादयितुम् । एतदपि तु न कथञ्चिदपि अस्मन्मते इति दर्शयति 'अपूर्वरूपत्वाभावात्' इति । प्रमाणाविषयत्वमिति वा पाठे नापि प्रमाणविषयत्वमिति संबन्धः । कथं तत् प्रमाणविषयत्वं शङ्क्यते इति । आह 'प्रकाशात्मत्वात् निमित्तादेकस्यापि त्रित्वम्' इति । विषयत्वमपूर्वतायां घटेत विषयत्वे च प्रमाणत्वमिति । एतद्वितनोति 'अनधिगत' इति अनधिगतविषयमिति विषयमुखेन, 'अज्ञात' इति विषयनिष्ठप्रकाशात्मकस्वरूपमुखेन दिङ्नागीयं लक्षणद्वयम् । प्राथम्येदन्ताभ्यां विषयपुरःसरीकारेण स्वरूपं, संशयविपर्ययत्वाभावौ, तत्र निदानं स्वतःप्रमाणतेति क्रमेण विशेषणपञ्चकस्य तात्पर्यं मीमांसकलक्षणे । ननु आत्मनो यद्यपि नित्यत्वादपूर्वत्वं नास्ति, प्रमेयत्वोपचारनिदानं, तथापि पूर्वानधिगतत्वं भविष्यतीति । आह 'आत्मनश्च' इति । स्वग्रहणं परप्रमातरि अस्तु पूर्वानधिगतत्वं तावदिति कर्तव्यमपि न कृतं स्वपरविभागस्य इह दर्शनेऽतात्त्विकत्वात् । संवेदनं हि एकमेव परमार्थतः । कल्पितशून्यप्राणशरीरादिमायाप्रमातृविषयतया तु स्वपरव्यवहार इति हि पुरस्तादभिधास्यते । तत आत्मन इति सामान्योक्तिरेव युक्ता । अपूर्वप्रकाशोऽयमिति निश्चयस्य कारणभूतः पूर्वं नायं घटः प्रकाशितः इति निश्चयः । तस्य व्यापकं तद्घटप्रकाशरहितयादृशतादृशप्राय-

वस्तुरूपस्य पूर्वकालस्य स्मरणम्। तदभावे पूर्वमिति, न प्रका-
शित इति च भूतकालप्रतीत्यभावादनुपपन्नमेव स्यात्। घटप्रका-
शशून्यकालानुभवश्च तत्स्मरणस्य कारणमिति तावदुत्तरोऽयं
प्रबन्धो न भवेत्। तत्सद्भावेऽपि अपूर्वप्रकाशोऽयमनुभव इति
कथम्। ततश्च अपूर्वप्रकाशोऽहमनुभविता, अधुना प्रकाशे, पूर्वं
न प्राकाशिषीति, संवेदनाक्षिप्तेन पूर्वकालस्मरणेन तत्कालानुभव
आक्षिप्यमाणोऽनुभवितुरपूर्वसत्तामपूर्वप्रकाशतां च अपबाधते।
रामावतरणकाले नाहमभूवमित्यपि हि तस्य कालस्य अनुभवो
वक्तव्यः। आगमात् तत्कालज्ञानमिति चेत्, आगमोऽपि वक्तु-
रनुभवितुरनुभवमाक्षिपति। तदनुभवित्रा तावद्भाव्यमिति। ननु
वाल्मीकिस्तावता अनुभविता सिद्धः, न अस्मदादिः। स्थाने
प्रश्नः, किन्तु संवेदनात्मनोऽहंविमर्शस्य तावदियता सद्भावः
सदातनः सिद्धः। स च एक एव परमार्थप्रमाता यदि परप्राण-
बुद्धिपुर्यष्टकशरीरादयो भिन्नाः, तद्भेदकृतश्च प्रमातृभेदव्यवहार
इति तत् शरीरादि अद्यतनं तस्मिन् काले नाभूदित्येतदत्र तत्त्वम्।
प्रलयकाले सृष्टिमुखारम्भे च न वयं बभूविमेति, अन्यथा
कालविशेषोल्लेखो न स्यात्। वयं न बभूविमेत्यपि अत्र प्रतीतौ
लिट्प्रत्ययान्तर्नीतभूतकालावभासः उन्मिषत्येव। नहि इयं न
प्रतीतिः। प्रतीतिश्च न अनुभवरूपा इयं तथात्वे योगिन इव
इदानीं पूर्वकालविषयस्फुटताप्रत्यवभासप्रसङ्गात्। तदियं स्मृति-
रेव भवन्ती पूर्वानुभवमाक्षिपत्येव। उत्प्रेक्षापि भवन्ती स्मरण-
मनुभवं वा मूलतोऽवलम्बते, ननु अन्धतमसानुप्रवेश इव उत्प्रेक्षा
संभवेत्। केवलं शुद्धसंवेदनमात्रस्य कालोपरागशून्यतया स्वरूप-
व्यतिरेकिवस्त्ववभासासंभवेन च तदुभयानुप्राणितरूपा स्मृ-
तिर्न संभवतीति शरीराद्युपरागत एव सेति। प्राच्यशरीरोपरा-



गश्च एतच्छरीरोपरागविभिन्न इत्येवमुपरागद्वयस्फुटीकारायोगात्
न स्फुटं स्मृतित्वमतिशिशुतापदानभूते इव यूनः। अनुभवितृत्वेन
हि यत्र अभिमानो गाढः शरीरे, तत्रैव ऐक्यसंस्काराभ्रंशादनुवर्त-
मानत्वेन अभिमन्यमाने स्फुटस्मर्तृत्वाभिमान इति अलं बहुना।
स्थितमेतत्—न आत्मनोऽपूर्वतया प्रकाश इति। '**अपूर्वत्वम्**'
इति सत्तया। '**अपूर्वप्रकाशत्वम्**' इति अधिगमेन। अत्र
च चार्थो मन्तव्यः। अत एव विभजति—नच आत्मनः पूर्व-
मसत्ता, नच सतोऽपि अनुभवः इति। वस्तुतस्तु सत्तापि प्रकाश-
विश्रान्तैवेति सत्तापूर्व्यं प्रकाशापूर्वतायामेव विश्राम्यति,—
इत्याशयेन सामानाधिकरण्यमेव युक्तम्। '**प्रतिपद्यताम्**' इति
चकारो न प्रयुक्तः। प्रमातृगतोऽपूर्वप्रकाशत्वव्यवहारः प्राक्
प्रमातुरसद्भावे न भवति प्रमातृप्रमायत्तपूर्वकालस्मरणापेक्षत्वात्।
तदसद्भावे भवनस्य व्यापकं तदायत्तरूपानपेक्षत्वं पटस्य इव
मृत्पिण्डाभावे। तद्विरुद्धं च तदायत्तरूपापेक्षत्वमिति व्याप-
कविरुद्धोपलब्धिः। तर्हि अयं प्रमातृसद्भाव एव प्रमातुरपूर्वप्र-
काशत्वव्यवहारः इत्यस्तु। एतदपि कथम्। नहि स एव पूर्वं
प्रकाशते, अधुना च अपूर्वप्रकाश इति संगच्छते विरोधात्।
तदयं भिन्नविषयतया विरोधः परिहर्तव्यः। आरोपितप्रकाश-
भावो देहादिरपूर्वप्रकाशः सति एव पुराणप्रकाशे परमार्थप्रमातरि
व्यवहर्तुं शक्यः। परमार्थप्रमाता तु परमेश्वरो न कथञ्चिद-
पूर्वप्रकाशः, तदविभिन्नाश्च सर्वे प्रमातारः,—इति वस्तुतो न
अपूर्वप्रकाशता। यद्गीतं

'नह्येवाहं जातु नासं................।'

इति उक्त्वा,

'......................नेमे नराधिपाः।'

'न चैव न भविष्यामः..............॥' (२।१२)

इति । अनेन हि आत्मनि परमार्थप्रमातरि कालत्रयाविच्छिन्नप्रकाशत्वमुक्त्वा तदभेदादन्येषामपि उक्तम् । मायाप्रमातरि अपूर्वप्रकाशता भवन्ती अपि न प्रकाशांशमाश्लिष्यति, अपितु वेद्यांशमेव इदंभावभागिनमिति हि अस्य ग्रन्थस्य तात्पर्यार्थः । '**स एव**' इति एवकारेण परमार्थप्रमातुरभेदमाह । अवान्तरप्रमेयमुपसंहरति '**तस्मात्**' इति । '**आत्मनः**' इति । बौद्धन्यायेन तु संवेदनस्य अपूर्वप्रकाशत्वात् भवेदौपचारिकी प्रमेयता, यतः स्वसंवेदनं प्रमाणमिति उच्यते इत्याशयः । औपचारिकमपि प्रमाणविषयत्वं न उपपद्यते इति अवान्तरप्रमेयमुपसंहृत्य, प्रकृतं प्रमेयत्वाभावलक्षणं महाप्रमेयमुपसंहरति '**तदेवम्**' इति । तस्मात् युक्तिकलापादेवंभूते सदाप्रकाशत्वमात्मनः इति प्रमेयवस्तुनि स्थिते इत्यर्थः । ननु आत्मगतनित्यतादिविचारेऽवश्यमात्मा प्रमेय एवेत्याशङ्क्य आह '**वैकल्पिक**' इति । तत्रापि विचारयिता पूर्वसिद्ध एव अन्यथा विचारायोगादित्येवमात्मा विचार्यमाणोऽपि स्वशिरश्छाया इव प्रमाणपदाक्रमणात् दूरमपक्रामति । केवलं

'स्वातन्त्र्यामुक्तमात्मानं..................।'(१।४७)

इति भाविनयेन तत्र प्रमेयभूतोऽत्यक्तप्रमातृरूपभित्तितादात्म्यः सृज्यते इति प्रमेयत्वं तत्र प्रमातृतायां विश्राम्यति तस्या एव तथा हृदयंगमीकरणेन व्यवहार्यत्वात् । यस्य प्रकाशितस्य हृदयङ्गमीकरणाय यत् विरुद्धमुपादीयते, तत्र तत् विरुद्धं न प्रतिष्ठां लभते प्रत्यक्षदृष्टे इव घटेऽनुमेयत्वम् । तथाच प्रमातृताहृदयङ्गमीकरणाय प्रमेयता वैकल्पिकी प्रतिष्ठालाभे कारणम् । तदीयमानापूर्वप्रकाशत्वं पर्वत इव अग्न्यनुमेयत्वस्य, तद्विरुद्धं च पूर्वप्रकाशत्वमिति कारणविरुद्धोपलब्धिः । तुरपिशब्दानन्तरमेवं



विचारकालो यद्यपि अस्ति, तथापि शुद्धात् प्रमेयत्वात् विशुद्धाच्च प्रमातृत्वादेष विशेषः—इति द्योतयति । विशुद्धं हि प्रमेयत्वं घटस्यैव अनुमेयत्वमिव अग्नेः । विशुद्धं तु प्रमातृत्वं घटे प्रमेये अहंभावस्य अमूढं प्रति प्रत्यक्षत्वमिव घटस्य । इदं तु मिश्रं प्रमातृप्रमेयरूपत्वम् । प्रमातृताप्रधानं तु मूढं प्रति घटस्य प्रत्यक्षत्वानुमेयत्वं प्रत्यक्षत्वप्रधानमिव । साक्षात्काराच्च असाक्षात्करणरूपमनुमानं विरुद्धमपि तं व्यवहारयत्येव तन्निष्ठत्वात् । अहं गौर इति अहंभावात् विरुद्धमपि दर्पणे अयं गौर इति इदन्ताज्ञानमिव तत् । तन्निष्ठत्वमपि यदि व्यवहारयेत्, न कश्चिदपि व्यवहारकत्वं स्यात्; इष्टं च तदिति तावन्मात्रनिमित्तत्वस्य व्यापकस्य प्रत्यक्षविरोधभयेन अवश्याङ्गीकार्यस्य अनुपलब्धिप्रसङ्गात् तन्निष्ठत्वमव्यवहारकत्वात् विपक्षादपसृतं साध्येन व्यवहारकत्वेन व्याप्यते इति व्याप्तिसिद्धौ स्वभावहेतुः । एवम् '**आदिसिद्धे**' इति सौत्रपदपर्यायं '**पूर्वसिद्धस्य**' इति व्याख्याय, क्रोडीकृतसिद्धिकत्वं यदुक्तं वृत्तावादिसिद्धत्वस्फुटीकरणाभिप्रायेण, तदधुना स्फुटीभूतमिति वितत्य वक्तुमुपक्रमते '**एवम्**' इति । एतावति प्रमेये स्थिते यावत्तावच्छब्दाववश्यंभावद्योतकौ, अत एव कर्तुरनुपादानम् । तस्य सिद्धिक्रोडीकारो हि अविधित्सितः । अवश्यं हि प्रमीयते तावत् किञ्चित्, इयता च सर्वं सिद्धमिति प्रमाणविषयं प्रमेयं भूता प्राप्ता प्रमेयोचिता तस्य प्रमातुर्या सिद्धिः । '**तं प्रति**' इति प्रमातारं प्रति । '**प्रमेयवस्तु**' इति वस्तुग्रहणं मात्रपर्यायः । '**अत एव**' इति यतस्तृणमात्रमपि तत्र विश्रान्तं प्रमेयं भवति, ततो हेतोः । तेन प्रमात्रा स्वात्मनो निजस्य रूपस्य सिद्धिः प्रकाशः प्रमेयसिद्धयैव क्रोडीकृता क्रोडोपलक्षितहृदयरूपतां गता कृता हृदयङ्गमीकृतेत्यर्थः ।

'**उक्ता**' इति वृत्तौ । प्रकाशरूपता खलु अनवच्छिन्ना प्रमातृगता, प्रमेयत्वं कथं सहताम् । अनवच्छिन्नापि हि सा न प्रमेयतासहिष्णुरिति दर्शयति '**आस्तां तावत्**' इति । दण्डापूपीयन्यायेन अयत्नसाध्यमिदमिति यावत् । ननु चक्षुरादि प्रमाणम्, तच्च अनुमानाद्यपेक्षमिति । आह '**प्रमितिसाधकतमताम्**' इति न तत्प्रमाणमित्याशयः । प्रकृतस्य प्रमातुं प्रारब्धस्य प्रमेयस्य हेयोपादेयात्मनः सिद्धिर्न स्यात् । '**अत एव**' इति यतः प्रमाणे प्रमाणान्तरापेक्षिणि जडेऽनवस्था, ततः । '**कयाचित्**' इति विषयोपरागदत्तेन देशकालसंकोचेन । नीलप्रकाशो हि मितविषयबहिर्मुखतासंकुचिततरवृत्तिः परमार्थप्रकाशविश्रान्ते बुद्धिप्राणादिसंकोचभाजनेऽपि अन्तर्मुखमात्रसंकोचयोगादुभयतोमुखसंकोचनीलप्रकाशापेक्षया वितते । अत एव सर्वविषयावभासनयोग्यताजुषि प्रत्यगात्मनि ममेति सत्त्वेन अवभासमानतया विश्रान्तिमृत्यजन् निजस्फुरितशब्दनात्मविमर्शफलो नीले बहिः सर्वसाधारणाभासे प्रमेये प्रमाणमिति वक्ष्यते

'इदमेतादृगित्येवं..................।' (२।१६)

इत्यत्र । ननु अनिर्भासमानमेव चक्षुरादि प्रमाणं भविष्यति, तत् कथमनवस्था यद्भयात् न जडस्य प्रमाणत्वमित्याशङ्क्य आह '**नहि कारणमात्रम्**' इति कारणविशेषः करणमिति मात्रशब्दः, '**येन**' इति कारणमात्रं-करणमित्यतो हेतोरित्यर्थः, '**तथा**' इति करणम्, अपितु प्रकृष्टोपकारकत्वं करणता । तच्च कर्त्रा व्यापार्यमाणतैव, न अन्यत् । ततः किमिति । आह '**कर्ता च**' इति । '**वक्ष्यमाणनीत्या**' इति

'इत्थं तथा घटपटाद्याभासजगदात्मना ।
तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया ॥' (२।५३)



इति हि वक्ष्यते । ततोऽपि प्रकृते किमिति । आह '**सच**' इति चेतनो यावत् क्रियायामुपयोगि संचेतितं, तावत् प्रयुङ्क्ते; ननु अप्रकाशमानमिति संबन्धः । जडं न चेतनः प्रयुङ्क्ते अप्रकाशमानत्वादिति कारणविरुद्धोपलब्धिः । प्रकाशमानता हि प्रयोगे कारणं तदभावे प्रयोगस्य अभावात् । तमेव दर्शयति '**अन्यथा**' इति । तेन अत्यन्तपरोक्षाणां मनोऽक्षदिक्कालाकाशादीनां सामग्रीप्रामाण्यवाददृशि कर्तृप्रयोज्यत्वं तावत् न उपपन्नम् । ननु स्पर्शविशेषादिना नेत्रगोलकमुपलभ्य उन्मेषयति, सैव अस्य प्रयोज्यता, ततो नीलदर्शनमिति जडस्य अप्रकाशमानत्वमसिद्धमित्याशङ्क्य तामेव अनवस्थां स्मारयितुमाह '**तस्यापि**' इति । स्पर्शविशेषोऽपि स्पर्शनेन ज्ञातव्यः, तदपि अन्येन जडेनेति अनिष्ठा । ननु स स्पर्शः स्पर्शज्ञानेन ज्ञापयिष्यते, तच्च स्वसंवेदनसिद्धमिति का अनवस्थेति । आह '**पर्यन्तेन**' इति '**प्रकाशलक्षणम्**' इति । नीले नीलप्रकाश एव, करणं युक्तं स्पर्शे इव स्पर्शप्रकाशः । ननु पर्यन्तावलम्बनं प्रथमत एव कर्तव्यमिति कोऽयं नियम इति । आह '**वास्यादि**' इति । तथाहि च्छेदने दात्रं करणं, तत्प्रेरणे हस्तः, तत्प्रेरणे इच्छा, तस्यां स्वसंवेदनं पर्यन्तकरणम् । नच इयता च्छेदनमेव इच्छाकरणकं दण्डोपादित्सया दण्डमिति नीत्या भवितुमर्हति । सत्यम्, बहिर्निष्ठायां क्रियायामेवमुपपद्यते । छेदनं हि काष्ठनिष्ठद्विधाभावफलं, नीलवेदनं तु प्रमातृविश्रान्तनीलविमर्शफलं यथा हस्तप्रेरणे इच्छा । तत्र न बाह्यं करणं दूरवृत्ति युज्यते । ननु दूरवृत्तिता कुत्र अपराध्यतीत्याशङ्क्य आह '**तद्विनियोगात्**' इति । इन्द्रियविनियोगात् पूर्वमेव घटविमर्शक्रिया प्रमितिरूपा निष्पन्नेति अस्यामुत्तरकालभाविप्रयोज्यताकमिन्द्रियं कथं करणम् । ननु इन्द्रियप्रयोगानन्तरं

सा उदेतीत्याशङ्क्य आह **'घटप्रमिति'** इति। घटविमर्शो भव-
तादिति हि गृहीत्वा इन्द्रियं व्यापारयेत्, अन्यथा नियतमिन्द्रियं
नियते देशे काले च कथं व्यापारयेदिति। एवं घटविमर्शश्चेद-
भिसंहितः, विस्पष्टो घटः प्रकाशितश्च घटः; अन्यथा पटप्रमि-
त्यभिसन्धानं किं तत् न भवेत्। तेन घटविमर्शस्तदभिसन्धान-
बलात् चेत् स्फुरितः, तदन्यथानुपपत्त्या पारंपर्येण घटोऽपि
स्फुरितः। घटस्फुरणमेव घटप्रमितिरिति तात्पर्यम्। यत्
यद्विनियोगात् पूर्वमेव भाति, न तत् तत्कार्यं बीजमिव नाङ्कु-
रकार्यम्। इन्द्रियविनियोगाच्च पूर्वमेव घटस्फुरणमिति। तत्का-
र्यताव्यापकं हि तत्पश्चाद्भावित्वं, तद्विरुद्धं च तत्पूर्वभावित्वमिति
व्यापकविरुद्धोपलब्धिः। ननु घटमात्रस्फुरणं सत्यमादावस्ति,
नतु तावन्मात्रमेव घटप्रमा विवक्षिता, अपितु सजातीयविजा-
तीयव्यावृत्तिस्वलक्षणस्फुरणम्। तच्च इन्द्रियविनियोगस्य पश्चा-
देव। एतदेव आह **'अथ घट'** इति। चो हेतौ। यत इन्द्रियस्य
कर्त्रा नियोजनं, ततः कर्तृप्रयोज्यतालक्षणं करणत्वमुपपन्नमिति।
एतत्परिहरति **'तत्'** इति कर्तृप्रयोज्यत्वम्। नहि परोक्षम-
प्रकाशमानं चेतनप्रयुक्तमिति युक्तम्। ननु मा भूत् कर्तृप्रयोज्यत्वं
करणलक्षणम्। तत् हि न सर्वत्र निर्वहति शुभेन कर्मणा
शुभं भुङ्क्ते। मूलैस्तरुस्तिष्ठतीत्यादौ तदसंभवात्। क्रियायां प्रकृष्टो-
पकारकमिति तु करणलक्षणं युक्तमव्याप्तिदोषशून्यत्वादित्याशङ्क्य
आह **'नापि'** इति। प्रकर्षो हि इयान् संभाव्यते—तस्मिन्
सति स एव भाति, तस्मिन् सति स भात्येव, तस्मिन्नेव सति
भातीति। तत्र आद्यं प्रकर्षं निराकरोति **'नापि'** इति। तस्य
इन्द्रियस्य। ननु महत्त्वानेकद्रव्यत्वरूपवत्त्वादिधर्मपदार्थापेक्षया
प्रथमः प्रकर्षो भविष्यतीत्याशङ्कापूर्वकमपाकरोति **'पदार्थ'**



इति। **'अर्थिनाम्'** इति विशेष्यसाध्यार्थक्रियया। त्वयापि हि
वयमिदमेव पूर्वं पर्यनुयुक्ताः **'अथ घटाभिसन्धानेऽपि'**
इत्यादिनेति अत्र आशयशेषः। ननु पदार्थमात्रमपि अस्तित्वमात्र-
साध्यहन्द्वङ्गपरिहाराद्यर्थक्रियार्थिनामुपयोगि स्यात्। किं नु खलु
तावता। घटावभासने विशेष्यसाध्यार्थक्रियार्थिनं प्रति इन्द्रियस्य
स आद्यः प्रकर्षः समर्थितो भवेत्। सार्वत्रिकं च प्रत्यक्षे इन्द्रि-
यस्य करणत्वं समर्थनीयम्। तच्च न समर्थितमेव। तदेतदाह
**'अथापि'** इत्यादि। **'तथापि'**इत्यत्रैव च्छेदं कृत्वा **'नार्थिना-
मिष्टसिद्धिः'** इति पूर्वेण संबन्धनीयम्। तथापीत्यस्य तु उत्तर-
ग्रन्थेन सह योजने प्रथमं प्रकर्षं समर्थयितुं यत् पूरणं, तदप्रति-
समाधाय द्वितीयप्रकर्षनिराकरणेन उत्तरदानं न अतीव संगतिं
पूरयतीति द्वितीयं प्रकर्षं निराकर्तुमाह **'प्रभास्वरात्'** इति।
**'प्रथमम्'** इति कालान्तरे तु भवतु नाम। प्रवृत्तेऽपितु इन्द्रिये
पदार्थविमर्शो नोदेतीति भवत्येवेति प्रकर्षो न सिद्ध्यति। प्रकर्षस्य
विशेषात्मनः सामान्यात्मनो वा। अपिर्भिन्नक्रमः। तस्य इन्द्रि-
यस्य। **'अत्र'** इति पदार्थावमर्शे फले कर्तव्ये। अव्यवहितोप-
कारिता भवत्येवेति द्वितीयप्रकर्षरूपता या उक्ता, सापि इह
नास्तीति संबन्धः। तस्मिन्नेव सति भातीति तु तृतीयप्रकर्षरूपं
न चिंतितम्। प्रसिद्धो हि अत्र दर्शनेऽयमर्थः—मन्त्रमहेश्वरा-
दियोगिपर्यन्तप्रमात्रपेक्षया विनापि इन्द्रियव्यापारेण दृष्टः
साक्षात्कारः इति। ननु प्रभास्वरादपवरकप्रविष्टस्य विश्रम्य
यत् नीलज्ञानमुदेति, तत्र इन्द्रिये सति भवत्येव नीलविमर्शरूपा
प्रमेति अयमस्ति अतिशयः। यत्तु प्रथमसमये नास्ति, तत्र
प्राप्तपरिपाकमिन्द्रियं समर्थं न जातम्। विशिष्टस्यैव च इन्द्रि-
यस्य करणत्वं ब्रूमः, न इन्द्रियमात्रस्य। तेन सहकारिसं-

पात एव यो विशेषस्तदभावे यत् करणत्वदूषणं, न तदिन्द्रि-
यस्य करणत्वं दूषयितुमलम् । किंच इन्द्रियस्य न अव्यवहि-
तोपकारितेत्युक्ते केनचित् व्यवधात्रा भाव्यम् । तदेव च जडं
करणं भविष्यतीति उभयदूषणमित्याशङ्क्य आह **'बोधावभा-
सस्य च'** इति । इह प्रमात्मकं फलमुद्दिश्य करणस्य अतिशयो
निरूपणीयः । प्रमा च वस्तुपरिच्छित्तिः, वस्तु च अर्थक्रिया-
योग्यम्, अर्थक्रिया अर्थिनो भेदैकरसस्य प्रमातुस्तादृशेनैव प्रमा-
त्रन्तरेण सह व्यवजिहीर्षोः, अर्थक्रियायोग्यता च बाह्यतायां
विश्रान्ता, अर्थक्रियाया अपि बाह्यरूपतैव प्रार्थनीयत्वादिति ।
बाह्यता च प्रमातुर्व्यतिरिक्तता । नच सा परमार्थप्रमातुः प्रका-
शात्मकादुपपद्यते । अप्रकाशनप्रसङ्गादप्रकाशमानस्य च अर्थ-
क्रियायामयोग्यत्वात् । तदिदमुभयं समर्थनीयम्—प्रकाशमानत्वं
च बाह्यत्वं च । तत्र आद्यं पारमार्थिकशिवसदाशिवेश्वरात्मक-
प्रमातृरूपाभेदेन घटते । बाह्यता तु कल्पितप्रमातृभावं मायीयं
शरीरप्राणादिमपेक्ष्य संगच्छते । एवं च मायीयस्य प्रमातुर्बाह्य-
रूपतावसाय एव नीलस्य प्रमा । नच अप्रकाशमानस्य अवस्तु-
भूतापि बाह्यरूपता अवसायेनापि वितरीतुं शक्या भित्त्यभावे
धर्मपरिकल्पनाचित्रासंभवात् । एतच्च

'भ्रान्तित्वे चावसायस्य.................. ।' (१।२१)

इत्यत्र निरालम्बनाभिमानिकाध्यवसायदूषणेन वितनिष्यते । त-
स्मात् नीलेन तावत् प्रकाशितव्यं प्रथमम् । प्रकाशनं च अस्य
परमार्थप्रमातरि शिवेऽहमिति, सदाशिवभूमाविदमंशास्फुटतया
अहमिदमिति, ईश्वरभुवि स्फुटेदमंशेन अहमिदमित्येतावान्
ज्ञानशक्तिमात्रमवभासः । इयत्यां भूमाविदमंशस्य पृथक्त्वैव
नास्ति अहन्तातो दर्पणादिव नीलस्य । ततः पृथक्त्वोल्लासेऽपि



अपृथक्तया चैतन्यादिव देहस्य । एषा विद्याभूमिरुच्यते ।
अत्रापि च मन्त्रमहेश्वरमन्त्रभेदेन अवान्तरो भेद इति आगमा-
धिकारे वितनिष्यते । ततः संकुचितात् प्रमातुः शून्यरूपस्य
सर्वमिदं यत्, न तदहमित्येवंरूपस्य विज्ञानकेवलरूपत्वस्य
उदये तदाविष्टे प्रकाशे तादात्म्यशून्यापेक्षया तु बाह्यतया प्र-
काशः, पश्चात् तद्बुद्धिरूपे असंकुचिते प्रकाशे सवेद्यप्रलयके-
वले, ततोऽपि तद्देहरूपे सकले । इत्थमेव तादात्म्यबाह्यत्वाभ्यां
प्रकाशः । बाह्यत्वेन च प्रकाशे यो विमर्शभागोऽव्यभिचारी,
स विकल्प इति व्यवस्थापयिष्यते । प्रकाशस्य च विमर्श एव
जीवितम् । स च अत्र विकल्परूपतां भजति । या प्रकाशमान-
रूपातिरेकदायिनीति, सोऽध्यवसाय इति व्यवह्रियते । प्रकाश-
मानरूपाधिकं च बाह्यत्वमिति बाह्यत्वस्य न प्रकाशमात्रमुच्यते,
अपितु अध्यवसायः । तादात्म्येन तु प्रकाशनं प्रकाशांश
एव । नच तस्य शिवात् प्रभृति सकलान्तेऽपि प्रमातरि
कश्चित् भेदोऽस्ति । तत्र च विमर्शो न प्रकाशातिरिक्तं किंचित्
करोतीति निर्विकल्पकं प्रकाश इति अनुभव इति च उच्यते ।
एवं स्थिते बाह्यताध्यवसायरूपायाः प्रमाया इन्द्रियव्यापारस्य
च अन्तरालवर्तिनी या शिवसदाशिवेश्वरविद्यारूपा निर्विकल्पा-
नुभवदशा, सैव अस्यामव्यवहिता प्रमायाम् । प्रभास्वरादपवर-
कप्रवेशेऽपि परस्यापि नीलाध्यवसायः प्रमा, नीलानुभवानन्त-
रभावी च असाविति इष्टमेव । ततश्च न कचिदपि इन्द्रियव्या-
पारस्य अव्यवहितोपकारितेति स्थितम् । या च असौ व्यव-
धात्री दशा, न सा जडरूपा, अपितु संविन्मयी एवेति युक्त-
मुक्तम्—प्रकाशात्मैव हि कयाचिदपेक्षया भेदमानीय प्रमिति-
करणीकर्तुं युज्यते, न जडवस्त्विति । तदेतदाह **'बोधाव-**

**भासस्य च**' इत्यादिना । चकार उत्तर समुच्चिन्वन् पूर्वपक्षाशङ्कां सूचयति । सा च उक्तैव । बोधरूपस्य वस्तुतोऽवभासस्य अवरतया निकर्षेण अपूर्णतया भासमानस्य नीलस्य संकोचरूपेषदर्थयोगादाभासादिशब्दवाच्यस्य बाह्योऽयं मत्तः, सच अर्थो वस्तुभूत इत्येवं योऽध्यवसायो नीलस्य इत्थमध्यवसीयमानता, तस्यां प्रमारूपायां प्रमाणं विचार्यते लौकिकैः । यश्च असौ बाह्यरूपताध्यवसाय इन्द्रियव्यापारस्य अनन्तर इति परस्य संमतः, स ज्ञानशक्त्युल्लासमात्ररूपात् नीलप्रकाशरूपात् परमसदाशिवादिनिष्ठादहमित्येवरूपादागतो यो मन्त्रेश्वरादिभुवि विद्यामयः । तेन निर्विकल्पेन अभेदविमर्शेन प्रकाशमात्रजीवितेन अनुभवशब्दवाच्येन मध्यवर्तिना व्यवहिता इत्यतो हेतोः । '**स एव**' इति अभेदविमर्शमयः प्रकाशः प्रमाणं युक्तं बाह्यार्थावसायरूपायां प्रमायां निमित्तभूतः । निमित्तत्वं दर्शयति '**यत एवम्**' इति । मम अवभासमानमिति प्रमातृलग्नः प्रकाशः करणम्, ततो हेतोः । नीलमेतत् बाह्यमिति अध्यवसायः प्रमा । नीलं प्रमेयम् । एतच्च

'इदमेतादृगित्येवं………… ।' (२।१६)

इत्यत्र उपपादयिष्यते । यदिवा इन्द्रियव्यापारापेक्षया इदमुच्यते—न इन्द्रियव्यापारेण नीलमिदमिति व्यवस्थाप्यते, येन तद्व्यवस्थापनात्मिकां प्रमां कुर्वतस्तस्य प्रामाण्यं शङ्क्येत, किंतु एतत् निर्विकल्पेन व्यवस्थापयिष्यते । एवमुपपत्त्या निरूप्य यदुक्तं '**प्रमाणमपि यावत् न प्रथक् सिद्धिहेतुं प्रमाणमाक्षिपति**' इति, तत् निगमयति '**ततस्तस्य**' इति '**अर्थावभासस्य**' इति नीलप्रकाशरूपस्य अनुभवस्य । '**प्रमितिक्रियाकरणस्य**' इति प्रमाणस्य । पुनः प्रमाणं द्वितीयं प्रमाणमनव-



स्थापादकं प्रति न अपेक्षा । अत्र हेतुः '**स्वप्रकाशात्मनः**' इति । अत्रापि हेतुः—बोधात् स्वप्रकाशादविभिन्नस्य अव्यतिरिक्तस्य । ननु च संसारिणः कथमियं शिवसदाशिवेश्वरदशा, यया व्यवधानं भवेदित्याशङ्क्य आह '**तस्यां हि**' इति । या इयमध्यवसायस्य पूर्वभाविनी उक्ता, तस्याम् । '**ऐश्वरः**' इति ईश्वरस्य अयम् । '**भावः**' इति न असंवेदनम् । शिवदशा तु एकरसाहंभावात्मा, नच अत्र अर्थोन्मीलनमिति न सा अर्थचिन्तायामुपयुक्ता; तेन '**ऐश्वरो भावः**' इति उक्तम् । उत्तरोत्तरं हि पूर्वपूर्वेण अवियुक्तमिति । '**पशोरपि**' मायादशापतितस्य विद्येश्वरादिपूर्वदशया न वियोगोऽन्यथा अप्रकाशनप्रसङ्गात् । यत ईश्वररूपता, तेन तस्यां कालकलायां तत्कालवर्तिनि बोधे—अभेदैकरसे—स्वप्रकाशे सांव्यवहारिक्याः संभूयव्यवहारः परस्परव्यवहारो भेदप्रधानः प्रयोजनं यस्याः, इदं प्रमाणं, इदं प्रमेयमिति व्यवस्थया विचित्रस्य अवस्थानस्य भेदरूपस्य तस्यां न अवकाशोऽभेदरूपेण भेदस्य विरोधात् । निर्विकल्पदशायां न अन्यत् प्रमाणमभेदैकसारत्वात् । प्रमाणं हि प्रमेयमाक्षिपत् भेदसंभवेन व्याप्तं, तद्विरुद्धं च अभेदैकसारत्वमिति व्यापकविरुद्धोपलब्ध्या प्रमाणान्तरापेक्षा प्रमाणे निवारिता भवति । ननु एवंभूता दशा अहमिदमितिरूपा, तस्याश्च कथं कारणता, अहंभावो हि स्वतन्त्रः प्रमाता, न प्रमाणम् । अथ तत् प्रमाणं, तर्हि प्रमातृरूपं वक्तव्यमित्याशङ्क्य आह '**पदार्थावभासरूपत्वमात्रेणैव तु**' इति । तुशब्दः प्रमाणात् प्रमातुर्विशेषं द्योतयन्नविशेषां शङ्कां सूचयति । अस्मादीश्वरदशारूपात् बोधावभासादहंभावसामानाधिकरण्यमापन्नादपि अहमिदमित्येवंरूपात् प्रमातुरपि भवेद्विशेषः । कथं विशेषः । आह '**पदार्थ**' इति । नीलस्य योऽव-

भासः, तद्रूपत्वमात्रेण । नीलं हि तत्र अधिकमस्ति, तेन
प्रमाणता । प्रमाता तु नैवंविध इति वक्तुं हेतुतागर्भमस्य विशे-
षणमाह—अहंभावे य एको रसो विश्रान्तिः, तत्स्वभावो यतः
प्रमाता; अत एव पूर्णः । न प्रमाणतया संकोचकला अत्र काचि-
दर्थराशेः सर्वस्य अत्र अहंमयत्वात् । अपिशब्दो भेदानवक्लृप्ति-
माह । एतदर्थमेव मात्रग्रहणम् । यत एवं प्रमाता अहमित्येताव-
न्मात्ररूपः, ततोऽधिका च ईश्वरदशेत्यतो हेतोस्तस्यैव ईश्वर-
दशापन्नस्य बोधस्य प्रमाणत्वं स्थितम्, यत्र न अनवस्था । ननु
शिवरूपतां प्रमातृतया, प्रमाणतया च सदाशिवादिदशां न लोकः
प्रतिपद्यते । क एवमाह—न प्रतिपद्यते । निर्विकल्पकमिद-
मित्यपि किं लोकः प्रतिपद्यते । युक्त्या अनुभवो व्यवस्थाप्यते
इति चेत्, इहापि न समानम् । तदाह **'तदेतत्'** इति ।
संसारव्यवहारं पतितो मायामयत्वं भेदैकरसत्वमाह्रियमाणः,अत
एव अभेददशां भवन्तीमपि तदुपयोगिमायादशानिह्नुतामवजानन्
भोग्यत्वात् पाश्यत्वात् पशुस्तस्यापि वास्तवं पारमार्थिकं रूपमु-
क्तम्, येन प्रमात्रादि व्यवस्थाप्यते अनवस्थादिदूषणैर्नाभिद्रू-
यते । यस्मादनेन वास्तवेन रूपेण विना शून्यादेः प्रमातुः प्रमा-
तृता न उपपद्यते एकान्ततो वेद्यरूपत्वेन जडत्वे प्रत्युत स्व-
सिद्धौ प्रमात्रन्तरापेक्षणात्, इन्द्रियादेश्च करणरूपसंमतस्य कर-
णता न उपपद्यते । प्रकाशितस्य कर्तृप्रयोज्यतया करणत्वं तद्भाने
करणान्तरापेक्षया अनवस्थानात् । अपिः समुच्चये वा, शरीरस्य
प्रमातृतां प्रति दूरताद्योतने वा, तद्गतवास्तवप्रमातृतानौचित्यसूचने
वा । अनवस्थामेव सूचयति **'प्रकाशाननुप्रवेशः'** इत्या-
दिना । अनेन प्रकृतार्थसिद्धिरेव न उपपद्यते इति यदुक्तं,
तत् निर्वाहितम् । तेन पर्यन्ते प्रमात्रन्तराद्यनपेक्षणे विश्रान्ति-



स्थाने इयं परीक्षा परितो विचाररूपा हेयपरिवर्जनाय च
उपादेयस्य ईक्षा प्रमातृप्रमाणयोः संभवमुपपादयन्ती प्रमेयस्यापि
उपपादयति । न पुनर्हालिकादयः एवं जानन्ति भेदैकरसे
मायापदे विश्रान्तत्वादेषाम् । यथास्थित एव तु तद्व्यवहारः ।
**'एवम्'** इति शिवरूपे विश्वप्रमातरि सदाशिवरूपे च विश्व-
प्रमाणे सति उपपद्यते । एवं प्रमाणतत्त्वे च ज्ञाते विसंवादो
बाधकयोगो नास्ति, येन अप्रमाणता स्यादिति वितत्य

'इदमेतादृक्............... ।' (२।१६)

इत्यत्र प्रमाणलक्षणे वक्ष्यते । एतदुक्तं भवति—भेदैकरसो भेदार्थी
तथाविधप्रमातृसहस्रमध्यगतो यतोऽयं मायीयः प्रमाता, ततो
दृढनिरूढिस्थानमपि एकान्तवेद्यतया अत्यन्तजडतां शून्यशरीर-
प्राणेन्द्रियवर्गस्य आत्मरूपज्ञत्वादिकियन्मात्रावेशनेन अधस्प-
दीकुर्वदपि परमशिवसदाशिवादिपदमवजानीते सुखैकरस इव
जनो दुःखस्थानतामर्थकामार्जनादेः । अत एव तत्संभवोपदेश
एव अवधानयोगेऽभ्युपायः । यदुक्तं

'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता ॥' (वि० भै० १०६)

इति,

'संप्रदायमिमं भद्रे शृणु सम्यग्वदाम्यहम् ।
कैवल्यं जायते सद्यो नेत्रयोः स्तब्धमात्रयोः ॥' (वि०भै० ११३)

इत्यादि च । इत्यलं रहस्यान्तरप्रसक्त्या । बहुतरप्रमेयमग्नं प्रकृतं
सूत्रार्थमुन्मज्जयितुं निगमयति **'तदेवम्'** इति । ननु यदि न
प्रमाणापेक्षा, तर्हि किमनेन शास्त्रेण, ततः कथमुक्तं **'प्रत्यभि-
ज्ञामुपपादयामि'** इति । एतदाशङ्क्य आह **'वक्ष्यमाण'**
इति । समनन्तरमेव हि वक्ष्यते

'किन्तु मोहवशादस्मिन्............ ।' (१।३)

इत्यादि,

'विश्ववैचित्र्यचित्रस्य............... ।' (२।३०)

इत्युपक्रम्य

'अप्रवर्तितपूर्वोऽत्र............... ।' (२।३२)

इत्यादि च । ननु एतावता स्वतन्त्ररूप आत्मा सिद्धः, ननु ईश्वर इति। आह **'स्वातन्त्र्यमात्र'** इति । एवं स्वातन्त्र्ये प्रकाशिते ज्ञानक्रिये अपि प्रकाशिते एव । तदेव च ऐश्वर्यमिति किमन्यदप्रकाशितं स्यात् । यत् यावदात्म, तत् तस्मिन् प्रकाशिते न अप्रकाशितं भवति अप्रकाशितत्वे अतावदात्मकत्वस्य विरुद्धस्य प्रसङ्गात् । ज्ञानक्रियैश्वर्यलक्षणस्वातन्त्र्यमयश्च स्वात्मेति व्यापकविरुद्धोपलब्धिः । निषेधो यथा साधयितुं न योग्यः, नच शक्यः, तथा सिद्धिरपि । अनेन सूत्रे विधिनिषेधौ दृष्टान्तदार्ष्टान्तिकभावेन अन्योन्यं व्याख्येयाविति दर्शयति । वाशब्दो हि तदर्थ एव सूत्रे । **'अजडात्मा'** इति व्याचष्टे **'सचेतसाम्'** इति प्रामाणिकानाम्। **'निरात्मानः'** इति निःस्वभावा घटादयः। जडशब्देन तावदियदुक्तम्, इदं तु ध्वन्यते—जडानां तावदयमुद्यमो युक्तोऽसिद्धस्वात्मनाम् । एतदपि च कथं स्यात् । जडश्च स्वयमलब्धसिद्धिरन्यस्य च विधिनिषेधौ कर्तुमुद्यच्छति । उद्यमयोगात् चेदस्य आत्मा सिद्धः, किमीश्वरस्य असिद्धं येन सिद्धिं कुर्यात् । किं वा तदभावे सिद्धं, येन तन्निराकरणं कुर्यात् । ततश्च ईश्वरसिद्धिरीश्वरनिराकरणमित्येतत् सर्वं स्ववचनप्रसिद्धिप्रत्यक्षानुमानादिबाधितमेवेति खरविषाणप्रख्यमेवेति युक्तमादिसूत्रं **'तत्प्रत्यभिज्ञामुपपादयामि'** इति ॥ २ ॥

वक्ष्यमाणश्लोकार्थसंक्षेपेण अवतारयति **'एवमपि'** इति



प्रागुक्तं यत्प्रयोजनं तत्प्रत्यभिज्ञामिति, **'अस्मिन्'** घटादिके **'दृष्टेऽपि मोहवशादनुपलक्षिते'** अत्यन्तोपादेये व्यवहारसाधनेन **'स्वशक्त्याविष्करणेन'** निश्चयप्रदर्शनमिति लोके दृष्टम्, तथाच अयमात्मा ईश्वरो दृष्टोऽपि तथानुपलक्षितः इति स्वभावहेतुः, अत्यन्तोपादेयस्य दृष्टस्यापि अविमृष्टस्य कथमुपादानं स्यादिति उपादानव्यापकस्य अनुपलब्धिप्रसङ्गात् विपक्षतो व्यवहारसाधनाविषयत्वरूपात् व्यावृत्तो हेतुः प्रकृतेन साध्येन व्याप्यते,—इत्येवं सूत्रवृत्त्योः तात्पर्यं नेयम् । प्रश्नयोग्यतां द्योतयति **'किम्'** इति, **'तुः'** विशेषम् । तेन **'किन्तु'** इति असमाप्तवक्तव्यतां द्योतयन्नन्यप्रमेयाभिधानावकाशमाह । ननु स्वप्रकाशत्वमीश्वरस्य यत्नेन उपपादितं, तत् कथमुक्तम् **'अस्मिन्नीश्वरे दृष्टेऽपि'** इति । आह **'दृष्टशब्दोऽयम्'** इति । उपचरितं यत् कर्म आतिदेशिकं, यगात्मनेपदादि हि तत्र उदाहरणमात्रं भिन्नः कुसूलः स्वयमित्यपि दर्शनात् । यदि वा उपचरितं दृशः कर्तृस्वभावकतायां गौण्या वृत्त्या आश्रितं कर्म तत् साधनं यस्य स तथा । तत्र उपचारे मुख्यार्थबाधं बीजमादर्शयति **'असंभवात्'** इति । नहि द्रष्ट्रन्तरमस्ति अनवस्थानादिति उक्तमसकृत्, वक्ष्यते च । निमित्तं च प्रकाशमानत्वं, प्रयोजनं च स्फुटदृष्टाभिमतघटादितुल्यताप्रतिपादनेन अनपह्नवनीयत्वप्रख्यापनम् । यथा दृष्टोऽर्थो विमर्शं विना न सुखविश्रमाद्यर्थक्रियासु, तथा आत्मा अपीति दृष्टान्तदार्ष्टान्तिकताख्यापनमपि प्रयोजनम् । तेन सूत्रं वृत्तिश्च यद्यपि प्रकृतविषये, तथापि अर्थद्वयसाधारणे योज्ये । तत एव टीकायां **'दृष्टस्यापि'** इत्यादि **'अहीयत'** इत्यन्तं मुख्यतया दृष्टान्तविषयम् । तदाह **'वाचोयुक्ति'** इति । एतदेव वाचोयुक्तेर्वैचित्र्यं यत् परिमितेन यत्नेन प्रतिपाद्यवस्तुसंग्रहः । **'स्वसंवेदनसिद्धस्य'** इत्यपि

वृत्तौ गौणं द्रष्टव्यं सुखादिवदनपह्नवनीयतां निरूपयितुम् । पूर्वं हि स्वसंवेदनसिद्धत्वं **'नापि स्वसंवेदनसिद्धत्वमात्मनः'** इत्यादिना दूषितम् । सूत्रे निमित्तार्थे सप्तमी । यतोऽयमीश्वरो दृष्टोऽपि अनुपलक्षितः, ततः प्रत्यभिज्ञा प्रदर्श्यते । सामर्थ्यात् तस्यैवेति लभ्यते । स एष सामर्थ्यलभ्योऽर्थः षष्ठ्या वृत्तौ व्याख्यातः; निमित्तसप्तम्यर्थस्तु **'अहृदयंगमत्वात्'** इति हेतु-पञ्चम्या व्याख्यातः । सूत्रे सप्तम्या दर्शितो वृत्तावपि षष्ठ्या व्याख्यातः । मायाकृतो व्यामोहो—मायाव्यामोहः । माया च परमेश्वरस्यैव शक्तिः । एतच्च सूत्रेऽपि उक्तं **'मोहवशात्'** इति । मोहयतीति मोहः—ईश्वरः, तस्य वशः सामर्थ्यं मायाशक्तिस्ततः; मोहयत्यनेन शक्तिविशेषणेति वा मोहो मायाशक्तिस्तस्या वशः—सामर्थ्यं मोहनकार्यं प्रति अविरामः । यथोक्तं

'माया विमोहिनी नाम·············।' (वि० भै० ९५)

इति । मुहिर्वा मोहः आवरणं तस्य वशोऽविच्युतिरिति क्रियया शक्तिः, तया च शक्तिमानाक्षिप्यते । तेन पशुप्रमातॄणामख्याति-रूपो मोहः । कारणं च अस्य ईश्वरशक्तिरिति स्वरूपतः कारण-तश्च निर्वाच्यतैव । न खलु अनिर्वाच्याकारः कश्चिदविद्यात्मा मोहोऽवस्तुत्वेन अस्य इयद्वैचित्र्यप्रथनसामर्थ्यासंभवात्, संभवे वा पूर्णमेव वस्तुत्वम्, न अनिर्वाच्यता । नापि साङ्ख्यदृशि इव रजस्तमोवृत्तिर्मोहः । तस्य जडत्वेन प्रवृत्तिनिवृत्तिवैचित्र्यानुपपत्ति-र्यतः । तस्मात् परमेश्वरस्वातन्त्र्यमेव मायाख्यं मोहयतीत्याशयेन आह **'नतु अन्यथा'** इति । ननु दृष्टं च अनुपलक्षितं चेति कथ-मित्याशङ्क्य आह **'दृष्टस्यापि'** इति । हृदयं विमर्शः, तत्प्रा-प्तिपर्यन्तं दर्शनमुपलक्षितत्वम् । तस्मिन् सति समुचितव्यवहा-रोपयोजनं, न अन्यथा मार्गदृष्टे तृणादाविव । तेन हृदयेन सह



सात्मता आत्मरूपता साकल्यात् आत्मरूपताध्यवसायो वा । सात्मा इति साकल्यादावव्ययीभावे······निनि वा । दार्ढ्यं व्याचष्टे **'प्रमात्रावेशात्'** इति । हृदयविश्रान्तिर्हृदयङ्गमत्वं च नाम किमित्याह **'प्रकाशमुपारूढानां'** प्रमातृप्रकाशबलेन प्रकाशमानानां, नतु स्वयम् । एतदर्थमेव उक्तं **'प्रमात्रावेशात्'** इति । ननु हृदयं गच्छति प्राप्नोतीति हृदयङ्गमम्, कथं च परामर्शो हृदयमिति । आह **'परामर्शलक्षणो हि'** इति ।

'चितिप्रत्यवमर्शात्मा परा वाक्स्वरसोदिता ।' (१।४५)

इति उपक्रम्य,

सैषा························ ।' (१।१४)

इति उक्तम् । एतत् तात्पर्येण व्याचष्टे **'नीलादि'** इति । यथा 'सत्त्वं लघु प्रकाशकम्' इति 'ज्ञानं क्षणिकं कार्यं कारणम्' इत्यादिरेकस्यैव निरंशस्य तत्तद्व्यावृत्तिबलेन धर्मिणो धर्माणां च अन्योन्यं भेदः कल्प्यते तत्तदंशविमतिशान्तये, तथा प्रकाशरूपे संवेदनेऽवभासविमर्शादीनां प्रत्युत इह दर्शने यत् यथा अवभास्यते, तत् तथा सदिति परोपदेशकाले सृष्टोऽयं धर्मधर्मिभेदः पारमार्थिक एव ॥ यथैव च सृष्टः, तथैव पारमा-र्थिकः—इत्यभेदविश्रान्ततैव तथैवसृष्टेः, अन्यथा घटपटवत् को धर्मधर्मिभावः स्यात् । एतदभिप्रेत्य आह **'अव्यतिरिक्तोऽपि'** इति **'पृथक्कृत्यावसाय्यते'** इति च । अवसाय्यते इत्यनेन विकल्परूपो मायीयोऽयं व्यापार इत्याह । उपदेशावस्थापि मायैव । सा केवलं परमार्थमार्गावगावहनसौकर्येण शुद्धविद्येति वक्ष्यते । इदं नीलमवभासते इति बोधबहिर्भूतं शुद्धं यदिदमिति संमतं, तत्सामानाधिकरण्येन अवभासः स्फुरति । ममेदमवभा-सते इत्यत्र हि ममेत्यंशे विश्रान्तमहंभावे निगीर्णमिव नीलं प्रका-

शसंबन्धिना अवभासलक्षणेन धर्मेण स्पृश्यते इति न अतीव
दूरम्। बोधबहिर्भूते तु शुद्धे अवभासो यत् प्रकाशते सामानाधि-
करण्येन यतः केषांचिदर्थगता प्रकटतेति मतम्, ततो बोधस्त-
मवभासं भृत्यमिव विरुद्धसंक्रमणशीलमुभयवेतनतया व्यभिचा-
रिणं शङ्कते। अहं विमृशामीति तु विमर्शभूमिरियमसूर्यंपश्येव
न बहिर्मुखतां स्पृशति, अत एव नीलस्य तत्र कर्मतैव विमृश्यते
इति प्रतीतेरियं मया विमृश्यते इत्यस्यां च दशायां दृशोऽन्तर्मु-
खतानिर्भासात्। इदं नीलं भातीति तु ममेत्यपिसंवेदनस्पर्शे
बहिर्मुखताप्राधान्यमेव दृशः स्फुरति। तत एव अहन्ता गुण-
भूता, यतो ममेति अनुवदनस्थानमिदं षष्ठ्या निर्दिश्यते।
एतदुक्तं भवति—प्रकाशस्वातन्त्र्यमिह बोधसंवेदनादिशब्दवा-
च्यम्। स्वातन्त्र्यं च नाम यथेच्छं तत्र इच्छाप्रसरस्य अविघातः,
तेन स्वयं प्रकाशते परात्मना प्रकाशते इति अनवच्छेदनया
प्रकाशमानता, तदेव स्वातन्त्र्यं परात्मना प्रकाशते इति। एत-
देव उच्यते परं प्रकाशयतीति। एतदेव हि राज्ञः सुतरां युद्धे
स्वातन्त्र्य—यत् युद्ध्यते योधयति चेति। तत् स्वयं निर्भासते
निर्भासमानं घटादिकं निर्भासयतीति इयति क्रियासमुदाये········
संविदादयो वर्तन्ते इति तावत् समस्तांशस्वीकारेण विमृशामीति
वर्तमानं धर्मिरूपसारम्। आभासते इति तु भागमात्रम्।
'**धर्मः**' इति प्रकाशस्वतन्त्रवपुषो धर्मिणो योऽवभासो धर्मः, तत
उत्कृष्यते विमर्श इति संबन्धः। ननु विमर्शस्तावत् शब्दनसंव-
लिता प्रतिपत्तिः। नच संवेदने शब्दनमस्ति अविकल्पनीयत्वेन
संकेतविषयत्वाभावात्। यत्र च संकेतो युज्यतेऽर्थे, तत्र यो
विमर्श इदमिति; स नीलेनैव सामानाधिकरण्यमविकलमव-
लम्बते। यत्तु उक्तं विमृशामीति, अन्तर्मुखत्वेन चकास्तीति;



तदवभासेऽपि तुल्यमवभासयामीति अन्तरेव विश्रान्तेः। तत्
कथमुक्तं—विमर्शो न कदाचिदिदन्ताभूमिमास्कन्दतीत्याशङ्क्य
आह '**स्वतोऽपि विशुद्धस्य**' इति। अपिशब्द उत्तरापेक्षया
समुच्चये। स्वस्मिन्नपि यो विमर्शः, योऽपिच इदं नीलमिति
विभिन्ने नीले, स उभयोऽपि प्रमातृमात्रे प्रमातरि एव विश्रा-
म्यति, नतु प्रमेये इति संबन्धः। '**शुद्धस्य**' इति कर्तरि षष्ठी।
शुद्धत्वेन नीलाद्युपरक्तात् प्रमाणरूपात् प्रकाशात् तदनुपरक्ततया
प्रमातुर्विशेष उक्तोऽहमित्यविच्छेदप्रकाशविश्रान्तिलक्षणः। अत
एव चमतो भुञ्जानस्य करणं संरम्भोऽहमसौ नीलादेर्भोक्तेति।
ननु अहमिति शब्दनं सांकेतिकं संकेताभावे संकेतास्मृतौ च
कथं स्यात्। नेदं सांकेतिकमित्याह '**प्राणभूतः**' इति आत्म-
भूतोऽव्यतिरिक्तः। अत्र हेतुः '**जडः**' इति। जडात् हि चेतनस्य
विमर्शकृत एव विशेषः, अन्यथा प्रकाशादप्रकाशस्य कथं भेदः।
तदाकारत्वं तज्जन्यत्वं तदाकृष्टत्वं तत्समानसामग्रीकत्वं जडस्यापि
दर्पणधूमायोरसादेरस्ति। नच वाच्यं विमर्शस्यापि अविमर्शात्
कथं भेद इति विमर्शस्य पार्यन्तिकविश्रान्तिस्थानत्वेन अपर्यनुयो-
ज्यत्वात्। नीलं हि कुतस्तथा प्रकाशते, यतस्तदपि कुतस्तथा विमृ-
श्यते, यत एतावति पर्यवसितं प्रमेयस्य प्रमेयत्वं प्रमातुश्च प्रमा-
तृत्वमिति न अधिकमुपयाच्यते। अपिशब्देन प्रमेयवृत्तित्वं संभा-
व्यमानत्वेनाह। '**अहन्ताविमर्शमयः**' इति। यदुक्तं

'इदमित्यस्य विच्छिन्नविमर्शस्य·········।' (अ.प्र.सि.१५)

इत्यादि। निमील्य हि नयने नीलमिदमिति विमृशति। तत्र च
अयं परमार्थः—अहं नीलप्रकाशतया प्रकाशे इति। '**तावता**'
इति अधिकानपेक्षामाह। विशुद्धे नीलाद्युपरागशून्ये प्रमातरि या
चित्स्वरूपता विमर्शमयत्वं, तत्र सात्मता आत्मना सादृश्यमात्मरू-

पतासंपत्तिरात्मरूपतासाकल्यमात्मताविश्रान्तिरात्मरूपताध्यवसानम् । किं बहुना । आत्मनि विमर्शस्य स्वरूपे सर्वथा निमज्जनमेकीभावोऽर्थस्य । तस्यां सत्यां मेऽर्थस्य असौ प्रमाता भवति यः शुद्धप्रमाता । एवं च सति योग्यतामात्रेण यत् नीलादि प्रमेयमभूत्, तत् वस्तुतः प्रमाविषयतापत्त्या प्रमेयं भवति । **'अन्यथा'** इति यदि विमर्शरूपता न भवेत्, तत् विमर्शसामान्याभावे तद्विशेषोऽध्यवसायात्मको निश्चयो न भवेत् व्यापकसामान्याभावे व्याप्यविशेषासत्ताप्रसङ्गात् । ततश्च विषयः सन् न सन्, नीलो न नीलः, इह न इह, इदानीं न तदानीम्, मया दृष्टोऽमुना दृष्टः इत्येवमन्यतरेणापि रूपेण न कश्चिदसौ स्यादिति द्विविधस्वभावेन आधारस्वरूपात्मना देशेन कालेन विषयतया च न किंचिदस्य स्वरूपतत्त्वमवतिष्ठते । न किंचित्त्वमपि न अवतिष्ठते, अनैकान्तिकरूपतापि न पर्यवस्येत् । तदाह **'दोलायमानतैव'** इति । शुद्धस्य प्रमातृत्वस्य न दोलायमानता शङ्क्या अविरतप्रकाशत्वात् । अर्थप्रमातृत्वस्य च इयमेव अविचलता या प्रमेयस्य, नतु अन्या काचिदिति पुनः सा पृथक् न उपसंहृता । लोकस्य च बाह्यार्थसाध्यामर्थक्रियां प्रति भरः । तेन प्रमेयस्य उपसंहारः कृतः । उपक्रमे च प्रमातैव प्रपतति, ततः प्रमाता प्रमाता भवतीत्युक्तम् । अन्वाचयेन च तत्र प्रमेयम् । अहमित्युपक्रमा, नीलं–जानामीतिमध्या, नीलमेतदर्थक्रियाकारीत्युपसंहारा लोकस्य प्रतीतिः । ननु मार्गगतौ तृणादि अवभातं च न विमृष्टमित्याशङ्क्य आह **'रथ्यागमनादौ च'** इति, **'एतदपि'** इति । अपिशब्देन इदमाह—रथ्यागमनेन यत एव तृणादि भातमपि अभातं तृणादिरूपेण अविमृष्टत्वात्, तत एव भातं विमर्शे सति भातं भवति इदन्तांशमात्रेणेति, अतो व्यति-



रेकोऽन्वयश्च अत्रैव प्रदर्शयितुं शक्यावेव प्रकाशविमर्शयोरिति । एवं मुख्यतया दृष्टान्तपृष्ठे सूत्रवृत्त्यर्थयोजनं टीकाकृता कृतम्, तत्प्रसङ्गेन तु दृष्टान्ततयैव मायाप्रमातृपृष्ठे । एतदेव दार्ष्टान्तिके योजयति **'एवमस्य'** इति । तथा प्रमेयं विमृष्टं प्रमेयम् । तस्य च एतदेव विमर्शनं—यत् नीलप्रकाशरूपोऽहमि आत्मनि प्रमातृरूपविमर्शनं रूपम् । एवमस्यापि प्रमातृरूपस्य इदमेव विमर्शनं–यत् विशुद्धेश्वरसदाशिवरूपतोपक्रमपरमशिवात्मकस्वतन्त्रस्वस्वभावविमर्शनम् । यथाच नीलमात्रेण अर्थिनस्तत्प्रमातृत्वं विमृश्यमानमपि नीलविमर्शं प्रति उपकरणीक्रियमाणत्वेन अविमृष्टं भवति, एवं नीलेन तत्प्रमातृतामात्रेण च अर्थिनः परमेश्वरस्वतन्त्रस्वस्वभावामर्शनं भवदपि अर्थनीयबाह्यार्थक्रियां प्रति सततवाहिदृढाग्रहग्रस्ततया असंचेत्यमानत्वेनापि स्वरसवैवश्येन हठादेव मायाप्रमातुरुपकरणीभावं प्रापयतोऽसत्कल्पम् । **'पूर्ण'** इति नीलाद्यसंकोचितो योऽहंभावाख्यो विमर्शस्तत्स्वभावे यश्चमत्कार आनन्दात्मा परमो भोगः, तस्य या आपत्तिः प्राप्तिः; पूर्णाहम्भावस्य वा या चमत्कारापत्तिः प्रधानतया विमृश्यमानतापत्तिः; तया उपलक्षितो यः स्वात्मरूप ईश्वरस्तस्य उपलक्षणं–सर्वैरेव ईश्वरस्य लक्षणैर्नित्यत्व–विभुत्व–सर्वकर्तृत्व–सर्वज्ञत्व–सर्वशक्तित्वप्रभृतिभिरनीश्वरासाधारणैर्धर्मैः **'स्वस्वभावीकृतैः'** इति अपरामृष्टतया ये न स्वात्मनः स्वभावा अभूवन् प्रकाशविमर्शसारत्वात् वस्तुव्यवस्थायाः, अत एव हि नरेश्वरविवेकः पारमार्थिक एव, विद्योदये तु प्रादुर्भूतैस्तैः स्वस्य आत्मनः स्वभावतामापादितैः–भवति । किं तदुपलक्षणमुच्यते इत्याह **'तत्'** इति भैरवेश्वरलक्षणैर्यः सम्यगावेशः आ समन्तात् तत्कर्तृकः स्वीकारः, तस्य यो रसः प्रवाहस्तस्य यत् आ समन्तात् स्वादनं परामर्शनं

—अहमेवंभूतोऽप्रतियोगिरूप इति अविकल्पकम्—ननु शरीर-प्राणबुद्ध्यादिना नीलादिना च वेद्येन अपृथक्तया विमृश्यमानत्वेन न्यक्करणं—तस्य लाभ इति। एतदुपलक्षणं हृदयस्य आवर्जनं तदु-न्मुखीकरणं सत्यमेतद्रूपमिति हृदयङ्गमत्वं च उच्यते । ननु कथं तदेवंभूतमनास्वादितपूर्वमैश्वर्यमास्वादगोचरीभवतीत्याशङ्क्य आह **'हृदय'** इति । **'भवेत्'** इति संभाव्यमेव अस्य भवनमिति यावत् । असाधारणमनीश्वरे यदसंभाव्यं ज्ञत्व-कर्तृत्वादि, तदेव अभिज्ञानमेकधर्मात्मकस्वरूपमुखेन अनन्त-धर्मचित्रवस्तुस्वरूपप्रवेशाभ्युपायः, अभितः स्वरूपसर्वस्वस्वीका-रेण वस्तु ज्ञायते येनेति; तस्य ख्यापनेन प्रथनया। अनेन **'शक्त्याविष्करणेन'** इति विवृतम्, **'इयम्'** इति दृढ-शब्देन, **'प्रत्यभिज्ञा'** इति भावसाधनं निश्चयशब्देन। ननु त·········न्येव स्वप्रकाशत्वात् ततश्च अविच्छन्नख्यापनस्य का ख्यापनेत्याशङ्कां प्रदर्शयन् शमयति **'यद्यपिच'** इति **'वक्ष्य-माणनयेन'** इति।

'कलोद्बलितमेतच्च चित्तत्त्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ॥' (३।२२)

इति वक्ष्यते। **'प्रथां नीयते'** इति। अत्रापि **'वक्ष्यमाण-नयेन'** इति संबन्धः। वक्ष्यते हि

'मुख्यत्वं कर्तृतायास्तु बोधस्य च चिदात्मनः ।
शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम् ॥' (३।२३)

इति। तच्च इदं चिद्रूपस्य अन्यत्र अनुपकरणीकरणं शरीरादौ, कायप्राणादेर्वा कायादिरूपतानिमज्जनेन चिद्रूपतोद्रेचनमिति। एतदेव प्रभावः—प्रकर्षेण यद्वशात् भाव्यते अन्यविलक्षणतया च कर्तव्यं भावयतीति । एतच्च परापरसिद्धिप्राधान्येनेति



वक्ष्यामः । **'सिद्धस्य'** इति स्वरूपतो ज्ञप्तितश्च । ननु च सिद्धे वस्तुनि यत् प्रमाणं, तत् किल व्यवहारसा-धनमिति प्रसिद्धम् । ततश्च तदनुसारेणैव वृत्तौ वाच्यं प्रत्य-भिज्ञानमात्रं साध्यते इतीत्याशङ्क्य आह **'सर्व'** इति। जड-पदार्थविषये हि सिद्धेऽपि यत् प्रमाणं व्यवहारसाधनं, तद-वश्यमसिद्धस्य कस्यचिदंशस्य अन्ततस्तथा प्रख्योपाख्यारूपस्य व्यवहारसंपत्तिमपूर्वां करोति। आत्मनि तु ईश्वरे न किंचिद-संपन्नं साध्यमस्ति प्रख्योपाख्ययोरपि सिद्धत्वात्, तदसिद्धौ प्रमेयलेशस्यापि हि न काचित् सिद्धिरिति उक्तम् । अतस्तद्व्य-वहारमात्रमपि नेह साध्यते, अपितु उपांशु च्छन्नं स्थितं सत्, उप समीपे इति हृदयसंगमनेन प्रधानतया दृश्यते। आत्मनि ईश्वर-रूपे ये प्रख्योपाख्ये ते मा अन्यत्र देहादौ नीलादौ च उपक-रणीये भवेताम्, अपितु ते एव प्रधानतया पश्यतेति। तेन वृत्तौ सूत्रानुसारेणैव **'उपदर्श्यते'** इति उक्तम्। लोके जडविषये यत् व्यवहारमात्रस्य साधनं, तदपि इह अजडे क्रियमाणं प्रद-र्शनेन सममविकलं प्रदर्शनमात्रावशेषं प्रदर्शनेन च पश्य—पश्येति अवधानदार्पनारूपेण तुल्यम्। तदत्र सूत्रे **'दृष्टे'** इति कर्मणि दृष्टान्तावेशेन अकर्मकत्वात् कर्तरि एव दार्ष्टान्तिकाभिप्रायेण व्याख्याने निर्विवादसिद्धता नाम दृष्टत्वमुभयत्र तुल्यम् ॥ ३ ॥

भाविसूत्रार्थं संक्षेपेण निरूपयति **'एवं च'** इति। आत्मैव ईश्वरः, स च सिद्धः इति यदुक्तम्, तदेवं; तस्य या प्रत्यभिज्ञा करणभावसाधनत्वेन आविष्क्रियमाणा शक्तिस्तत्कृतश्च दृढनि-श्चयः, तदपि एवमित्येतद्वस्तु सोपपत्तिकं कृत्वा निश्चयपर्यन्तं दर्शयितुमाह। उपोद्घातानन्तरं वक्ष्यमाणस्य शास्त्रस्य सा प्रत्य-भिज्ञैव ज्ञानक्रियाशक्तिरूपा अर्थोऽभिधेयो ज्ञानक्रियाधिका-

राभ्यामागमसंवादितार्थाभ्यां तत्त्वार्थसंग्रहनिरूपिततात्पर्याभ्यां ज्ञानक्रियाशक्त्योर्विस्तरतो निरूपणात् । दृढनिश्चयश्च समस्तस्य शास्त्रस्य प्रयोजनम् । जडभूतानां जीवदाश्रयं प्रतिष्ठानम्, जीवतां च जीवनं ज्ञानक्रिये एव यस्मात्, तस्मात् तथेति आत्मैव ईश्वरः सदा सिद्धः इति हिशब्दो हेतुहेतुमद्भावं द्योतयति । आत्मनः सिद्धत्वम्, ऐश्वर्यं च यदुक्तं **'कर्तरि ज्ञातरि'** इति, तेन प्रकारेण, यस्मादिदं सकललोकसंमतं जडानां जीवन्मग्ना सिद्धिः, जीवनस्य ज्ञानक्रिये तत्त्वमिति उपपद्यते । ननु जडा- जडवर्गस्यैव अयं वृत्तान्तो निरूपितो, ननु अन्यस्य । सत्यम् । अन्यस्तु न कोऽप्यस्तीत्याह वृत्तिकृत् **'वस्तूनाम्'** इति । ननु एवं सर्वभावानां यदि द्वैराश्यं, तदा

'क्रियासंबन्धसामान्यद्रव्य............।' (२।९)

इत्यादौ

'द्वयात्मा तद्रजो दुःखं श्लेषि सत्त्वतमोमयम् ।' (४।६)

इत्यादौ च यस्तृतीयराशिसंभवो वक्ष्यते, स कथमित्याशङ्क्य आह टीकाकारः **'भावाभावयोः'** इति; नीलं बहिरबहिरत- त्प्रच्यवः, तत्प्रच्यवाविनाभूताश्च पीतादय इति न नीलं ते, नापि तेऽनीलम्, किन्तु आभासपरमार्था एव सर्वेऽर्था इति आभा- सस्थाने प्रमातरि सामानाधिकरण्येन वैयधिकरण्येन वा नीला- नीले तावत् विश्राम्यतः । प्रमातृविश्रान्तं च वस्तूनां पारमार्थिकं रूपम् । तच्च तत्समन्वयशब्देन उक्तम् । तस्मिन् रूपे सति तथैव यत् बाह्यत्वेन अध्यवसीयते, तदपि प्रमात्रा न तत्कालसृष्टम्; अपितु अध्यवसितमीश्वरसृष्टवस्तुपृष्ठे तथैव अर्थक्रियाकरणात् वस्त्वेव । भगवच्छिवशक्तिसदाशिवेश्वरविद्यामायासृष्टिः प्रमातृ- सृष्टिश्चेत्यादि हि सत्यासत्यतद्द्वयादिरूपेणेति वक्ष्यामः ।



'तद्द्वयालम्बना....................।' (२।११)

इत्यादौ । ततश्च यदा वैयधिकरण्येन सृज्यते सृष्टा अर्थरूपं नीलस्य अनीलं कार्यं कारणं सहकारि विरोधि व्यवधि वा आधार इत्यादि, तदा बहिरसौ संबन्धः । सामानाधिकरण्यसृ- ष्टावपि पारतन्त्र्येण सृष्टौ चित्रं रूपम्, पटस्य रूपं यदेव नीलं तदेव अनीलमिति; अत्र तादात्म्यसंबन्धः सृष्ट एकार्थसमवायो वा । एकानेकचित्रवादेन च विरोधस्तस्य अनाभासनसारस्य प्रमातृकृतत्वात्, अनाभासनाभावे तदभावात् । स्वातन्त्र्येण निर्माणेऽवयवि द्रव्यम्, यो नीलः पटः स एव अनीलः इति । यद्यपि परमाणोरपि चित्रता उपगता, आकाशादेरपि घटेन संयोगः, पटेन विभागः इति युगपद्विरुद्धसंयोगतदभावमयता; तथापि सकलप्रमातृगोचरे वस्तुनि विचारः । या च परमाण्वा- काशादिप्रतिपत्तिर्लौकिकी, सापिच योगिनां तद्व्यारिकैवेति अवयविपदं द्रव्यविशेषणम् । पृथगेव वा द्रव्यग्रहणं तत्सं- ग्रहार्थं प्रसिद्धत्वेन, प्राधान्यात् तु पृथगवयविपदमुपात्तम् । उपलक्षणं वा अवयविद्रव्यपदम् । अत्र च सर्वत्र प्रमातृविश्रा- न्तिरूपः समन्वय एव प्राणितम् । बहिरपिच तथैव अर्थक्रिया- करणात् वस्तुतैवात्रेत्याह **'वस्तु संभवेत्'** इति । ननु एवं तृती- यराशेरुभयात्मनोऽनुभयात्मनो वा संभवे विपक्षात् व्यावृ- त्तोऽपि हेतुर्न साध्येन व्याप्येत गत्यन्तरक्षयायोगात् । न । ते........नीलात् व्यावृत्तं हि नीलानीलादपि व्यावृत्तम्, नील- मपि हि तदनुभयरूपं पाशवविकल्पसृष्टमेव भवति न बाह्य- मिति तत्रापि न शङ्कितव्यम् । किंच अनुमानस्य ईश्वरनियत्यु- पजीवनेन प्रामाण्यं वक्ष्यते

'योगिनिर्माणताभावे................।' (२।४३)

इत्याद्युद्देशेषु । नियतिश्च प्राच्यप्रसिद्ध्युपजीवनी न विपक्षव्यावृत्तिं प्रधानत्वेन उपजीवति । तदस्तु अत्र तृतीयो राशिः । चित्तत्त्वे तु भावानां विश्रान्तिः, नतु चित्तत्त्वस्य अन्यत्र, येन चिदचितोः सामानाधिकरण्येन अन्यथा वा नीलानीलवत् तृतीयराशिरुन्मीलेत् । ननु भगवत्परमशिवविजम्भारूपात् शक्तितत्त्वादेव आरभ्य सदाशिवेश्वरविद्याभूमिषु परापरदशायां सामानाधिकरण्येन अहमिदमिति च वक्ष्यते

'सामानाधिकरण्यं च सद्विद्या·········।' (३।३)

इत्यादौ । मायापदे च शून्यधीप्राणदेहादेश्चिद्रूपताभिषेकेण चिदचिद्रूपता वक्ष्यते । तथाच नरेश्वरविवेकः

'अणवश्चिदचिद्रूपाः···············।'

इति । महाप्रमातरि च मायाप्रमातृप्रमेययोर्युगपत् प्रकाश इति निरूपयिष्यते

'ग्राह्यग्राहकताभिन्नावर्थौ भातः प्रमातरि ।'(१।३१)

इति । तत् कथमुक्तं ननु चिदचितोरपरचित्तत्वानुप्रवेशः इति । अत्रोच्यते—इह तावत् परधाम्नि न किञ्चित् जडं नाम, मायापदे तु नीलादयः सृज्यन्ते । तेषां च इयमेव सृष्टिः—यदन्योन्यतश्चिद्रूपा अचिद्रूपाश्च नानेति बहुशाखेन वैचित्त्येन आभासनम् । इयं हि सा पूर्णत्वाख्यातिरिति वक्ष्यते । अत्रापितु पदे न चित्तत्त्वस्य सृष्टिः काचित् तथात्वे जडतापत्तेः । अहमिदमिति च प्रकाशे योऽहमंशः, स परमशिव एव पूर्णः । तत्र परमिदमंशः उन्मीलन् अहमंशे एव प्रतिष्ठां लभते । यत् वक्ष्यते

'अत्रापरत्वं·····················।' (३।५)

इति उपक्रम्य

'परताहन्तयाच्छादात्···············।' (३।५)



इति । नहि चिदचिद्रूपयोस्तुल्यकक्ष्यता । चिद्रूपस्य देशकालस्वरूपवैचित्र्यं हि न कदाचित्, अचिद्रूपस्य तु न तद्वैचित्र्यविरहः कदाचित् । सामानाधिकरण्यं तु वैयधिकरण्यनिष्ठितपृथक्त्वप्रकाशाभावमात्रे उपचरितम् । ननु अहन्तेदन्तयोस्तृतीयमधिकरणं किञ्चित् समानमस्ति । नच यथा नीलमेव अनीलम्, अनीलमेव नीलमिति एकप्राणीकरणेऽपि तद्विभक्तोभयरूपप्रकाशः; तद्वत् योऽहं, तत् नीलम्, यत् नीलं, तदहमिति प्रकाशे, अपितु नीलमेतत् स्वयं निःसारमहंप्रकाशप्राणितमेवेति । अत एव

'अणवश्चिदचिद्रूपा··············।'

इत्यत्र

'··················चित्त्वादेको महेश्वरः ।

ते न केचिदचित्त्वात्·················· ॥'

इति उक्तम् । मायाप्रमातुश्च यः प्रकाशः परमे प्रकाशे, न असौ पृथग्भूतस्य चिद्रूपस्य, अपितु शरीरप्राणादेर्वेद्यरूपस्यैव । तस्य तु प्रमातृता परमशिवप्रकाश एव, मायाकृतात् तु अभिमानमात्रात् तस्य चिद्रूपताकल्पनं न तात्त्विकम् । तथाहि अजडप्रमातृसिद्धिः

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥
तदात्मनैव तस्य स्यात्कथं प्राणेन यन्त्रणा ।' (२१)

इत्यादि । एतच्च सर्वं **'चित्तत्त्वस्य स्वयंप्रकाशत्वात्'** इत्यनेन उक्तम् । यत् स्वयमेव प्रकाशते न अन्यत्र प्रकाशत एव च, नतु प्रकाश्यतेऽन्येनेति, तदेव तत्त्वतश्चिद्रूपम् । तस्य कथमन्यत्र आभासनम्, अन्यत् तु अतत्त्वतश्चिदिति । **'मायीय'** इति

भेदव्यवहारो हि अयं ग्राह्यग्राहकभावलक्षणः सर्वस्य प्रसिद्धः, तदपेक्षया तदनुवादेन तत्त्वोपदेशः कर्तव्यः इति द्वैविध्यमुक्तम्। ननु पञ्च भूतानीत्याहुः 'पञ्चानां भूतशब्दवाच्यत्वम्' इत्यादौ तत् कथमुक्तं सूत्रे **'भूतानां जीवताम्'** इति । एतदाशङ्क्य आह **'जीवोऽपिच'** इति। सिद्धं भवतिक्रियाकर्तृरूपं हि भूतमुच्यते । तत् परमार्थतो जीवत एव भूतत्वमुचितम्, तत्प्रसादेन तु अपरस्य । पार्षदसमयस्तु अनियतः । सोऽपिच अत्र अस्त्येव । भगवद्गीतासु च यद्यपि

'बुद्धिर्बुद्धिमतामस्मि············।' (७।१०)

इत्यादौ संबन्धषष्ठी, तथापि बाहुल्येन निर्धारणषष्ठ्यः

'············पाण्डवानां धनञ्जयः।' (१०।३७)

इत्यादयः श्रूयन्ते। समानजातीयानामेव च निर्धारणमिति चेतनापि भूतरूपैवेति वस्तुग्रहणमिति वृत्तौ। **'तदपेक्षयैव'** इति। सा उक्तपूर्वा या अपेक्षा लोकयात्रापेक्षारूपा गुणभूतापिवा लोकयात्रा बुद्ध्या पृथक्कृत्य परामृश्यते इति षष्ठीसमासः। लोकयात्रायां लोकव्यवहारे हि ग्राह्यग्राहकव्यतिरिक्तं न वस्तु भाति। **'संसारिणाम्'** इति तत्त्वप्रत्यभिज्ञानेन अनुग्राह्याणामित्यर्थः। साक्षात्कारेऽनुभवात्मनि यत् प्रतिभासते, तदेव वस्त्विति दृढसंभावितपृथक्ताकत्वेन चिद्रूपे यत्नेन प्रवेशनीयमिति यावत्। ननु स्मर्यमाणविकल्प्यमानादेरपि अर्थस्य चित्प्रवेशो निरूप्य एव, ननु केवलमनुभूयमानस्यैवेत्याशङ्क्य आह **'न तद्‌तिरिक्तम्'** इति। अनुभववासनोपजीवित्वात् स्मृतेर्मनोराज्योत्प्रेक्षादिविकल्पानां च न तद्विचार इति। अस्फुरतो हि कथं भेदाभेदादि निरूप्यते। ननु शास्त्रितानां यत् भाति, तत् किमिदानीं चिद्रूपात् भिन्नमेव अस्त्वित्याशङ्क्य आह **'शास्त्रसंस्कृतानामपि'** इति ।



सांख्यस्य यद्यपि पञ्चविंशतिस्तत्त्वानि स्फुरन्ति, तथापि पञ्चैव भूतानि चेतना चेत्येतावन्मात्रे तावत् साक्षात्काररूपोऽनुभवः, न अधिके। तत एव तत्रभवतो धातुषट्कनिरूपणे एव विश्वं निरूपितं भवतीत्याशयेन तत्समीक्षोद्यमः। संभावनानुमानागमजनितेष्वपि ज्ञानेषु तदेव भासते, केवलं योजनामात्रमधिकम्। यथा पृथिवी एव या सुरभ्यसुरभ्यादिविचित्रगन्धा तत्रैव विशेषत्यागेन सौक्ष्म्येण च गन्धतन्मात्ररूपतेति। **'अनुभूतमेव'** इति अध्यारुह्यवादेन एवमुक्तम्। सुखदुःखमोहानां हि गुणानां साम्यव्यापकत्वादि समारोप्य प्रधानमुपकल्पितम्। तत्र च सर्वमनुभूतमेव सुखादि तावत् दृष्टमेव, साम्यं च मधुरकटुकादेर्दृष्टम्, व्यापकत्वं च पटे रूपस्येति। तस्मादिदं तात्पर्यम्—इह द्वयी गतिः प्रधानमिदमिति। किंचित् पृथक् स्फुरति चेत्, रूपादिमयमेव। अथ न इदन्तया स्फुरति, अथच स्फुरति; तदहन्तयैव वा पृथक्तया वा गत्यन्तराभावात्। अथ न स्फुरति, तत् न किंचित्। ननु स्फुरति च इदन्तया रूपाद्यतिरिक्तं च तथैव च उत्प्रेक्षितत्वात्। सत्यं, तथापितु जानाति, ममान्तरे तत् स्फुरति, प्रमात्रन्तःस्फुरत्तैव च उपदेश्या। प्रमात्रैकात्म्यमान्तर्यमिति हि वक्ष्यते। सा चेत् सिद्धा, किमन्येन। अत एव आह **'सुकर'** इति। सुकरं सर्वजनवेद्यं प्रमातरि अन्तर्भावनमपृथग्भावनं यस्य तत् तथा। यतस्तद्वस्तुना खपुष्पादिना बाह्येन तुल्यमिति तदनूद्य यदि तस्य प्रमात्रपेक्षया द्वयं प्रमातुरभिन्नत्वं साधयितुमारभ्येत, तदन्येभ्यः शास्त्रेभ्यः पृथक्त्वप्रधानेभ्यो न अस्य वैलक्षण्यं स्यात्। तथाहि खपुष्पं प्रमातुर्न पृथगिति उक्ते घटादेर्निर्भासमानस्य न अद्वयरूपत्वमुपपादितं भवति। यस्य च खपुष्पस्य उपपादितं, न तत् पृथग्बुद्ध्या कश्चन प्रतिपद्यते। कथं **'सुक-**

**रप्रमात्रन्तर्भावनम्**’ इति । आह ‘**तथाहि**’ इति । येषां विकल्पनमेकं प्रयोजनं, नतु बाह्यं किञ्चित्; विकल्पने एव च ये भावाः, नतु बहिस्तत्र अस्फुरणात्, ते वैकल्पिकाः । तेषामात्मरूपाणां ज्ञानाकारमयानामवभासं ‘**भूयसा**’ इति सौगतवेदान्तादिदृशा प्रतिपन्नाः

‘.............भ्रान्तिः सा वासनामयी ।’

इत्युक्तत्वात् । ननु आत्मा वा ज्ञानं तद्वासना वा तदाकारो वा तत्त्वेन न भाति, अपितु इदं रजतमिति इदंरूपबाह्याकारेण । सच एषामसन्, असतश्च कोऽन्तर्भाव इत्याशङ्क्य आह ‘**सत्ख्यातावपि**’ इति । इह अन्तर्भावेन न किंचित् कृत्यम्, केवलमात्मैव अस्ति, नतु अन्यदिति पृथक्त्वेन द्वैतपरिवर्जनमुपदेश्यम् । अवस्तुनश्च अवस्तुत्वात् पृथक्त्वपरिवर्जनं स्वतःसिद्धमेव । ननु यद्यपि तदवस्तु वैकल्पिकं, तथापि बाह्यरजततया तदध्यवसीयते । सा च अस्त्येवेति अवस्तुभूता कथमित्याशङ्क्य आह ‘**अध्यवसायापेक्षयापिच**’ इति । अध्यवसानं न वस्तुस्पृक्, कथमस्य तत् वस्तुतां वितरेदिति तावदास्तामिह । प्रधानविकल्पे तु इदं तत् बाह्यं घटादिमध्यनिविष्टं प्रधानमिति अध्यवसायो नास्ति । सेहि अविकल्पकदर्शनमूलः । तच्च इह नास्ति, विकल्पान्तरमूलतायां तु अनवस्थेति इयतोऽर्थस्य द्योतनाय अपिशब्दः । चशब्दः पूर्वपक्षशङ्कां सूचयन् प्रमेयं समुच्चिनोति । ‘**न किञ्चित्**’ इति । प्रधानादेर्न तादृशं रूपं किञ्चित्, यत् कृच्छ्रेण यत्ननिरूपणेन परिह्रियते द्वैतरूपेण पृथक्त्वेन परिवर्ज्यते । सांख्यैश्च अमुनैव आशयेन अनुमानागमादिवेद्यत्वेऽपि प्रधानादेरसंवेद्यपर्वत्वं प्रदर्शितम् । ‘**स्मरणविकल्पनादौ**’ इत्यादेः ‘**न किञ्चित् दुष्परिहरं स्यात्**’ इत्यन्तस्य ग्रन्थस्य इतिश-



ब्देन हेतुरूपतां द्योतयन् प्रकृतोपयोगमाह । निःसन्देहप्रसिद्धत्वं साक्षात्कारज्ञेयत्वं न किञ्चित् प्रति असिद्धत्वं च ‘**उपपादयितव्यम्**’ इति उपपादनार्हं यत्नेनेत्याशयः । ‘**उक्तं भवति**’ इति सूत्रवृत्तिभ्यामिति शेषः । एवं दृढन्यायघटना उक्ता तावत्—यत् यत्र लोकस्य सिद्धं, न तत् तत्र यत्नेन उपपाद्यं नीलस्य इव नीलत्वम् । तथाच प्रधानमायादावपृथक्त्वमिति यत्नेन उपपाद्यस्य व्यापकमप्रसिद्धत्वम् । प्रसिद्धत्वेऽपि हि यदि स्यात्, तत् सर्वत्र भवेदिति न जातु तूष्णीको जनः स्यादिति तद्व्यापककादाचित्कत्वविरुद्धसार्वत्रिकत्वप्रसङ्गादप्रसिद्धत्वेन यत्नसाध्यता व्याप्यते, तस्य च विरुद्धं प्रसिद्धत्वमिति व्यापकविरुद्धोपलब्धिः । अथ ये दृढन्यायनिबन्धं न सहन्ते कृपालोश्च न व्युत्पाद्याः, तान् प्रति सावहेलं पक्षान्तरं परिगृह्य सूत्रवृत्ती व्याचष्टे ‘**अथवा**’ इति । भूतशब्देन सूत्रे भवतीतिव्युत्पत्तिभाजा, वस्तुशब्देन वृत्तौ वसतीति व्युत्पन्नेन किं किं न संगृहीतमिति यावत् । प्रत्यक्षं पृथिव्यादि, परोक्षं तद्गतं देशकालावस्थाभिन्नं वैचित्र्यमत्यन्तातीन्द्रियं च अस्मदाद्यपेक्षया, नतु मन्त्रेश्वराद्यपेक्षया, प्रधानादि । ‘**संवेद्यलक्षणम्**’ इति जडशब्देन विशेषणादिति भावः । ‘**तथा निर्देशः**’ इति सूत्रे ‘**जडभूतानाम्**’ इति ‘**वस्तूनां जड**’ इति वृत्तौ । ननु बहूनां तनुकरणभुवनादिरूपाणां वेद्यानां ब्रह्मादीनां स्थावरान्तानां वेदकानां च तेनैव रूपेण ईश्वरैकात्मकत्वं किं नउच्यते, किमवान्तरे जडाजडतया वर्गद्वयसिद्धये सूत्रे जडजीवद्ग्रहणं वृत्तौ च जडाजडभेदपदमित्याशङ्क्य आह ‘**द्वैराश्येन च**’ इति । चकारः प्रमेयं समुच्चिन्वानः पूर्वपक्षं द्योतयति । एवमन्यत्रापि यथायोगं योज्यम् । अयं भावः—निःसंख्याका अपि अमी भावास्तावत् जडमजडमिति इयता रूपेण विमृश्यन्ते च प्रका-

श्यन्ते च तद्विमर्शप्रकाशपरवशत्वाच्च बहुत्वमुज्झित्वा द्वैधे शिष्य-
न्ते। तदेकतापि अभिन्नदुर्लभा। प्रकाशविमर्शरूपांश्च ईश्वर एव
स्वतन्त्रस्तानात्मभूतान् यथारुचि रचयति, नैषां किमपि प्रातिस्विकं
तत्त्वमिति। झटिति च अनन्तानामैक्यं कथमङ्गीकुरुते हृदयमि-
त्यपि वर्गीकरणम्। ननु अजडो वर्गः पूर्वं वाच्यः प्राधान्या-
दिति। निराकरोति **'जडस्यैव च'** इति। जडं हि पूर्वसि-
द्धमनूद्य चिद्रूपेऽन्तर्भावनीयं यत्नेन, नतु चिद्रूपस्य चिद्रूपान्तर्भा-
वनं यत्नसाध्यम्। व्यामोहात्तु यत् तत्र अनैश्वर्यं बहुत्वं च अभि-
मन्यते, तत् केवलमपसारणीयम्। तेन यत्नसाध्यचिदन्तर्भावनं
पूर्वं जडमुद्दिष्टम्। **'तत्र'** इति वृत्तिपदं पठित्वा व्याचष्टे **'तयो-
र्जडाजडयोः'** इति। इत्थं च अत्र अवतरणिका—विश्वस्य
तावदीश्वरमयत्वं वक्तव्यम्। तत्र जडस्य ईश्वरमयत्वे

'पुरुष एवेदं सर्वम्।'

इत्यादिन्यायेन वक्तव्ये किमन्तरालनिरूपितया जीवह्मतयेति।
तत्र आह **'जडात्मनः'** इति। अनिरूपितस्य अप्रकाशितस्य च
जडस्य खरशृङ्गप्रतिमादपि शोच्यस्य किं निरूप्यताम्। प्रकाश-
विमर्शौ च न तस्य निजौ। मम प्रकाशते, मया विमृश्यते इति
हि व्यवहारः। ननु ईश्वरसदाशिवशक्तिभुवि अहमिदमिति प्रका-
शविमर्शतादात्म्यमेव भावानामित्याशङ्क्य आह **'तदा च'** इति।
तत्र च किं द्वैतभ्रान्तेरपासनेन तस्या अभावादेवेति आशय-
शेषः। **'अद्य तु'** इति मायापदे यत्नोपदेश्यतादृशायाम्। द्वैतवा-
दिभिरपि यदङ्गीकृतं संविन्निष्ठत्वं विषयव्यवस्थानां, तत्
क्रमेण संवित्तादात्म्यं पर्यवसाययति **'जीवत्परतन्त्रा जीव-
ल्लग्ना जीवद्भूतमग्ना'** इत्यादिना। निष्ठा हि तदायत्तत्वं,
तदपि तद्विश्रान्तता, सापि च तदन्तर्लीनत्वमिति जीवत एवंभूतत्वं



वस्तुत्वमवशिष्यते इत्यन्तव्याख्यानपदे भूतशब्दस्य आशयः।
**'सिद्धपरतन्त्रभावाः'** इति। परैरपि तावदेषां संवित्पारतन्त्र्य-
मङ्गीकृतम्, यद्बलाच्च संवित्तादात्म्यमायान्तीत्यर्थः। **'वक्ष्यमा-
णनयेन'** इति

'प्रकाशात्मा प्रकाश्योऽर्थो नाप्रकाशश्च सिध्यति।' (१।३४)

इति। अजडप्रमातृसिद्धिरपि

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी।
जडाः........................॥' (१५)

इति। **'अनेन'** इति जडानामन्तराले जीवन्निष्ठतानिरूपणेन।
अमुमेव जीवत्सोपानारोहणद्वारेण जडानामीश्वरभावोपदेशम-
भिप्रेत्य तत्त्वार्थसंग्रहाधिकारे

'आत्मैव सर्वजन्तूनामेक एव महेश्वरः।' (१)

इति जन्तुग्रहणम्।

'आत्मैव सर्वभावेषु..........।' (२)

इति शिवदृष्टौ सप्तम्यर्थं यत्नस्वीकृतं व्याख्यातुं पठिष्यति
**'भूतत्वाविशेषेऽपि'** इति। न अन्यदेषां जडात् वैलक्षण्य-
कारि रूपमिति अभिप्रायः। **'जीवनसंबन्धः'** इत्यनेन क्रिया-
संबन्धोऽत्र प्रवृत्तिनिमित्तमिति हृदि निधाय समासकृत्तद्धितेषु
संबन्धाभिधानमिति मन्यमानः शत्रन्तं जीवच्छब्दं साध्यमाना-
व्युपरतजीवनक्रियावदभिधायकं सूचयति। जीवतामित्युपक्रम्य
जीवनं ज्ञानक्रिये इत्येकवचनेन संविदैक्यं पारमार्थिकमाह। ननु
जीवनं यदि ज्ञानक्रिये, तदा तत्संबन्धः स्वातन्त्र्यस्य हेतुरिति किं
केन संगतमित्याशङ्क्य आह **'ते एव हि स्वातन्त्र्यं वक्ष्यते'**
इति।

'चितिप्रत्यवमर्शात्मा परा वाक्स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥' (१।४५)

इत्यत्र हि प्रकाशरूपं ज्ञानं, विमर्शरूपा च क्रियेत्येतदेव स्वातन्त्र्य-
मिति निर्णायिष्यते। ननु भवतां ज्ञानक्रिये-स्वातन्त्र्यं, जीवनं
तु ते इति कुतः। तत् हि प्राणधारणमात्रमित्याशङ्क्य आह
**'जीवनं हि'** इति। हिशब्देन अस्य ग्रन्थस्य प्रागुक्तज्ञानक्रिया-
त्मकजीवनसमर्थनाय हेतुतां द्योतयन् पूर्वपक्षाशङ्कां सूचयति।
सत्यं, प्रसिद्धं प्राणधारणत्वेन जीवनम्, प्राणशब्दस्तु अत्र प्राणा-
दिपञ्चके वर्तते। तस्य च धारणं यथास्थानं यथाक्रियं च
अविचलद्रूपताकरणम्। तच्च चक्षुरादीनां च बुद्धीन्द्रियाणां
वागादीनां च कर्मेन्द्रियाणां मनोऽहङ्कारबुद्ध्यात्मना अन्तःकरण-
त्रयेण सह मिलितानां त्रयोदशानां बाह्यात् रूपदर्शनादेः शब्दो-
च्चारणादेर्नीलादिसंकल्पादेश्च वृत्तिविशेषात् या अन्या आन्तरी
वृत्तिरशक्तिविशेषान्ध्यादिविध्वंसितरूपदर्शनादिबाह्यवृत्तित्वेऽपि
एषामप्रतिहन्यमाना वृत्तिः संरम्भोद्यमनप्रयत्नादिपर्याया, तया
हि परवशीकृतो वायुर्नैसर्गिकीं तिर्यग्गतिमवधूय प्रागवाक्समोर्ध्व-
व्याप्तिनयनादन्वर्थप्राणादिपञ्चकात्मतां भजति। संरम्भोद्यमन-
प्रयत्नाश्च ज्ञानरूपाः परामर्शात्मानश्चेति। तत्र जीवने जीवनव्यव-
हारे, ज्ञानक्रिययोरन्तर्लीनता अपृथक्त्वेन अभिधानात् वन इव
धवादीनाम्। ननु जाग्रत्स्वप्नयोः स्तां ज्ञानक्रिये, सुषुप्ततायां
तु गाढनिद्रारूपायां कथं ते, नच तदा न जीवतीति व्यवहार
इति शङ्कित्वा आह **'सुषुप्तावस्थायामपि'** इति। अत्र हेतु-
माह—बुद्धिकर्मेन्द्रियाणां मिलितानां सतां त्रयोदशानां यस्मात्
कार्यं सुषुप्तावस्थायामपि प्राणादिपञ्चकप्रेरणं, तस्मात् ज्ञान-
क्रियात्मकम्। बुद्धीन्द्रियकार्यं हि ज्ञानं, कर्मेन्द्रियकार्या च क्रिया।
ननु एवं जानामि करोमीति सुषुप्तेऽपि भासेत, अज्ञासिषम-
कार्षमिति च स्मर्यते, नच एवमित्याशङ्क्य आह **'अन्तर्लीने'**



इति अनुद्भिन्नविशेषे इत्यर्थः। एतदुक्तं भवति—त्रयोदशाना-
मिन्द्रियाणां सत्तारूपायां प्राणनलक्षणायां वृत्तौ जाग्रति इव
गुणप्रधानभावाभावात् समानाभिहारात् अध्यवस्यामीत्यादि याव-
दानन्दजननक्रियावान् भवामीत्यन्तं ये विशिष्टा ज्ञानक्रियाभेदाः,
तेषामन्यतमो न उद्रिक्ततया भातीति न विशेषांशोल्लेखनं विना
स्फुटस्तत्प्रत्यवभासः, सामान्यरूपतया तु ज्ञानक्रिये स्त एव।
नहि प्रबुद्धस्य प्रत्यवमर्शे अहमित्येतद्रूपं विच्छिन्नं पुनरुदितम-
पूर्वमिति भाति। एतच्च वितत्य उक्तं **'तदात्मविविक्तपूर्व-
कालदृश्वना'** इत्यत्र। जाग्रत्स्वप्नयोरपि सा तादृशी सामान्य-
ज्ञानक्रियारूपा जीवनशक्तिरनुल्लिखितविशेषा आन्तरी सामा-
न्यकरणवृत्तिरस्त्येव; केवलं तत्र गुणप्रधानभावमहिम्ना बाह्या
कस्यचिदिन्द्रियस्य वृत्तिरुल्लसति, ततः सैव स्फुटत्वेन भाति;
नतु सामान्यरूपा शावलेयप्रतीताविव गोत्वम्। तेन इह तत्र च
**'सुषुप्तावस्थायामपि'** इति सामानाधिकरण्येनापि योज्यम्।
तत् जीवनं जाग्रदादावपि सुषुप्तावस्थैकरूपं यद्यपि उक्तात् न्या-
यात्, तथापि अन्तर्लीनज्ञानक्रियाकमेव। ननु बुद्धिप्राणादावहमं-
शरसाभिषेको भगवन्मायाशक्त्युपकल्पितो जीवनम्, अहमित्येव
च ज्ञानक्रिये, तत् नैसर्गिक्यावेव ते, तत्र बुद्धिकर्मेन्द्रियकार्यत्वं
कथम्। सत्यम्, किन्तु संसारिजनोऽङ्गीकृतभेदग्रह इति प्रति-
बोध्यते। नच तस्य भगवच्छक्त्यादि किञ्चित् विदितमिति तेन
रूपेण कथं प्रतिबोध्यताम्, विदितत्वे वा किमन्यत् प्रतिबोध्य-
ताम्। सर्वत्र च ऐश्वरे पारमार्थिके स्वातन्त्र्ये स्थितेऽपि तन्नि-
यतिशक्तिमहिम्ना अवान्तरोऽपि अयं कार्यकारणभावो निर्भास-
मानत्वेन सत्य इति सोऽपि अङ्गीक्रियत एव। तत्र च बुद्धिकर्मे-
न्द्रियाणां बहिर्वृत्तिर्यथा घटमध्यवस्यामीत्यादिका, तथा अनु-

ह्लिखितविशेषा अन्तरपि जीवनरूपा अस्त्येवेति न किञ्चित् दुःस्थम्। ननु एवं स्वात्मवर्त्तिन एव ज्ञानक्रियात्मनो जीवनस्य अवभासनं स्यात्। ततः किम्। परजीवतां न ऐश्वर्यमुक्तं स्यात्। ततोऽपि किम्। तर्हि द्वैतं भासते। भोः प्रामाणिका यदि ते परे जीवन्तो जीवत्तया न भान्ति, तदमी जडाः, तेषां च जीवह्मतैव उक्तेति कथं तैर्द्वैतम्। अथ भान्ति, तथापि जीवनं ज्ञानक्रिये एवेति कथं द्वैतम्। भान्तीत्येव च पक्षो युक्तो जीवति विपरीते च व्यवहारभेदात्। ननु आन्तरी वृत्तिर्जीवनरूपा, सा कथं परसंवेद्येत्याशङ्क्य आह '**बहिरपि**' इति। अन्तस्तावत् जीवनं दर्शितम्, बहिरपितु यत् विशेषवृत्तिरूपं वचनादानादि, तदपि विशेषस्य सामान्याविनाभावात् वा सामान्यपरिणामत्वात् वा जीवनरूपम्, न केवलं स्वसंवेद्यम्, यावत् परैरपि संवेद्यते। अत्र अर्थे तत्रभवद्भर्तृहरिपठितमागमं लिखति '**तदुत्क्रान्तौ**' इति।

> 'अर्थक्रियासु वाक्सर्वान्समीहयति देहिनः।
> सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ॥
> तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत्।'
>
> (वा० प० १।१२८)

तस्या उत्क्रमणे काष्ठकुड्यतुल्योऽयं नष्टसंज्ञ इति प्रत्यक्षेणैव दृश्यते। तच्च नष्टमिति भाति यत् सदिति प्रत्यक्षेणैव भाति। तेन वागादिद्वारेण तत् तादात्म्यापन्नमान्तरमपि जीवनं प्रत्यक्षत्वेनैव अभिमन्यते, नतु

> 'बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात्।
> कल्प्यते यदि धीः………………… ॥'



इति नीत्या केवलानुमानगोचरतयैवेति। एतदुक्तं भवति—परशरीरेऽपि यावत् गौरत्वश्यामत्वक्षुत्तृष्णासुखदुःखादि वेद्यभूतं, तावदन्यजडवत् जीवति प्रतिबिम्बितं भाति; जीवनं तु ज्ञानक्रियारूपं स्वात्मतादात्म्येनैव। तथाभासनस्य च प्रमातृभेदोन्मूलनफलस्य शुद्धविद्यारूपस्य संसाररक्षण…………… …………लोकोऽत्र

> 'बुद्धिपूर्वां…………………………।
> ……………………………॥'

इति नयेन अनुमान एव सातिशयं निबद्धादरो भवति ॥४॥

ननु ज्ञानक्रियात्मकशक्त्यभिज्ञानहेतुना आत्मनि ऐश्वर्यव्यवहारः साध्यतां नाम। स एव तु हेतुः कथं सिद्धः इत्याशङ्क्य '**तत्र ज्ञानं**' इति यत् सूत्रं, तत्संक्षेपाभिधेयं टीकाकारो निरूपयति '**एवंच**' इति।

> 'तत्र ज्ञानं स्वतः सिद्धं क्रिया कायाश्रिता सती।
> परैरप्युपलक्ष्येत तयान्यज्ञानमूह्यते ॥' (५)

तत्रेति तयोर्मध्ये स्वात्मनि ज्ञानं स्वप्रकाशं, क्रियापि आन्तरी संवेदनादव्यतिरिक्ता विमर्शरूपा स्वप्रकाशा। सैव शरीरपर्यन्तीभूता तु बाह्यदर्शनस्पर्शनादिगम्यापि परप्रमातरि तु कायपर्यन्तीभूता व्यापारव्याहाररूपा दर्शनादिप्रमाणगम्या तादात्म्यात् तत्कार्यत्वात् तत्पर्यन्तत्वादान्तरसंवेदननिर्भासमपि करोतीति स्वपरप्रमातृगतं जीवनं ज्ञानक्रियात्म सिद्धं हेतुरूपं, तत ऐश्वर्यव्यवहारसाधनमिति श्लोकस्य तात्पर्यार्थः। '**ऊह्यते**' इति न अनुमेयतामात्रं परसंवेदनस्येत्याह '**ऊहनं तर्कणं संभावनम्**' इति। अत्रांशे इन्द्रियव्यापारणमपि अस्ति, ततश्च साक्षात्कारमुपलक्षयति ऊहः। सोऽपि हि परमार्थतः परसंवेदनेऽस्ति, परत्वं तु मायामोहकृतमभिमानमात्रसारमिति हि उक्तमवतरणिकायां

स्वपरोपक्रमेऽपि स्वसंवेदनसिद्धमिति सामान्याभिधानात् । ननु ज्ञानं विषयप्रकाशसमये न एकान्तेन प्रकाशते, अपितु विषयः प्रकाशते, न तत्प्रकाशः । स तु यदा प्रकाशते, तदा ज्ञानान्तरग्राह्यतयैवेति आक्षपादीयमाशङ्क्य आह **'परपक्षे प्रकाशते'** इति । विषयः प्रकाशते इति हि यदि विषयस्य धर्मः, तन्ममेति नियमेन प्रमातृलग्नता न स्यात् । प्रमातृकार्यत्वेन तथेति चेत्, न कारणेन कार्यस्य तल्लग्नतावभासनियमकरणं, न दृष्टं यतः । एवं हि सति कुविन्दस्यैव पट इति स्यात्, प्रमातृलग्नताभावे च स विषयप्रकाशः सर्वान् प्रति, न कंचित् वा प्रतीति सर्वज्ञं सुप्तं वा जगत् स्यात् । अथ प्रकाशते इति नायं विषयस्य धर्मः । तर्हि कस्य । आत्मन इति चेत्, विषयः प्रकाशते इति आत्मनि रूपं समवेतमिति आत्मा विषयप्रकाशमय एवेति आयातम् । तथात्वं च तस्य यदि आत्मनो न भासते, तदतथाभूतरूपत्वात् कोऽस्य विशेषः । शुक्लगुणयोगात् हि यः शुक्लः पटः, स यथा जडस्तथाप्रकाशमानत्वे स्वातन्त्र्यविरहात्; तथा आत्मापि भवेत् । विषयप्रकाशयोग एव वास्तवेन वृत्तेन भवन् जडत्वादात्मानं रक्षतीति चेत्, अस्त्वेवं तावत्; तथापितु स्वात्मपरात्मविवेको न स्यात् । परात्मापि हि वास्तवेन विषयप्रकाशात्मकज्ञानगुणसमवायबलेन ज्ञाता चेतनो नच प्रकाशते, स्वात्माप्येवमिति, अहं जानामीति यदात्मनि स्वातन्त्र्यमनुभूयते परात्मविवेकेन तत् कथमुपपद्यते, स्वात्मनि ज्ञानान्तरेण ज्ञातृतारूपं गृह्यते न परात्मनि, तत्कथं न स्वात्मपरात्मनोर्विवेकः । तदपि ज्ञानान्तरं यदि अन्यत् ज्ञानमपेक्षते, तदनवस्था । तथापि च स्वात्मपरात्मविवेकसिद्धिः । तत एव उक्तं

'विज्ञातारमरे केन विजानीयात् ।'

Who knows the knower & how?



इति । किंच विषयस्य तावत् न प्रकाशो धर्म इति स तावत् न प्रकाशते, विषयप्रकाशरूपमपि ज्ञानं न प्रकाशते, तद्ग्राहकज्ञानान्तरमालापि कल्पिता न आभाति, तत्समवायकारणभूतोऽपि आत्मा न प्रकाशते, तत्प्रकाशरूपमपि ज्ञानं न स्वयं भाति, तज्ज्ञानान्तरमालापि एवमिति अनवस्थानात् न किंचित् भातीति अन्धं जगत् स्यात् । तदेतदाह **'परप्रकाशत्वे च अनवस्थादि' इति** । आदिग्रहणादन्योन्याश्रयचक्रकासंभवानुभवविरोधाः । विषयप्रकाशात्मना हि ज्ञानेन आत्मानुमानरूपं ज्ञानम्, अहं घटं जानामि इत्येवंभूतश्च विषयप्रकाशः । घटोऽयमित्यत्रापि हि मया वेद्यते इति अन्तः प्रविष्टम् । ····

·······त्यंबालस्यादनुच्चारणेऽपि इयतः अहमिति च इदमात्मज्ञानमित्योन्याश्रयम् । सुखादिज्ञानानुमितेन शब्दादिज्ञानान्तरेण आत्मानुमानेऽधिकानुप्रवेशकृतं चक्रकम् । हेतुप्रकाश एव न संभवतीति असंभवः । नच आत्मनि निर्भासमाने व्यवधानलवोऽपि संवेद्यते इति अनुभवविरोधः । **'अन्यत्र'** इति, अथवा प्रत्यक्षसाधन एवेन्द्रियधियः कल्पनाविरहः इति । **'जितं जडैः'** इत्यादि । अर्थज्ञानं च नाम बुद्धिसाधनं प्रत्येति, न बुद्धिमिति श्लाघनीयप्रज्ञः इति । अप्रत्यक्षोपलम्भस्य न अर्थदृष्टिः । नहि विषयसत्तया विषयोपलम्भः, किं तर्हि, तदुपलम्भसत्तया । सा च अप्रमाणिका । सत्तानिबन्धनान् व्यवहारी उपरुणद्धि, तदप्रसिद्धौ विषयस्य अप्रसिद्धिः,-इत्यस्तंगतं विश्वं स्यात् । **'उपलभते संवेदनमन्येन इति चेत्'** इत्यादि, तत् न तावदयं पुरुषः कंचिदर्थं प्रत्येति उपलम्भनिष्ठां प्रतीक्षमाणः, नच सा अस्तीत्यादि विनिश्चयवार्तिकादिप्रदेशेषु । ननु न कारिकायां जीवद्ग्रहणमस्ति, तत् कथं वृत्तावुक्तं जीवतामिति । एतदाशङ्क्य आह **'जीवत्वाक्षिप्ते'** इति ।

**'ज्ञानं क्रिया च जीवतां जीवनम्'** इति पूर्वसूत्रार्थपर्यालोचनादेवं लभ्यते । तच्च विस्पष्टीकरणार्थं वृत्तौ व्याख्यातमित्यर्थः । **'तत्'** इति जीवत्वव्यवहारस्य निबन्धनं निमित्तम् । यतो ज्ञानक्रियासंबन्धः, अतो जीवन्नयमित्येवंभूतनिर्भासोपक्रमो जानाति करोत्ययमिति व्यवहारः, सोऽपि जानामि करोमीत्यत्र भवन् अन्यदेहांशं स्वदेहमिव कुर्वन्नहन्तापरमार्थ एव । ननु **'जीवनं ज्ञानक्रिये एव'** इति पूर्वमुक्तम्, तच्च अनेन आक्षेपनिबन्धनभावव्यवहारेण विरुध्यते तस्य भेदमूलत्वात् । सत्यं, किन्तु जीवतीति प्राणान् धारयतीत्यर्थे ज्ञानक्रिये अन्तर्लीने; यदि वा जीवत्वशब्देन जीवनव्यवहार एव उच्यते । जीवत्ययमिति हि व्यवहारे कुत इति प्रश्ने जानाति करोति यत इति उत्तरमाहुः, तथा जानाति करोत्ययमिति व्यवहारे कुत इति पर्यनुयोगे यतो जीवतीति आहुः । परस्पराविनाभावात्तु पूर्वमुक्तं जीवनं ज्ञानक्रिये एवेति । अभेदेऽपि वा विकल्पोपरचितस्तावदस्ति भेदः, जीवतीति हि अन्यो विकल्पः, अन्यश्च जानाति करोति इति । तद्व्यावृत्तिभेदोपकल्पितभेदत्वान्तर्निबन्धनता तादात्म्येऽपि युक्ता सौगतमते इव आकारयोगस्य प्रमितिनिबन्धनता । यथोक्तं

'तद्वशात्तद्व्यवस्थानात्……………।'

इति । ननु **'ज्ञानं क्रिया च'** इति सूत्रं, तदुल्लङ्घ्य वृत्तौ क्रिया कस्मात् पूर्वं व्याख्यायते इत्याह **'क्रिया च'** इति । चः पूर्वपक्षं सूचयति । कायस्पन्दरूपत्वं प्राप्ता सती तस्य क्रियावतः प्रमातुः स्वात्मनि प्रसिद्धा, यत् प्रमातृव्यतिरिक्तस्य च प्रमात्रन्तरस्य दार्शनस्पार्शनस्फुटप्रत्यक्षावसेयेति निर्विवादसिद्धा, अतोऽत्र ऐश्वर्यप्रसाधकहेत्वभिधानप्रसङ्गे सैव पूर्वमुपादेया हेतोरविवादसिद्धस्य उपादानयोग्यत्वादन्यथा साध्यसमत्वानवस्थादिदूषणयोगात् । पर-



प्रमातरि च धर्मिणि यदैश्वर्यं साध्यं, तत्र स्वात्मन इव परप्रमातुर्धर्मिणः सर्वात्मगतैश्वर्यानुमापकप्रमात्रपेक्षया अहमितिस्वप्रकाशत्वाभावे धर्म्यसिद्धतारक्षणार्थं क्रिययैव सिद्धिः कर्तव्या । तदनेन उत्कर्षद्वयेन वृत्तौ क्रिया पूर्वं व्याख्याता । तर्हि सूत्रेऽपि एवं कस्मात् नोक्तमित्याशङ्क्य आह **'परवाग्वृत्त्यादिका'** इति । सा हि क्रिया मूलभूमौ संवेदनमेव अवलम्बते विमर्शरूपत्वात् । विमर्शस्य च संवेदनावलम्बित्वात् शब्दनरूपतास्वीकारेण विमर्शरूपताभिधानाय वाक्पदमुपात्तम् । तथाहि अव्यतिरिक्तप्रकाशस्य या स्वात्मनि विश्रान्तिरहमिति अनुल्लिखितप्रतियोगिकल्पनतदारोपणतदपसारणादिका, सा परा पूर्णा सर्वस्य स्वरूपपरमार्थरक्षणेन पालनेन सर्वोत्कृष्टा च वाग्रूपा वृत्तिर्विमर्शक्रिया । उल्लिखितमपि इदंभागमहंभावग्रस्ततया प्ररोहरहितमासूत्रयन्ती पश्यन्ती अहमिदमिति । तमेव अहंभावादाकर्षन्ती मध्यमा अहमिदं जानामि करोमीति । तथैव परं प्रति जिज्ञापयिषुः प्राणे स्फुटीभूता वैखरी, शरीरे तु स्पन्दनरूपा क्रिया । इयति च सर्वत्र विमर्शरूपतैव अनुगता । चलामि शिरश्चालयामीत्येवंभूतविमर्शसारैव हि शरीरे तदवयवे च क्रिया । अपरिस्पन्दरूपापि तिष्ठामीत्यादिका क्रिया कर्तरि क्रमिकतापरामर्शपरमार्थैव । तत एव सा जडजलशिलादिगतचलनस्थानादिक्रियातो विलक्षणाकारा । जडगतापि तु क्रिया जडस्य स्वात्मनिष्ठतानुपपत्तेर्यन्निष्ठा तत्प्रमातृसंविन्निष्ठैव ज्ञानशक्तिरूपमूले अहमित्यात्मनि इदंभावस्यापि चलतीत्यात्मनो विश्रान्तत्वादिति सर्वा क्रिया विमर्शरूपेति । वृत्तौ च अयमर्थः पूर्वावस्थासंभवसूचकच्विप्रत्ययप्रयोगेण स्वीकृतः टीकाकारेण व्याख्यातः, सौत्रश्च क्रमो व्याख्यातः । यत एव ज्ञानस्यैव क्रिया पुच्छभूता, ज्ञानं च प्रमातुरपृथग्भूतं, संवेद्य-

भेदात्कल्पितभेदम्, तत एव स्वभावहेतुरयं वस्तुतः, न कार्यहेतुः। विततस्य स्रोतस इव अंशमात्ररूपं हि व्यापारात्मकं स्पन्दनम्। स्वभावहेतुश्च सर्वो मोहवशारोपितापारमार्थिकरूपान्तरपराकरणमात्रपर्यवसित इति व्यवहारसाधक एव अभिधीयते, नतु अप्रसिद्धप्रसाधनरूप इति वास्तवं स्वप्रकाशत्वं ज्ञानस्य प्रमातुस्तदैश्वर्यस्य च मौलिकं न विघटते इति अत्र ग्रन्थकारस्य आशयः। नतु क्रियया यदि धर्मी चिकीर्षितः परः प्रमाता अनुमीयते, हेतुभागश्च ज्ञानात्मा; तदा वेद्यरूपत्वेन प्रमातुर्ज्ञानस्य च इदन्तापरामृश्यत्वेन जडताप्रसक्तिरित्याशङ्क्य आह **'प्रमातृता च'** इति। प्रमातृता संविद्रूपता, यया चैत्रः प्रमाता मैत्रः प्रमातेति व्यवहारः। सा च यादृशी स्वात्मनि प्रकाशिता अहमित्यनन्यापेक्षप्रकाशजीवितोचितविमर्शा, तत एव इदन्ताविमर्शासहिष्णुः; तादृश्येव अनुमानेन अनुमातुं युक्ता। नहि अन्येन व्याप्तिरन्यच्च अनुमीयते, स्वप्रकाशरूपेणैव च व्याप्तिः। ननु अयं चैत्रः प्रमाता, इदमस्य ज्ञानम्, अयमहं प्रमाता, ममेदं ज्ञानमिति इदन्ताप्रतिभासो विकल्पे तावत् दृष्टः, विकल्परूपं व्याप्तिविकल्पमूलं च अनुमानम्, तत् कथं न तत्र अनयोरिदन्तया प्रतिभास इत्याशङ्क्य आह **'नहि विकल्पः'** इति, स्वयं यत्स्वरूपपरिकल्पितो यः स्वभावः प्रमातुरहमित्यनवच्छिन्नप्रकाशस्वातन्त्र्यात्मा, ज्ञानस्य च वेद्योन्मुखत्वावच्छिन्नप्रकाशस्वाच्छन्द्यलक्षणः; स यस्मात् नैव विकल्पे प्रकाशते, अपितु शरीरप्राणाद्युपाधिसंवृत एव प्रमातुर्नीलादिप्रमेयाकारप्रच्छन्न एव च ज्ञानस्य स्वभावो भाति, तस्मात् प्रमातृता न वेद्यतामापद्यते इति संगतिः। ननु एवं तर्हि प्रमातृता अनुमीयते, ज्ञानं च अनुमीयते इति कथम्। यत् किल अनयोः प्रातिस्विकं



वपुः, तदनुमानविकल्पे न भात्येव यच्च भाति, तत् प्रत्युत तदावरणरूपं शरीरादि नीलादि वा। नच तत्र किञ्चिदनुमानेन कृत्यं प्रत्यक्षादिनापि सिद्धत्वात्। नच तत्र अनुमितत्वं संवेद्यते। अपिच सर्वेषां प्रमातॄणामैश्वर्यं ज्ञानक्रियायोगादनुमीयते इति प्रकृतमिह। तत्र क्रियाविशेषाणां भेदात् धर्मिणोऽपि आत्मानो बहव इति तन्निष्ठमैश्वर्यमपि भिद्येतेति कथमेकेश्वरसिद्धिरिति शङ्कां पराकर्तुमाह **'तथाविध एवच'** इति। न शरीरादि प्रमातृरूपमनुमीयते, नापि ज्ञानरूपं नीलादि; अपितु यादृगेव प्रमातुर्ज्ञानस्य च स्वभावः स्वात्मनि अहमिति स्वप्रकाशतया विमृष्टः, तथाविध एव विषयीक्रियतेऽनुमानेन इदन्ताग्राहिणापि। ननु इदन्ताहन्तयोः पारतन्त्र्यस्वातन्त्र्यरूपयोर्विरोधात् कथमेतदित्याह **'अहन्ता'** इति। अहमिति अव्ययमव्यतिरिक्ते प्रकाशे वर्तते, तस्य भावोऽहमितिविमर्शस्वरूपमहन्ता। स एव प्रकाशस्य स्वभावो निजं लक्षणमप्रकाशात् भेदकं तेन यद्व्यवधानं तेनेदं संवेदनमिति अनुमानसंवेदनानन्तरमवश्यंभावित्वेन अहन्ताविश्रान्तं वेदनं हि उत्पद्यते। यतो हि अयं करोति जानाति च, ततः संवेदनमस्य करोमि जानाम्यहमित्येतद्रूपविमर्शोचितम्। एतच्च सर्वमहं जानामि, मत्प्रकाशविश्रान्तं मत्प्रकाशविमर्शमात्रमयमिति पर्यन्तेऽपि अनुमाता अहंप्रकाशविमर्शमयत्वेन भाति,—इत्येवं पार्यन्तिकं यत् प्रतिष्ठितं रूपं, तत् स्वप्रकाशमेव प्रकाशितं भवति। ननु मध्ये यत्संवेदनस्य इदन्तया संवेद्यत्वं, तस्य पार्यन्तिकमहन्ताविश्रान्तित्वं विरुद्धम्। नहि मध्ये नीलं पीततायां विश्राम्यतीत्युचितम्। एतत्परिहरति **'स्वात्मनोऽपि'** इति। एतदेव स्वातन्त्र्यं यदतिदुर्घटकारित्वम्। दुर्घटं च तत् नियतिशक्तिकृतादेव मायादशायां

विरोधात्। स्वातन्त्र्यपारतन्त्र्ये च अतिविरुद्धे अपि अन्योन्यमति-रोदघती अपि अनुत्तरस्वातन्त्र्यात् परमेश्वरो योजयति ईश्वर आत्मा इत्यादिविकल्पसृष्टौ। तथाहि तत्र इदन्तांशयोगात् भाव्यत्वपूज्यत्वोपदेश्यत्वाद्युपपत्तिः; अनाच्छादिताहन्तांशयोगाच्च पारमार्थिकतद्रूपप्राप्तिरिति वक्ष्यते

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याद्द्वयात्मनः।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत्॥'(१।४७)

इति। 'एवंच' इति। वक्ष्यमाणादुक्ताच्च स्वातन्त्र्यपारतन्त्र्यसंघटनोपपत्तिलक्षणात् न्यायात् परशरीरे ज्ञानं प्रमातृरूपं च अनुमीयमानं प्रारम्भे इदन्ताविषयीकृतं यद्यपि, तथापि पर्यन्ते स्वप्रकाशमेव सिद्धं भवति; नतु साध्यमिति संभाव्यते; यत आदिसिद्धं प्रमाणान्तरैरसाध्यं; क्रियया च सह व्याप्तिग्रहणकाले अनुमानकालात् पूर्वसिद्धं, चैतन्यस्वभावं यदनुसन्धानं नीलादिजडप्रतिष्ठात्मकमहमितिरूपं, तदेव प्राधान्येन रूपं यस्य प्रमातुस्तत्स्वभावं तत्। एतच्च वृत्तौ **'सिद्ध एव नतु साध्यः'** इत्यनेन दर्शितम्। **'सिध्यति'** इत्यपि वृत्तौ स्वप्रकाशतांशप्राधान्याय उक्तम्। अनुमानं हि अत्र विद्युत्प्रभान्यायेन मध्ये परमिदन्तां भासयति मूले व्याप्तिग्रहणावसरे पर्यन्ते च अनुमितप्रतिपत्तिप्रतिष्ठाकाले अहमित्यत्रैव विश्रान्तत्वात्। यथाहि नीलाद्यपि प्रमेयं प्रमातर्येव विश्राम्यति, तथा अनुमानप्रमेयमपीति। तत्र असाविदन्तांशोऽनुमातृगतायामहन्तायामेव लीनः। धर्मिभेदोऽपि इदन्तारूपत्वात् संविन्मात्र एव विश्राम्यति, अहन्ताभागस्तु न अहन्तान्तरात् भिद्यते संवेदनस्य देशकालाभ्यां वेद्यरूपतया संवेदन एव निमग्नाभ्यां भेत्तुमशक्यत्वात् संवेदनस्य च संवेदनान्तरात् स्वरूपभेदे सति असंवेदनताप्रसङ्गात्। नीलस्यापि नीलान्तरात्



नीलाभासेन न भेदो नीलाभासस्य त्रैकाल्यत्रैलोक्ययोरेकत्वात्। तत्र तु आभासान्तरेण देशकालादिना भेदः, निराभासे तु संवेदने न आभासान्तरव्यामिश्रणं मिश्रीकार्यत्वे संविदन्तरापेक्षायां संवेद्यत्वसंवेदनत्वायोगात्। संवेद्यत्वेऽपि संविद्विश्रान्तत्वमेवेति अभिन्नमेव संवित्तत्त्वं परमार्थतः सिद्ध्यति। अन्यस्यापि अनुमातुरेवमेव। धूमादपि हि अनग्निव्यावृत्तिमात्रं सिध्यत् पारमार्थिकपर्वतकान्तारमहानसप्रभृतिधर्मिभेदवशात् भिद्यतां नाम, इह तु धर्मिणोऽपि शरीरादेः स्वतो न किंचित् पारमार्थिकं वपुरस्ति संवेदनमात्रविश्रान्तत्वात्; केवलं स्वशक्त्यैव तत्संवेदनं विचित्रवेद्यावभासमुल्लासयत् धर्म्यादिकल्पनामपि न असत्यां दर्शयति अपरसृष्टिवदिति मध्यवर्तीभवन्नपि अयमनुमानव्यवहारो न अभेदं बाधते। सर्वो हि अयं प्रमाणकृतो भेदव्यवहारः परमार्थसंवेदने एव विश्राम्यति। यथाच दिक्कालाकाशसामान्यादि नैयायिकैस्तल्लिङ्गानां पूर्वापरचिरक्षिप्रशब्दाभिधानप्रत्ययाभेदात् इति······नामविशेषात् एकमिति साधितं, तथा आत्मलिङ्गानां ज्ञानक्रियादीनामपि अविशेषात् किं न ऐक्यम्, व्यवस्था च दिगादिष्वपि दृष्टा, औपाधिकता च आत्मन्यपि न न सुसमर्थेति सिद्धमीश्वर एक एवेति। सौगतानामपि अनुमितमपोहरूपमवस्तु पूर्वदृष्टस्वलक्षणरूपताव्यवसायविश्रान्तमेव अर्थक्रियार्थिनामर्थनीयं प्रवर्तकं च भवति। तेषां तु एतत् स्वलक्षणात्मकनिरंशवस्तुवादिनां समर्थयितुमशक्यं गिरिवर्तिनोऽदृष्टत्वादनध्यवसेयत्वात् महानसवर्तिनश्च ततोऽन्यत्वात्। अस्माकं तु वह्न्याभास एव वस्तु च एकश्च सर्वत्रेति न दोषः। तद्वत् प्रकृतेऽपि अनुमितमहमिति यदात्म स्वलक्षणं स्वतन्त्रं, तद्रूपाध्यवसायेनैव परः प्रमाता अनुमितो भवति; व्यवहारसाधनेषु च प्रमाणेषु मौलिकप्रमाणसिद्ध-

मेव रूपं प्रपतति। तदिहापि मौलिकं स्वप्रकाशत्वमेव विजृम्भते। परस्य ऐक्योपपादनादनुमातृरूपप्रमातृव्यतिरिक्तानि प्रमात्रन्तराणि परमार्थत एकरूपाणीति उक्तम्। विवृतौ च प्रमातृज्ञानद्वयोपक्रमेऽपि एकतराभिधानं वस्तुत एकरूपतां प्रतिपादयितुम्। ज्ञानमिति हि ज्ञातृतैव उक्ता। परत्र अनुमेयमाना ज्ञातृता प्रमातृरूपत्वमिति यावत्। अथवा एवंचेति वाक्येन प्रमातृदृष्टान्तेन ज्ञानस्यैव एतद्रूपमुक्तमिति द्वयस्यैव उपक्रान्तस्य अभिधानं धर्मिमुखेन धर्ममुखेन च तदेव रूपं निरूपयितुम्। ननु यदि आत्मा ईश्वरः, सर्वः सर्वज्ञो न कस्मात्। सर्व इति यदि प्रमातृभेदाशयेन उक्तिः, तदसत् प्रमातृभेदस्य अपारमार्थिकत्वात्। केवलं स्वातन्त्र्यशक्त्यैव तद्भेदावभासनम्, एकस्तु प्रमाता शिवादिस्थावरान्तः, सच सर्वज्ञ एवेति। एतदाह **'सर्वप्रमातृणाम्'** इति वस्तुतः संविदभेदात्। तदुक्तं श्रीपरमेष्ठिपादैः शिवदृष्टौ

> 'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना।
> सदाशिवात्मना वेद्मि, स वा वेत्ति मदात्मना॥'

इति उक्त्वा

> 'नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः।' (५।१०९)

इति। तत एव च आदिसिद्धतासमर्थनावसरे यदुक्तं रामावतरणकाले नाहं बभूवेत्यत्रापि प्रमात्रन्तरसंवेदनात्मना वक्तैव तत्कालानुभवितेति, तदिदानीमयत्नघटितमिति। यत्तु तत्र सार्वज्ञ्यसमर्थनार्थमुक्तं

> 'सर्व एव हि सर्वज्ञमनःसंकल्पनावशात्।
> सर्वभावग्रहणतायोग्यत्वाद्वा क्रमस्थितेः॥
> प्रत्यक्षाद्यैरुपायैर्वा निरुपायतयापिवा।' (५।१०३)



इति, तत् मायापदेऽपि। इह तु परमार्थविचारे शिवैकात्मकत्वमेवेति तदुपेक्षितं गुरुणा। संक्षेपेण वस्त्वभिधानं न उक्तिवैचित्र्यपोषणामात्रफलम्, अपितु अधिकारिविशेषं तीव्रशक्तिपातं शरदभ्रभङ्गीभ्रश्यन्मोहावरणमनुपयोगिपूर्वपक्षोपक्षेपप्रतिक्षेपविस्तरमनुग्रहीतुमिति दर्शयति **'एतावतैव'** इति। ईश्वरत्वप्रदर्शनं तद्व्यवहारसिद्धिनिबन्धनं प्रमाणं, ततो या प्रतिपत्तिरीश्वरताविमर्शरूपा प्रमात्मिका, तस्या दार्ढ्यं परविकल्पैर्बाधकाभासैरुन्मूलयितुमशक्यत्वं, ततो हेतोरीश्वरप्रत्यभिज्ञाकृतोऽभ्युदयो जीवन्मुक्तिविभूतिलाभलक्षणः श्रोतॄणां भवतीति ग्रन्थकारस्य तत्प्रत्यभिज्ञोपपादनात्मकमभीष्टं संपन्नमेव। ननु एवं समाप्तं शास्त्रमिति उत्तरग्रन्थेन किमित्याशङ्क्य आह **'अतिमात्र'** इति। ये मन्दशक्तिपातास्तेषां सातिशयं प्ररूढो मायाकृतस्त्रिविधः स्वात्मसंकोचवेद्यभेदसुकृतदुष्कृतावभासलक्षणो मलः, तत एव प्रतिपदमसावुन्मूलनीयः। अन्यथा हि य एव अंशः शृङ्गग्राहिकया न निर्मूलितः, स एव स्वयं वा परप्रबोधनया वा प्रबुध्य दूषयेदेव ईश्वरतानिश्चयमस्य। यथोक्तं श्रीभट्टनारायणेन

> 'नमस्ते भवसंभ्रान्तभ्रान्तिमुद्भाव्य भिन्दते।' (७१)

इति। **'तस्य'** इति कर्मणि च कर्तरि श्लेषेण षष्ठी। यः स्वपरयोरहंमात्रप्रत्येयतया निर्भासनयोग्योऽत एव स मायाशक्तितिरोहितैर्मूर्खैर्विमन्यते उक्तरूपविरुद्धेन रूपेण अभिमन्यते, स एवच ईश्वरो विप्रतिपद्यते तस्यैव सर्वत्र कर्तृत्वात्। उभयत्र मायाशक्तिकृतमावरणावभासनं हेतुः। यत् शिवदृष्टिः

> 'वादित्वप्रतिवादित्वे कस्माच्चेत्तस्य तत्स्थितेः।' (३।७६)

इति। **'एवम्'** इति वक्ष्यमाणपूर्वपक्षरूपतया। उपांशु संक्षे-

पेण ऊर्ध्वमादौ हन्यते गम्यते टङ्क्यते च अर्थो येनेति उपोद्घात इति शिवम् ॥

अत्रिगुप्तकुलोत्पन्नशरीराधारसङ्गतः ।
ईश्वरप्रत्यभिज्ञायामुपोद्घातं व्यपावृणोत् ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचिताया-
मीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामुपोद्घात-
विमर्शः प्रथमः ॥ १ ॥

---

## अथ द्वितीयो विमर्शः ।

आनन्दममृतपूर्णं सामनसे परपदे परं सत्यम् ।
घटितानुत्तरदृढतमनिरूढिभाजं शिवं वन्दे ॥

आत्मन एव सद्भावे ये विप्रतिपन्नाः, त एव कथं तस्य ऐश्वर्यमुपगच्छेयुरिति त एव इह मूलविपक्षाः । तत्र लौकायतिकाः स्वपक्षस्थापनाविहीनाः, परपक्षमपि कथं दूषयेयुः प्रमाणादिप्रक्रियामर्यादानुप्रवेशेन तद्दूषणात्, तदनुप्रवेशे तु चार्वाकताहानिरिति सौगता एव इह पूर्वपक्षवादिनः । ये हि आत्मानमुपयन्ति अनेकमनीश्वरं च एकं वा छन्नैश्वर्यम्, ते तावत् न अत्यन्ताय इह दूरं स्फुटिताः । असाधारणेन धर्मेण धर्मिणोऽङ्गीकरणे अनङ्गीकृतधर्माभ्युपगमना हि सुघटाः, ननु सर्वथानुपगमे इति सौगतीयमेव पूर्वपक्षं

'ननु स्वलक्षणाभासं·············।

इत्यादिना

·········तेन कर्तापि कल्पितः ॥'

इत्यन्तेन श्लोकैकादशकेन आह । तथाच वक्ष्यति 'तद्दर्शना-



पेक्षयैव अयमाक्षेपः' इति । तत्र श्लोकद्वयेन प्रत्यक्षात्मवादी दृश्यानुपलब्ध्या निराक्रियते, अनुमेयात्मवादी तु स्मृत्यनुसन्धानादेरन्यथासिद्धतां वदता त्रयेण, ज्ञानादीनां गुणत्वात् गुणिसिद्धिरित्यपि वदन्नेकेनेति इयता आत्मनि धर्मिणि निराकृते, ज्ञानक्रियासंबन्धलक्षणमैश्वर्यव्यवहारसाधनं हेतुं निराकर्तुं ज्ञानस्वरूपं परमते श्लोकद्वयेन अनुपपन्नमावेद्यते, क्रियासंबन्धस्तु साधकाभावात् बाधकयोगाच्च न क्वचिदुपपद्यते, तत् न आत्मन ऐश्वर्यमिति त्रयेणेति संगतितात्पर्यम् । '**आत्मनः**' इत्यादिना धर्मिणं हेतुं व्यवहार्यत्वेन साध्यं च ब्रुवता पदत्रयेण सिद्धान्तिमतं पूर्वपक्षवादी दूषणाय संक्षेपेण अनुभाषते । '**आत्मैव तु**' इत्यादिना पूर्वपक्षी स्वमतं सार्धश्लोकोक्तं संक्षिप्य दर्शयति । तुशब्दः स्वपक्षस्य विशेषं द्योतयन्नुपपन्नतां ध्वनयन् सिद्धान्तिमतस्य दूष्यमाणत्वं सूचयति । सिद्धान्ती खलु अनुपलब्धेरसिद्धतां ब्रूयादित्याशङ्क्य यमर्धश्लोकं ब्रूते, तस्य अर्थं संक्षेपेण आह '**अहंप्रत्ययेनापि**' इत्यादिना । आदिशब्देन इन्द्रियप्राणज्ञानादिसंतानस्य संग्रहः । '**इत्याह**' इति एतद्वस्तु श्लोकद्वयेन आहेत्यर्थः । कथम् । '**आक्षिपन्**' आक्षेपेण लक्षिता वचनक्रिया इयमिति यावत् । अनेन ननुशब्दस्य आक्षेपद्योतकता व्याख्याता । आक्षेपेण च पूर्वपक्षी युक्तिविदग्धंमन्यताक्रान्तहृदयोऽत्र विप्रतिपन्नो यत्नेन स्वाभिनिवेशात् सौजन्याङ्गीकृतपरोपकारप्रावण्येन सिद्धान्तिना निवर्त्यते इति सूचयन्नज्ञससंशयौ दण्डापूपिकयैव इह व्युत्पाद्येते इति दर्शयति

**ननु स्वलक्षणाभासं ज्ञानमेकं परं पुनः ।**
**साभिलापं विकल्पाख्यं बहुधा नापि तद्द्वयम् ॥ १ ॥**

नित्यस्य कस्यचिद्द्रष्टुस्तस्यात्रानवभासतः ।
अहंप्रतीतिरप्येषा शरीराद्यवसायिनी ॥ २ ॥

स्वमात्मा आत्मीयमेव वा लक्षणं यस्येति स्वरूपेण तदुपाधिभ्यां च देशकालाभ्यां यत् सर्वथैव संकुचितं

'समानभिन्नाद्याकारैर्न तद्ग्राह्यं कथंचन ।
भेदानां बहुभेदानां तत्रैकस्मिन्नयोगतः ॥
तद्रूपं सर्वतो भिन्नं……………।'

इति

'……………………प्रतिपादिका ।
न श्रुतिः कल्पना वापि सामान्येनैव वृत्तितः ॥'

इति स्वसामर्थ्योत्थनिर्विकल्पकज्ञानैकलक्षणीयमुक्तम्, तदाभासते प्रतिभासते यस्मिन् सति, तस्य वा आभासश्छायारूप आकारो यस्मिन् ज्ञाने; तदेकम् । जातावेकवचनम् । राश्यभिप्रायेण च एकशब्दः, तेन स्वलक्षणप्रतिभासानि निराकारवादिमते, स्वलक्षणाकाराणि साकारवादिमते ज्ञानानीति एकोऽयमविकल्पकराशिः । एकशब्देन वा अविकल्पकज्ञानस्य विषयभेदकृतं भेदं मुक्त्वा विकल्पवत् स्वरूपनिष्ठोऽवान्तरजात्युत्थापको भेदो नास्तीत्युच्यते । तत्रैव हि विषये स्मृतिरूपो विकल्पोऽन्यथा, उत्प्रेक्षारूपश्च अन्यथेति अध्यवसायविषयाभेदेऽपि स्वरूपगतमेव विकल्पस्य वैचित्र्यम् । अनुभवस्तु नीले न कश्चित् प्रकारान्तरेण ऋते तत्प्रतिभासत्वात् तदाकारत्वात् वा । एकशब्दो वा अन्यवाची, एकं किञ्चिदिति यावत् । मध्यमपक्षस्तु टीकाकृता सूत्रे योजितः । परमिति अन्यत्, अनुभवोत्तरकालभावि च तदुपजीवित्वात् सर्वविकल्पानाम् । अभिलप्यते आभिमुख्येन विषयिविषयपरवशतात्यागेन बोधस्वातन्त्र्ये शब्देन च विषयस्य



तादात्म्यापादनेन व्यक्ततया प्रमातृसात्कारपर्यन्ततया उच्यते परामृश्यते येन, सोऽभिलापः आन्तरशब्दलक्षणः संजल्पः । यदाहुर्भर्तृहरिपादाः

'सोऽयमित्यभिसंबन्धाद्रूपमेकीकृतं यदा ।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥' (वा० २।१३०)

इति । तेन सह वर्तते इति । अनेन सोऽयमितिसंबन्धात्मकसंकेतव्युत्पत्तिकालव्यवहारकालानुगामित्वं विषयस्य वदता सामान्यविषयत्वं दर्शितम् । बहुधात्वे च अवान्तरजातिभेदकृते युक्तिः सूचिता । स इत्यनुसन्धाने स्मृतिः, सोऽयमित्यनुवेधे प्रत्यभिज्ञा, स इवायमित्यनुरोधे उत्प्रेक्षा, स एवायमित्यनुयोगे व्यवच्छेदः,—इत्यादयो विकल्पभेदा अभिलापभेदमूला एव । स्मृत्युत्प्रेक्षादेश्च अवान्तरजातिभेदयोगेऽपि विकल्पलक्षणमहासामान्ययोग इत्यपि साभिलापशब्देन सूचितम् । तृतीयश्च एष पक्षो विवृतिकृता स्फुटीकृतः । अपिशब्दो भिन्नक्रमः । द्वयमपि तत् न नित्यस्य कस्यचित् द्रष्टृशब्दवाच्यस्य परैरुपगतस्य संबन्धित्वेन युक्तम् । तस्य नित्यस्य अत्र ज्ञानद्वये भासमाने सति अत्र द्वये आधारतया च परेण स्वप्रकाशताभ्युपगतप्रकाशभावयोग्यस्यापि अप्रकाशनात्, तस्येति वा ज्ञानद्वयस्य अत्र आत्मनि आधारे अनवभासात् स्वतन्त्रतयैव तत् ज्ञानद्वयं भाति, नतु क्वचित् नित्ये आश्रितं सदित्यर्थः । ननु अहं घटं जानामीति घटवत् तज्ज्ञानवत् तद्धर्मा आत्मा अहमिति भात्येवेति अनुपलम्भोऽसिद्धः । उच्यते । एष तावद्विकल्पो न अवश्यं विषयतथात्वमाविष्कुरुते, भवतु वा प्रमाणं, तथापि अत्र कृशादिसामानाधिकरण्यं चेत् भाति कृशोऽहं जानामीति, तच्छरीरमेव इत्थं ज्ञानेन सह एकसामग्र्यधीनतया अध्यवसीयमानत्वेन प्रतिभासते । अथापि

शरीरातिरिक्तं, तदपि ज्ञानसंतानमात्रमत्र वने वृक्ष इति यथेति अपिशब्दार्थः। टीकाकारो विकल्पमादौ व्याचष्टे। तदपेक्षमविकल्पस्य प्रमाणादिरूपमिति परकीयमतमागूर्य उचितविकल्पजननात् नीलांशे प्रमाणमविकल्पकं तदभावात् प्रमाणं न भवति, क्षणिकत्वांशे नीलाव्यतिरेकिणि गृहीतेऽपि तदनुचितविकल्पसंपादनात् तु अप्रमाणं स्थिरत्वाद्यंश इति हि परो मन्यते। ग्रहणकवाक्ये च विवृतिगते यदविकल्पकं पठितम्, तत्र अवश्यं निषेध्यत्वेन पूर्वं विकल्पो व्याख्येयः। विकल्पक इति कर्तृप्रत्ययेन विकल्पज्ञानस्यैव स्वातन्त्र्येण कर्तृतारोपणात् विकल्पकत्वमिति वदन् विकल्पोत्थापकोऽन्यः प्रमातास्तीति संभावनां परस्य परास्यति। सकलं कालं तदविनाभावात् कालोपलक्षितं च देशधर्मान्तरं च यत् गच्छति, ततो न व्यावर्तते, तादृशं यदपोहरूपं ज्ञानाकारमात्रमनन्तर्बहीरूपं वा आरोपितनीलरूपमभिमननमात्रोपपादितशरीरं वा तत एव निःस्वरूपेण अवष्टम्भायोगे क्रमाक्रमायोगे देशसंकोचाभावात् व्यापकत्वेन कालसंकोचाभावात् नित्यत्वेन व्यावृत्त्ययोगकृताच्च धर्मसंकोचवैकल्यात् व्यक्त्यनुयायित्वेन अध्यवसीयमानं सामान्यम्, तदेव स्वलक्षणपरामर्शवन्ध्यत्वात् तन्मात्रम्। तत् प्रतिभासते ग्राह्यत्वेन यस्मिन्, तत् विकल्पकमिति विषयोऽस्य निर्दिष्टः। यतश्च अस्य एवंविधो विषयः, ततोऽयं विकल्पः शब्दसंबन्धिनं व्यवहारं शब्दाभिजल्प्यमानतां सहते। सा हि न ज्ञानस्य विकल्पात्मनोऽपि स्वात्मनि स्वलक्षणस्वभावे स्वसंवेदनग्राह्ये शब्द्यमानत्वायोगात्, यदाह

'सुखादीनां⋯स्वसंवेदनमविकल्पकम्।
अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक्।'



इति, अपितु विषयस्यैव; तस्यापि न स्वलक्षणस्य देशकालधर्मसंकुचिते तत्र संकेतस्य कर्तुमशक्यत्वात् व्यवहारकालपर्यन्तमसंभवेन अनुपयोगाच्च। तत् नीलच्छायाया अनीलव्यावृत्तेरपोहरूपाया एव विकल्पनसहिष्णुत्वेन संकेतकरणयोग्याया व्यवहारकालानुगामिन्याश्च सा युक्ता। **'तात्कालिकम्'** इति तस्मिन्नेव काले भवं, न कालान्तरमनुवर्तते। अतः संकेतव्युत्पत्तेर्यः कालो दृष्टा विकल्पनं शब्दसंकेतनमित्येवंरूपस्तं न स्पृशति। तमेव यो न स्पृशति, स व्यवहारकालं स्पृशतीति का संभावना। तदेवमनुपपद्यमानसंकेतं वचसा उक्तं गम्यमानत्वेन अनुपयुज्यमानसंकेतमुपरि स्फुटमिति देशनियतं व्यावृत्तिनियतं चेति देशान्तरधर्मान्तरानुगमनायोग्यत्वादपि अनुपयुज्यमानसंकेतं यदि ईदृक् स्वलक्षणं, तदाभासं तदाकारत्वेन तदेकसामग्र्यधीनतया तज्जन्यत्वेन तन्निर्भास्यत्वेन वा तदाभास्यते साक्षात्क्रियते येन तत् तथा। स्वलक्षणविषयमित्येव स्पष्टं कस्मात् नोक्तमित्याशङ्क्य आह **'विकल्पेऽपि'** इति। तेनापि स्वलक्षणमध्यवसीयते प्रवृत्तिप्राप्त्यादिव्यवहारात्। अनुभवरूपस्तु असौ स्वलक्षणेन भवति यो हि भवन्नेव तत् स्वलक्षणमनुकरोति अनुकुर्वन्नेव च भवति।

'⋯⋯⋯अर्थस्य सामर्थ्येन समुद्भवात्।'

इति न्यायेन निराकारतायां

'तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते॥'

इति नीत्या साकारतायामसौ बोधोऽनुभवतीति उच्यते। तथाच विनिश्चये यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयतीति अनुभवस्य अनुकर्तृत्वमुक्तम्। नच एवं विकल्पः। **'अत एव'**

इति अनुभवरूपत्वेन यदर्थसामर्थ्योद्भवत्वमाक्षिप्तम्, तत एव स्फुटो देशकालाकारनियतोऽत्र अर्थो भाति। ननु एवं ज्ञानमित्युक्ते नीलपीतादिज्ञानभेदो न कश्चिदिति बोधरूप आत्मैव अयमुक्तो भवति सूत्रवृत्त्योरित्याशङ्कां शमयति '**तस्य च**' इति। '**बहुधा**' इति व्याचष्टे, '**विकल्पस्य तु**' इति, '**नतु विषयभेदेन**' इति तस्य निर्विषयत्वादध्यवसेयविषयाभेदेऽपि स्मरणोत्प्रेक्षादीनां स्वरूपेणैव वैचित्र्यादित्याशयः। '**तथाच**' इति पातञ्जलं मतं संवादकत्वेन उपन्यस्यति। '**विकल्पात्**' इति विकल्पविशेषादिति भावः। भेदेऽपि अभेदस्य अभेदेऽपि भेदस्य या विकल्पना, सा तत्र विकल्प इत्युक्ता। स्मृतिस्तु पूर्वानुभूतावभासरूपा बुद्धिवृत्तिः। तथाहि सूत्रे

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः।' (यो० सू० १।९)

'अनुभूतविषयासंप्रमोषः स्मृतिः।' (यो० सू० १।११)

इति। ननु एवं भवता तर्हि विकल्पनैव स्मृतेः कथमुक्तेत्याशङ्क्य आह '**वाचक**' इति। वाचकेन सामान्यात्मना आन्तरेण शब्दनेन, नतु स्वलक्षणरूपेण संकेतयितुमशक्येन, संसर्गः शबलीकरणेन एकज्ञानावेशस्तत्र योग्योऽर्थोऽननुगामित्वेन अवस्तुरूपोऽपि अर्थत्वेन अध्यवसीयमानस्तस्य अत्र प्रतिभास इत्येतदेव लक्षणं विकल्पस्य, शब्दज्ञानानुपातीति तु विकल्पविशेषस्य कल्पनापरपर्यायस्य लक्षणमिति अभिप्रायशेषः। '**प्रागेव**' इति लक्ष्यनिर्देशात् पूर्वमित्यर्थः। ननु यदि एष विकल्पानुभवयोर्भेदः, तर्हि द्वयस्यापि ज्ञानत्वमेकं रूपं कुत इति। आह '**उभयमपि एवम्**' इति अनेन प्रकारेण बोधरूपमिति। एतत् वस्तु अग्रे सिद्धान्तिना मदीयपक्षमनुभाषमाणेन वक्ष्यते

'दृक् स्वाभासैव...............।' (१।१८)



इत्यत्र। तत् तस्मादुभयमपि ज्ञानमिति पदयोजना। एतदुक्तं भवति—अवान्तरभेदेऽपि अनयोः स्वस्यैव प्रकाशः स्वस्य प्रकाश एव स्व एव अस्य प्रकाशो न परः, स्वश्च अस्य प्रकाश एवेति यत् बोधलक्षणं सिद्धान्तिनोऽपि अभिमतं, तदस्त्येवेति द्वयोरपि ज्ञानत्वं युक्तम्। तदेव तर्हि आत्मा भविष्यतीति। आह '**तत् च**' इति। उभयं निर्विकल्पकं स्वविषयमात्रमिति, विषयश्च अननुयायीति प्रतिक्षणं विभिन्नलक्षण इति। तदपि अस्थिरम्, तथा विकल्पकमपि अध्यवसेयं विषयभेदात्। तथा स इत्ययमित्याद्यभिलापभेदात् नीलपीतादिविषयं भिन्नम्, एकस्थिरनीलाध्यवसाय्यपि प्रतिक्षणं भेदात् भिन्नमिति उभयथापि परसंमतं नित्यादिधर्मयोगित्वमात्मलक्षणं नास्ति। '**द्वितीयस्य च**' इति। उभयस्यापि भिन्नभिन्नस्वभावत्वं तावदेकं रूपं ततस्तु द्वितीयो भवेत् यदि अभिन्नस्वभावो बोधो भवेदित्याशयेन तृतीयस्येति वक्तव्ये द्वितीयस्येति उक्तम्। '**बोधातिरिक्तस्य**' इति वृत्तिं व्याख्यातुं ज्ञानैकजातीयतया वा विकल्पाविकल्पसंचय एको राशिरित्यभिप्रेत्य द्वितीयस्येति। '**ज्ञातुः**' इति ज्ञानातिरिक्तस्य '**स्वानुभव**' इत्यनेन दृश्यत्वसंभावनमाह। '**तस्य**' इति आत्मनोऽनुपलब्धेः, तस्येति वा उभयस्य अन्यसंबन्धितया अनुपलब्धिरिति वृत्तियोजना। '**ज्ञेयरूपः**' इति, ननु प्रमाणाविषयतोपनतज्ञातृरूपोऽर्थः कश्चिदिति अत्र तात्पर्यं ज्ञेयशब्दस्य, नतु जडैकरूपवाची ज्ञेयशब्दोऽत्र ज्ञानसंतानस्य जडत्वाभावात्। अत एव उक्तं वृत्तौ '**कश्चित्**' इति। तदेव अत्र टीकायां विपर्ययप्रदर्शनद्वारेण व्याख्यातम्। सूत्रे हि '**अहंप्रतीतिरपि**' इति विधिद्वारेण अस्य अनुपलब्धिः सूचिता। सा स्वकण्ठेन वृत्तौ व्याख्याता, तद्द्वारेण तु यः सूत्रार्थो विध्यात्मा सूचितः, स टी-

कायां स्वकण्ठेन व्याख्यात इति । एवं तत्र तत्र सूत्रवृत्तिटीकासु अवधातव्यम् । ननु भवता यदि व्यतिरिक्तो न अवधार्यते, तावता प्रादेशिकी अनुपलब्धिर्न अभावं सार्वत्रिकं गमयेत् । तस्मादयमात्मोपलम्भनिवृत्तिमेव प्रमाणयन् परं प्रतिक्षिपति, सा च विप्रकृष्टेषु अपि अस्ति, नच ते न सन्त्येवेत्याशङ्क्य 'लोकैः' इति वृत्तावुक्तं, तत् 'सर्वप्रमातृभिः' इत्यनेन व्याख्याय तत्र हेतुमाह 'सजातीयैः' इति । तत्रापि हेतुः 'सर्वव्यवहार' इति । अन्यथा हि नीलमपि हि कस्यचिदनीलतया भातीत्यपि हि भवेत् । ततश्च तादात्म्याभावव्यवहारोऽपि न सिध्येदिति उच्छिन्नैव भावाभावव्यवस्थेत्याशयः । तदुक्तं 'प्रत्यक्षनिवृत्तिरेव अनुपलब्धिरभावसाधनी सकलकारणकस्य अस्य अर्थसत्ताया भावासंभवार्थं, तत्र अर्वाग्दर्शनस्य आत्मप्रत्यक्षनिवृत्तिं प्रमाणयतस्तद्ग्रहणयोग्यप्रतिषेधो युक्तः' इति । ननु देशकालाकारसंकोचासहिष्णुरादिसिद्धत्वादनुपयुक्तप्रमाणव्यापारः स्वतन्त्रज्ञातृकर्तृतापरमार्थ आत्मेति सूत्रसूचितोऽर्थः स्पष्टीकृतो 'यथोक्तलक्षणः' इति इत्यर्थः । ननु अहंप्रत्ययशब्दे साभिलापग्रहणं विशेषणं वृत्तौ किमर्थमिति । आह 'साभिलाप' इति । नीलानुभवोऽयमित्यत्र निर्विकल्पकेऽपि नीलशब्दो विषयस्वरूपमवधारयितुं यथा उपात्तः, तथा अत्रापि अहंशब्द इति कश्चित् संभावयेत, स सूत्रे 'अवसायिनी' इतिपदेन प्रत्याययितः । तस्यैव अर्थो वृत्तौ साभिलापपदेन व्याख्यातः । सिद्धान्तिनिरूप्यमाणस्य च आत्मप्रसाधकस्य प्रमाणस्य दौर्बल्यनिवेदनेन पूर्वपक्षिणा स्वपक्षे बलवत्त्वमाविष्कृतम् । अवस्यति तच्छीलेति प्रत्ययभागेन ताच्छील्यं निमित्तानपेक्षित्वपर्यवसितमभिदधता अनुभवानुसार्यध्यवसायरूपत्वाभावनिरूपणात् य एव अहं ह्यः,



स एव अहं प्रातः, नच ज्ञानादयः इत्येवमादेः प्रत्ययस्य स्थिरगुणिरूपतानिश्चयनं, न कल्पनामात्रमेवेति उक्तम् । वृत्तावपि सहशब्देन अहंप्रतीतेरभिलापाव्यभिचारो दर्शित इति व्याख्येयम् । अत एव आह 'कल्पनात्वेन' इति । निर्विकल्पकानुसरणविरहस्वातन्त्र्यायोगेन अहंप्रतीतेर्वस्तुव्यवस्थापनायामहेतुत्वं सूचितम् । 'लेशेनापि' इति न किञ्चिदसाधारणेन धर्मेण नित्यत्वाद्यन्यतमेनेति यावत् । समयशब्देन उपपत्तिविरह उक्तः । यद्यपि शास्त्रसमयप्रतिष्ठानामपि न लौकिकातिरिक्तोऽवभास इत्युक्तं पूर्वं 'शास्त्रसंस्कृतानामपि' इत्यादिना, तथापि शास्त्रवासनाजनितगाढविकल्पबलात् य एवं ब्रूयात् स्थिरो ममात्मा अनुभवे भात्येवेति, स लौकिकप्रमात्रन्तरसाधारणप्रतिभासाभ्युपगमनायैव प्रत्याय्य इति टीकाकारस्य आशयः । तदयं प्रयोगः—नास्तीह आत्मा नित्यतादिलक्षणयोगी उपलब्धिलक्षणप्राप्तस्य अनुपलब्धेरिति ॥ १,२ ॥

घटादिविषयाः सर्वेऽनुभवा उत्पन्नापवर्गिणस्तावत् । अनुभवं च अनुरुध्यमाना स्मृतिर्दृष्टा, अन्यथा यत्रैव कुत्रचित् सा स्यात् । नच अनुभवोद्भवमात्रात्सा भवति चैत्रस्य दृष्टे मैत्रस्य तदभावात् । तदयमनुभवो बहिर्मुखेन वपुषा ध्वस्तोऽपि अन्तर्मुखेन अध्वस्त एव उपगन्तव्य इति परस्य सिद्धान्तिनो मतम् । अथशब्दद्योतितसंभावनारूपाशंकोपलक्षितं कारिकया पूर्वपक्षवादी आहेति संगतिः । 'तदनुभव' इति तस्य ध्वस्तस्यानुभवस्य यो विषयस्तम् ।

**अथानुभवविध्वंसे स्मृतिस्तदनुरोधिनी ।**
**कथं भवेन्न नित्यः स्यादात्मा यद्यनुभावकः ॥ ३ ॥**

अनुभवस्य विध्वंसे अनुभवस्वीकारद्वारा परिगृहीतनियत-
विषया स्मृतिः केन प्रकारेण भवेत् यदि तदनुभवान्तर्मु-
खरूपोऽनुभविता स्थिर आत्मा न स्यात् । अस्ति च इयं
स्मृतिः, तत् तेनापि भवितव्यमिति यदि परो ब्रूयादिति
कारिकार्थः । **'स्मृतिकाले'** इति यः संभाव्यते कालः, उद्बुभू-
षितायां स्मृतावित्यर्थः । न अनुभवे पूर्वभाविनि पश्चाद्भावमात्रं
तदनुरोधित्वमिति दर्शयति वृत्तिकृत् । पूर्वो योऽर्थविषयोऽनुभ-
वस्तस्य योऽवष्टम्भस्तद्रूपापरित्यागः, स धर्मो यस्याः । **'तदा-
पि'** इति स्मृतिकाले स्मृतिरूपतायामित्यर्थः । यदि कश्चिदा-
चक्षीत—अर्थानुभव एव अतीतविषयो विशिष्टः स्मृतिरुच्यते,
तत् किमस्या अनुभवविरोधित्वेन विषयस्य स्वमुखेनैव स्वीका-
रादिति । तं प्रति स्मृतेरनुभवरूपत्वं तावत् निराकरोति **'अनुभ-
वविध्वंसे'** इति च सूत्रोक्तिं घटयति **'अर्थ'** इति । अर्थस्य संनि-
धानं च इह सत्तायां जनकतया असत्तायामपि विषयतया उप-
योगः । **'संनिहितः'** इति सन्नेव सांख्यदर्शने इव छन्नोऽपि
विषयतां स्वातन्त्र्येण प्राप्त इति यावत् । **'साक्षात्कारः'** इति
अविकल्पक इत्यर्थः । विकल्पस्तावत् न विषयं साक्षात् स्वीक-
रोति, अध्यारुह्यवादेन तु उच्यते इति । एतदाह **'अपिवा'** इति ।
**'अनुभूयमानतया'** इति अनुभवायमानो वा स्वयमनुभव-
रूपो वा विकल्पोऽयमिति भवेत्, नतु अनुभूतत्वेन पूर्वानुभ-
वोल्लेखनेन स इत्येवं भवेत् । एतदेव च स्मृतेः प्रातिस्विकं
रूपम् । ततश्च यदि स्मृतिव्याप्ते कालक्षणेऽनुभवः, तर्हि न स्मृति-
स्तद्व्यापकः स इति प्रत्ययविरुद्धोऽयमितिप्रत्ययोपलब्धेः । विरो-
धश्च स्वमुखपरमुखविषयस्वीकारयोर्विरोधात् तद्रूपत्वाच्च इदंभाव-
तद्भावप्रतीत्योः । तस्मादयं प्रयोगः—स्मृतिकाले न प्रतीयमानोऽस्ति



अर्थः सइतिप्रत्ययविषयत्वात् । अस्तित्वं हि अर्थस्य प्रतीय-
मानस्य अयमितिप्रत्ययविषयत्वेन व्याप्तं, तद्विरुद्धस्य इयमुपल-
ब्धिरिति । ननु नष्टवस्तुविषयां स्मृतिं मुक्त्वा अन्यत्र इदं प्रत्यक्षादि-
प्रमाणान्तरविरुद्धमनुमानम् । मैवम् । स्मर्यमाणो हि सर्वः पूर्वा-
नुभूत एव । सच नष्ट एव क्षणिकत्वादिति क्षणान्तरसद्भावः
कुत्र उपयोगी । भवतु स्थिरोऽर्थो घटादिः सांख्य इव वान-
ष्टोऽपि सन्नुपस्थानक्षणभङ्गोपन्यासजनकत्वेन तु विषयतां नासौ
स्वतन्त्रां प्रतिलब्धुमलमिति दर्शयति **'सत्यपिवा'** इति निपा-
ताभ्याम् । नैतत् तत्त्वम्, अपितु अभ्युपगम्यवादोऽयमित्याह
**'अनुभवाभावात्'** इति स्मृतेरनुभवरूपत्वाभावादित्यर्थः ।
**'अनुभवविषयत्वेन'** इति स्मृतिज्ञाने स्वातन्त्र्येण विषयत-
येति यावत् । अतीतस्य अर्थस्य कालान्तरभाविनि स्वातन्त्र्येण
विषयत्वे त्रयी गतिः । स्थिर एव बोधो विषयोपनिपातकृतं
तदाकारत्वं तत्प्रतिभासत्वं वा विषयापगमेऽपि विषयान्तरापा-
तेऽपि च न त्यजति । एवं भूतवर्तमानविषयसाक्षात्कारस्तावत्,
वर्तमानानां च भावानां यावती अर्थक्रियान्तरपरंपराक्षेपिणी अर्थ-
क्रियाविशेषे योग्यता, सापि अत्यन्तनैर्मल्यात् साक्षात्कृता भव-
तीति अनागतविषयमपीत्येवं पूर्वं सर्वज्ञसंवेदनमिति एका गतिः ।
अस्थिरोऽपि नीलविषयोऽनुभवो नीले ध्वस्ते समनन्तरप्रत्ययत्वेन
नैलसाक्षात्कारतामत्यजन्तमेव बोधं पीतसंनिधानात् तु स्वार्थक्रि-
यासंततियोग्यताक्रान्तपीतविषयमपि आरभते,—इत्येवं बोधान्त-
रेष्वपीति अपरा । तदेतदुभयमुक्तं टीकायां **'प्रबन्धप्रवृत्त-
स्तदापि पूर्वानुभव एव'** इति । स्थिरे संतानवृत्तौ च प्रब-
न्धशब्दः । एवं सदा सर्वज्ञे द्वे गती । यस्तु जिज्ञासितसर्वज्ञः,
स यदेव यदेव दिदृक्षते, तदेव तदेव अपूर्वत्वेन आनुमानिका-

तीतवृत्तिप्रत्ययवत् प्रतिभाननैर्मल्यात् जानातीति तृतीया । तदाह 'तत्कालोदितो वा' इत्यादि । एतासु तिसृष्वपि गतिषु स्वातन्त्र्येण विषयस्वीकारेऽनुभवात् वैलक्षण्यकारि यत् स्मृतेः स्वरूपमुच्यते—पूर्वानुभवमुखेन विषयलाभादनुभूतस्य विषयस्य योऽसंप्रमोषोऽनपहारोऽनुभूततयैव प्रकाश इति, तदेव विघटेत । एवं स्वातन्त्र्येण विषयस्वीकारो न युक्तः स्मृतेरिति उपसंहारेण अनुवदन्नाह 'तत्' इति । अर्थस्य तिरोधानं स्वातन्त्र्येण अविषयता । ततोऽसौ स्मृतिरनुभवविशेषरूपा तावत् न भवति । अनुभवं च उपजीवितुं सा यतते । स च प्राच्यो नष्टः कथमुपजीव्यः इति कश्चिदंशोऽस्य नूनमनष्टः । ननु विषयव्यापृतो बहिर्मुखतांश एव न नष्ट इति युक्तं स्मृतित्वाभावप्रसङ्गादिति अनुभवस्य योऽनुभवः स्वसंवेदनात्मा अन्तर्मुखः, स न नष्ट इति आयातम् । सर्वेण हि प्रकारेण तदनन्वये यदि स्मृतिरुदियात् चैत्रदृष्टेऽपि मैत्रस्य उदियात् नियमनिदानाभावात्, तद्वद्वा स्वदृष्टेऽपि न उदियात् सर्वेण प्रकारेण उपजीवनीयस्य ध्वस्तत्वात् । उच्यते नियमः । तदनुयायिना केनचिदप्रध्वस्तेन रूपेण भाव्यमेव । ननु अनुभवस्य अनुभवरूपो बोधः किं नैयायिकबोधवत् ज्ञानान्तरस्वभावः । नेत्याह 'स्वसंविद्रूपोऽन्तर्मुखः' इति । अर्थप्रतिभासवत्त्वमेव अर्थस्य व्यापृतता बहिर्मुखत्वम् । बहिरिति स्वरूपव्यतिरिक्तेऽर्थे मुखं प्रधानं प्रकाशतालक्षणं रूपं यस्य, तत् तथा । बुद्धेर्नीलसंवित्तेः सैव ग्राहिका, तत आत्मनि ज्ञानरूपेऽन्तर्मुखा । अन्तरिति अव्यतिरिक्ते रूपे मुखं प्रकाशत्वं यस्याः । चकारौ यौगपद्यं धर्मद्वयस्य आहतुः । ननु अस्तु तावदन्तर्मुखांशोऽनुयायी, सिद्धान्तिनस्तु किं सिद्ध्यति इति । आह 'अन्तर्मुखश्च' इति । 'वक्ष्यमाणनीत्या' इति चेत्यधर्मदेशकालानावेशे व्यापित्वनित्यत्वसिद्धेरिति ॥३॥



एवं सिद्धान्तिमतं संभाव्य दर्शितम्, अधुना एतन्निराकरणप्रकारं स्वयमेव अयं वक्ष्यति,—इत्याशयेन सिद्धान्तिनं पूर्वपक्षवादी पृच्छति 'सत्यप्यात्मनि' इत्यादिना 'केन' इत्यन्तेन

**सत्यप्यात्मनि दृङ्नाशात्तद्द्वारा दृष्टवस्तुषु ।**
**स्मृतिः केन..............................**

प्रश्नस्य च अयमाशयः—इह अनुभवस्य नीलं प्रकाशता चेति धर्मद्वयं व्यावृत्त्युपकल्पितं वा वास्तवं वेति तावदास्ताम् । किमस्थानेऽनेन विकल्पितेन, इदं तु विकल्प्यम्—स्मृतौ सविषयतालाभाय नीलप्रकाशतांश उपजीवितव्यः, न अन्तर्मुखस्वप्रकाशतांशस्तस्य विषयविशेषसमर्पणायोग्यत्वे प्रमातृभेदाभेदयोर्नीलानीलयोश्च स्मृत्यविशेषप्रसङ्गात् । सच उपजीवनीयोऽशोऽर्थस्य अभावाद्वा असंनिकर्षाद्वा इन्द्रियव्यापाराभावाद्वा आदिपदात् वक्ष्यमाणात् सर्वज्ञतोपयोग्यदृष्टिनैर्मल्यसमाधानाद्यभावाद्वा नष्ट एव अर्थ आभासते यावता सामग्र्येण उक्तेन तस्य अभावे तावत् नीलानुभवरूपा दर्शनरूपता नष्टा । सैव च केवला अविच्छिन्नबोधमात्रोपयोगमनपेक्षमाणा अवलम्बनं द्वारमुपायोऽनुभूतवस्तुविषयतालाभे यस्याः स्मृतेः, सा सत्यपि आत्मनि निर्विषयशुद्धान्तर्मुखसंवेदनेऽपि अभ्युपगते केन प्रकारेणेति न कश्चिदसौ प्रकारोऽस्ति, येन सा स्यात्, ततो नैव भवेदिति सूत्रावतरणिकयोरर्थः । अन्तर्मुखः सिध्यतु बोधः, किं स्मृत्येति पश्यन्नात्मवादी तूष्णीमासीतेत्याशयेन तमागूरयति 'ततश्च' इति । व्यवहारो लौकिकस्तावदवश्यसमर्थनीयः । सच स्मृत्या विना कथम् । आत्मव्यवहारोऽपिच त्वया स्मृतिद्वारेण कर्तुमारब्धः

'..............स्मृतिस्तदनुरोधिनी ।
कथं भवेन्न नित्यः स्यादात्मा यदि............ ॥' (३)

इति ॥

अथ सिद्धान्तिनो वचनं हृदयस्थं संभावनया उपन्यस्यति

**..........अथ यत्रैवानुभवस्तत्पदैव सा ॥ ४ ॥**

एतत् वृत्तिकृत् व्याचष्टे '**असतोऽपि**' इति। यदिशब्देन अथशब्दस्य संभावनां द्योत्यत्वेन आह। '**कथं सा नष्टस्य विषयेण विषयवती**' इति ॥ ४ ॥

अत्र हेतुमाह—

**यतो हि पूर्वानुभवसंस्कारात्स्मृतिसंभवः।**

यतः पूर्वानुभवसंस्कारात् स्मृतेः संभवस्तस्मात् तद्विषयेण तत्पदैव सा। हि यस्मादेवं, तस्मात् केन दृङ्गाशे स्मृतिरिति पर्यनुयोगासंभव इत्याशयशेषं हिशब्देन दर्शयति ॥

परो लब्धावकाश आह—

**यद्येवमन्तर्गडुना कोऽर्थः स्यात्स्थायिनात्मना ॥ ५ ॥**

एवं यदि उच्यते, तर्हि अन्तर्गडुना कल्पनाशल्यदायिना कचिदपि अनुपयोगिना कोऽर्थ आत्मना स्थिरेण, न कश्चिदिति यावत्। '**तमनुभवमाभासयति**' इति। ननु नीलवत् किं विषयतया। नेत्याह, किंतु पूर्वानुभवानुकरणेन तत्सदृशत्वेन संस्कारजत्वेन प्रतिलब्धेन हेतुना। तत्सदृशी हि सा। सच नीलं विषयत्वेन अवगाढवानिति सापि तथा भातीति। '**तेनैव च**' इति संस्कारेण। टीकाकारः '**अथ यत्रैव**' इत्यादेः '**यद्येवम्**' इत्यन्तस्य सूत्रस्य तात्पर्यं '**पूर्वार्थ**' इत्यादिना '**विषयवत्ताभीष्टौ**' इत्यन्तेन आख्याय '**कोऽर्थः**' इत्यादेराह '**आत्मोपगमो व्यर्थः**' इतिशब्देन अन्तर्गडुशब्दस्य '**व्यर्थः**' इत्यनेन '**कोऽर्थः**' इत्यस्य। अर्थावभासकृता वासना संस्काररूपा यस्य आत्मनोऽन्तर्मुखबोधरूपस्य, स यदा तादृशदर्शनकृतवासनाप्रबोधद्वारेण प्रबोधितो भवति; तदा



तस्मिन्नुपादानेऽन्तरङ्गे कारणे स्वसंवेदनान्तर्मुखबोधलक्षणे आत्मनि कार्यरूपा स्मृतिर्जायते, अनुभवसदृशत्वेन च भातीति सविषयत्वमियदेव अस्याः। अनुभवात् पट्वभ्यासादरप्रत्ययरूपाद्आत्मनि वासनात्मा संस्कारः, तस्य सदृशादृष्टादेः प्रबोधस्ततः स्मृतिरिति इयत् सिद्धान्तिनो मतमुक्त्वा दूषयितुमाह '**एवं च**' इति। एतदुक्तं भवति—बहिर्मुखतांशादेव ज्ञानीयात् सविषयता स्मृत्या प्रतिलब्धव्या। नच सा नष्टात् युज्यते, नचापि अनष्टादन्तर्मुखतांशात्। नच बहिर्मुखतांशस्यापि अनाशे स्मृतित्वमुपपन्नम्, अनुभव एव स स्यादिति हि उक्तम्। तदयं बहिर्मुखतांशो नष्टोऽपि अनष्ट इव तिष्ठतीति उपगम्यम्। नष्टश्च कथमनष्टो भवति यदि तदनुकरणं तत्सदृशं ज्ञानान्तरं जनयितुं योग्यता न भवेत्। स एव तस्य नष्टस्यापि अनाशः। जीवति द्रोणाचार्यो यस्य अश्वत्थामा पुत्र इति हि व्यवहरः। स्मृतिरूपं तदीयमनुकरणमवशिष्यते इति ईदृक् सदृशत्वं मुख्यं संस्काररूपत्वम्, उपचारात्तु तज्जननयोग्यतापि संस्कारो या तावदप्रबुद्धा, तज्जननव्यापृतत्वं तु प्रबुद्धः संस्कारः; यदि वा प्रबुभुत्समानोऽसौ, प्रबुद्धस्तु संस्कारः स्मरणमेव तस्यैव अनुभवानुकरणरूपत्वादिति। एवं भूते बहिर्मुखत्वस्य अनुकरणमात्रेण अवशिष्यमाणतारूपे संस्कारलक्षणेऽर्थे आत्मवादिनापि अवश्योपगन्तव्ये शुद्धस्य बोधमात्रस्य अन्तर्मुखस्य तद्बहिर्मुखतारूपतारूपतादात्म्यवृत्तित्वेन न्यायायातविच्छेदस्य अविच्छेदः कस्य अनुपपत्त्या कल्प्यते इति। ननु तदभावे कुत्र संस्कारः। आह '**ज्ञानक्षणे**' इति। नीलानुभवात् नीलप्रकाशरूपात् समनन्तरप्रत्ययात् पीताच्च विषयादुद्भवन् ज्ञानक्षणो नीलप्रकाशरूपोऽपि भवति तावत् तत्सदृशत्वात्, पीतविषयोद्रेकात् तु न तथा भाति अविद्यादृष्टादि-

माहात्म्याद्वा । नहि स्वप्रकाशेऽपि संवेदने यदस्ति तेन भा-
तव्यं क्षणिकत्वाद्यंशस्य अनिर्भासनात्, अविद्यादिनिवृत्तौ तु
नैर्मल्यादुच्यते

'संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ।' (यो० सू० ३।१८)
इति । ततः पीतप्रत्ययात् हरितप्रत्ययो नीलपीतहरितप्रकाशन-
शक्तिमानपि हरितप्रकाश एव । उक्तयुक्तेस्तावदेषा परिपाटी—
यावत् नीलस्य तज्जातीयत्वतत्सादृश्यतद्विरोधादिना किंचित्सं-
बद्धं दृश्यं भवति, ततस्तादृशतोपलक्षितः संबद्धदर्शनरूपात्
तादृशदर्शनात् समनन्तरप्रत्ययात् विषयं कंचिदपि अनपेक्षमाणात्
तत्पूर्ववृत्तिनीलप्रत्ययानुकारी प्रत्यय उत्पद्यते । स प्रबुद्धः सं-
स्कार उच्यते स्मरणमिति । तदुक्तम् 'अनुभवः पटीयान् स्मृति-
बीजमाधत्ते, तादृशदर्शनादस्य प्रबोधः' इति । प्रबोधश्च असौ
स्मृतिरेव । अनुकरणमात्रावशेषता हि संस्कारः इति उक्तमा-
चार्यपादैः । तेन यदाशङ्कन्ते—तादृशदर्शनात् न कुत्रापि अस्य
संस्कारस्य प्रबोधः, न तावत् पूर्वविज्ञानगतस्य, तत् विनष्टम्;
न उत्तरविज्ञानगतस्य नीलतादृशज्ञानानन्तरं पीतज्ञानेऽन्तरालासं-
चेतिते नीलसंस्कारप्रबोधाभावादिति, समर्थयन्ते च नीलता-
दृशदर्शनेन नीलविकल्पोऽबुद्धसंस्कारजनितः स्मृतिं करोतीति;
तदसदेव अन्योन्याश्रयाद्यापत्तेः । नीलविकल्पोऽपि अभिलाप-
स्मरणात्, तदपि संकेतस्मृतेः, सापि नीलार्थस्मरणादिति
बहिर्मुखो मुखे विप्लवः । द्वितीयं तादृशदर्शनं यत्र प्रबुद्धसंस्का-
रता ततो नीलार्थस्मरणमित्यपि कल्पने स्मरणस्य विकल्परूप-
त्वेन अभिलापसंकेतस्मरणपूर्वभाविता उपगम्या, तत्राप्येवमिति
अनवस्थेति आस्तां तावदिह । अग्रे हि अणुशः एतत् विचार-
यिष्यते । स्थिरे तावदेतदनुकरणरूपा स्मृतिः, सा च विकल्प-



पर्यन्तं पूर्वदर्शनमनुकरोतीति विषयप्रकाशरूपा साभिलापा च
न अन्यदियमुपयाचते इति परमगुरुपादानां मतम् । ननु कुत्र
अस्थिरे संतानवाहिनि तदनुकरणता दृष्टा । तिलानां हि स्थि-
राणां मालतीकुसुमसौरभानुकारित्वं दृष्टमिति । आह 'भूर्जप-
त्रमपि' इति । पेलवावयवत्वात् संभाव्यमानावयवस्फुटनं
क्रियाविभागसंयोगविनाशक्रमेण नश्यति, अन्यदुत्पद्यते भूर्ज-
दलमिति अपिशब्दस्य अभिप्रायः । संवर्तितं चिरकालं ततोऽपि
प्रसारितं पुनः पूर्वसंनिवेशमेति । नच तत् कूटस्थं सत् नित्यम्,
अपितु संताननित्यम् । कूटे राशिरूपे तिष्ठति, न किंचिदस्य
चलति; कूटे कचन अनुल्लङ्घनीये तिष्ठति, न केनचिदन्यथा
कर्तुं शक्यम्; कूटे विश्वतो दाहे विनाशकारणोपनिपातेऽपि ति-
ष्ठति, कूटे व्याजेऽपि अपह्नवात्मनि क्रियमाणे तिष्ठति न अ-
न्यथाभवतीति अचलरूपतया भवत् कूटस्थनित्यमुच्यते । एत-
दुक्तं भवति—तिलेषु तावत् न कश्चित् संस्कारार्थोऽभ्युपगतः
स्थिरपदार्थवादिभिः । सूक्ष्ममकरन्दगन्धो हि तत्र संयुक्तसम-
वायादुपलभ्यते, निर्गन्धेऽपि जले इवेति । नच अत्र भावना
कल्प्या । सा हि आत्मन्येव, वेगस्थितस्थापकौ तु सक्रियवि-
षयौ कथं स्यातामिति न तिलेषु संस्कारः कश्चित् । तत्स्थायिनि
संस्कारो भवति तिलादाविति असदेव । वेगश्च नद्यामस्थिरायां
शरादौ च पवनजवक्रियासंभवसंभाव्यमानावयवविभागनान्त-
रीयके नाशे द्रव्यान्तररूपे दृश्यते एव, स्थितस्थापकोऽपि भूर्ज-
पत्रे । तद्वत् ज्ञानसंतानेऽपि भावनात्मको भविष्यति । अनुक-
रणमेव हि वस्तुतः संस्कारः । शरस्यापि प्रयत्नकृतसक्रियत्वानु-
करणम् । अत एव स्थितं पूर्वं रूपं स्थापयतीति स्थितस्थापक-
तैव संस्कारस्य परमार्थः । देशान्तरगततद्रूपस्थापनविशेषात् तु

वेगः पृथगुच्यते । भावना तु न सक्रियत्वानुकाररूपा, स्थित-
स्थापकस्तु संनिवेशानुकार इति वस्तुतोऽनुकरणमेव संस्कारार्थः ।
नच तत्र नित्यत्वस्य लेशेनापि उपयोगः । यत् यावतैव सिद्धं,
न तत् तदधिकं कल्पयति अङ्कुर इव बीजादिना; तथाच स्मृतिः
संस्कारेणेति । अधिककल्पनस्य हि कारणं तावतैव असिद्धत्व-
मन्यथा अधिककल्पना न विरमेत् । विरतिश्च अस्या व्यापिका
दृष्टैव, तद्विरुद्धं च इह उपलभ्यते इति ॥ ५ ॥

ननु संस्कारो धर्मरूपो गुणः, न स्वतन्त्रः इति धर्मिणा
अस्य भवितव्यम् । ज्ञानसंतान एव अस्य धर्मी,—इति चेत्,
न तावत् संतानः कश्चिदन्यो ज्ञानेभ्यः । तत् यदि ज्ञानेष्वेव
संस्कार इत्युच्यते, तदयुक्तम् । नहि अन्यत्र अनुभवरूपता, अ-
न्यत्र संस्कारः, अन्यत्र स्मृतिरिति युक्तं प्रसिद्धे चैत्रमैत्रादिप्रमा-
तृभेदे एवंविधवृत्तान्तानवलोकनात् । तस्मात् अनुभवसंस्कारयोर-
भेदः समर्थनीयः । सच स्वरूपेण न उपलभ्यते अतो विलक्षणत्वा-
दिति आश्रयाभेदादेकार्थसमवायलक्षणादेव स सिद्धयति । अनु-
भवसंस्कारयोश्च आश्रयद्वारेण अभेदे सिद्धे सुखादीनामपि प्रतिस-
न्धिः सिद्ध्यत्येव सर्वस्य प्रतिसन्धेयैः एव अहं सुखानुभवेन सुखी
समभवम्, स एव इच्छामि, दुःखी द्वेष्मि, इच्छाद्वेषयुक् च आ-
दातुं हातुं वा प्रयते इत्यादेः स्मरणसारत्वात् । अनेनैव आशयेन
संक्षेपव्याख्यारूपायामवतारिण्यां संस्कारस्य धर्मत्वं व्याख्यातं
न सुखादीनां पृथक् । तस्मात् संस्कारस्य आश्रय एकः, एकत्वा-
देव च स्थिरो यः; स एव आत्मेति पूर्वपक्षवादिनो मतमाशङ्क्य
कारिकां संक्षेपेण व्याचष्टे पूर्वकारिकार्थमेव उपजीवन् 'तदेवम्'
इति । यतो नित्य आत्मा, अतो यथा असावनुदितसंस्कारोऽपि
न स्मृतौ व्यापरिष्ट; तथा उदितसंस्कारोऽपि न व्याप्रियेत



तत्स्वरूपस्य अंशेनापि अवैलक्षण्यात् । वैलक्षण्यं हि संस्कार एव,
तत्कृते वा व्यतिरेकराहित्ये तस्य पूर्वरूपापायादनित्यत्वम् ।
व्यतिरिक्ते तु तस्य न तत् किंचित्स्यात् । ततः संस्कारस्य किमा-
श्रयेण स्मृतौ जन्यायामनुपयुक्तेनेति मात्रपदम् । उभयमपीह
कल्पनारूपं केवलं पूर्वसिद्धत्वादेकं सूत्रे उपमानत्वेन उक्तमित्या-
शयेन आह **'द्रष्टायं स्मर्ता च'** इति ।

**ततो भिन्नेषु धर्मेषु तत्स्वरूपाविशेषतः ।**
**संस्कारात्स्मृतिसिद्धौ स्यात्स्मर्ता द्रष्टेव कल्पितः ॥ ६ ॥**

तत आत्मनो व्यतिरिक्तेषु धर्मेषु संस्कारादिषु सत्स्वपि व्यति-
रिक्ते च समवाये सत्यपि तस्य आत्मनः स्वस्मिन् रूपेऽनुदितसं-
स्कारादिधर्मात् पूर्वरूपात् न विशेषः । विशेषे हि अनित्यत्वम् ।
तस्मात् संस्कारादेव पूर्वोक्तन्यायेन स्मृतिः सिद्धा । संस्कारभा-
वाभावाभ्यां प्रमात्रभेदभेद व्यवहारः, तावपि उपादाने उपादे-
यभावतदभावकृतौ, । यत् तु अहं स्मर्तेति भासते, तत्र तावदसौ
अहंप्रतीतिरेव; न आत्मा क्षणिकत्वादस्थिरत्वात् । तत्प्रत्येयं तु
वस्तु स्वलक्षणं यदि अनुभवगोचरीकृतं भाति, तदस्थिरमेव ।
अथ विकल्प्यं, तत् शरीरं संतानो वेति तथापि वेद्यवेदनातिरिक्तो
न कश्चित् वेदकः स्मर्तृद्रष्टृरूपो भाति । **'ततो भिन्नेषु'** इति
पूर्वपक्षसूचकत्वेन सिद्धान्तोपयोगित्वेन च सूत्रम् । तत्र आद्येन
रूपेण तावत् वृत्तिकृत् व्याचष्टे **'सुखदुःख'** इत्यादि । सुखादयो
हि धर्माः प्रतिसन्धीयमाना दृष्टाः, तेषां च भिन्नानां कथं प्रतिस-
न्धिरिति आश्रय एको वाच्यः । अत एव टीकाकारो व्याचष्टे
**'परस्परसमन्वयो न स्यात्'** इति । अथ सिद्धान्तोपयोगित्वेन
व्याकरोति **'भिन्नैर्धर्मैरसंभिन्नस्य'** इति अलब्धतदावेशस्येति
यावत् । एतत् टीकायां **'तैरेतैः'** इति बहुवचनेन व्याख्यातम् ।

भिन्नानामेकतादात्म्ये कथं बहुत्वम्, अनेकतादात्म्ये वा तस्य अ-भिन्नस्य कथमेकत्वमिति आशयः। तत्कृतो यः सुखादीनामुप-कारविशेषः संस्कारजन्मा प्रतिसन्धिलक्षणः, तत्र अस्य आत्म-नोऽनुपयोगात् न असौ तत्र उपयुज्यते इति यावत्। गुणकृताद्वा उपयुङ्क्ते स्वीकरोति। एवं सुखादिप्रतिसन्धौ तावत् न अस्य कोऽपि उपयोगः। न केवलं सुखादिभिरविशेषितत्वात् संस्का-रेण च असौ प्रतिसंधाता यावत् संस्कारस्य यत् मूलमनुभवात्मकं तेनापि अस्य न कश्चित् विशेषः कृत इति कथमसौ स्मृतिं जन-येदित्याह **'निर्विशेषस्य च'** इति। अनेन **'स्मृतावव्या-पृतेः'** इति वृत्तिग्रन्थं षष्ठ्यन्तमात्मनो विशेषणत्वेन हेतुतास-मुच्चयगर्भं व्याचष्टे। असंभिन्नत्वेन अनुपजातविशेषत्वात् प्रति-सन्धावात्मनोऽनुपयोगः स्मृतावव्यापृतत्वात् च।

'..................शरीराद्यवसायिनी।' (२।२)

इत्यत्रत्य एव इह अर्थ इत्याशयेन **'तत द्रष्टृवत्'** इत्यादिवृत्तिः टीकायां न व्याख्याता। तदयं संक्षेपः—यत् कल्पितमपि यत्सिद्धये न संभवति, न तत् तत्सिद्धये प्रकल्प्यते खपुष्प-मिव अङ्कुरसिद्धये; तथाच नित्यः कश्चिदात्मा स्मरणप्रतिस-न्धिसिद्धये। इह हि कल्पनाया नियमवत्त्वं व्यापकम्, अन्यथा सा न विरमेत्। यदि च तदप्रभविष्णु तत्सिद्धये कल्प्यते, तत् व्यापकमस्या हीयेतेति तत्सिद्धये प्रकल्पनं तत्प्रभविष्णुविषयत्वेन व्याप्तं; तच्च व्यापकमिह न उपलभ्यते इति व्यापकानुपलब्धिः। तदाह

'वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः॥'

इति,

Rain & Sunshine have no affect on either but do affect the skin
If they affect the skin they are not eternal, If



for the cause you have to find another cause soon & so forth ad infinitum

'यस्मिन्सति भवत्येव यत्ततोऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः॥'

इत्यादि॥ ६॥

एवं धर्मी एव तावदात्मा नास्तीति कुत्र हेतूपन्यासैरैश्वर्यं प्रसाध्येतेति उक्त्वा ज्ञानक्रियायोगादिति यो हेतुरुक्तः, तत् निराकर्तुं ज्ञानमेव परस्य न उपपन्नं जडत्वेन अजडत्वेन वेति परस्य प्रसङ्गापादनं कर्तुं कारिकाद्वयं प्रसङ्गविपर्ययेण स्वमतलाभो यतः। तथाहि यया युक्त्या आत्मा नित्यः, तया ज्ञानमपि नित्यं कस्मात्। नित्यत्वे तस्य तदिति कथम्। ततो धर्मिहेतुस्वरू-पयोरन्योन्यरूपविरोधेन आश्रयाश्रयिभावविरोधेन च सिद्धि-रिति। तत्र प्रथमम् अजडरूपत्वे ज्ञानं सिद्धान्तिनो न उपपद्यते इति यत् सूत्रेण उच्यते, तत् संक्षेपेण अवतारयति **'आत्मनः'** इति। सूत्रे **'अनित्यम्'** इति प्राधान्यादुपात्तं धर्मान्तराण्यपि वैलक्षण्य-कारीणि उपलक्षयतीत्याशयेन द्वित्वविकल्पेनेति सामान्येन आह। आत्मापि चित्स्वभावो ज्ञानमपि, ततो द्वित्वेन अन्यत्वेन नित्य-त्वानित्यत्वलक्षणेन धर्मधर्मिभावेन च या कल्पना कृता, सा अनुपपन्ना, प्रमाणमूलत्वाभावात् न वस्तुसाधनीत्येतद्वस्तु आह

ज्ञानं च चित्स्वरूपं चेत्तदनित्यं किमात्मवत्।
अथापि जडमेतस्य कथमर्थप्रकाशता॥ ७॥

चकारः सिद्धान्तिनं प्रति अनुपपत्त्यन्तरं समुच्चिनोति। ज्ञानस्य यदि चिद्रूपता आत्मन इव स्वाभाविकी, तर्हि तत् किमनित्यम्। नैव अनित्यमात्मवदेव। चित्स्वभावत्वस्य स्वप्रकाशत्वलक्षणस्य हि विरुद्धं वेद्यरूपत्वं परप्रकाश्यतारूपं स्वातन्त्र्यपारतन्त्र्ययोर्विरोधात्, वेद्यत्वेन च व्याप्तो देशकाल-योग इति व्यापकविरुद्धस्य स्वप्रकाशत्वस्य उपलब्ध्या ज्ञाने

विरुद्धव्याप्तस्य देशकालयोगस्य निषेधः । देशकालयोग एव च अनित्यत्वम् । नियतं हि यत् भवति, नतु न भवति कथंचित्; तत् नित्यम् । यच्च क्वचित् भवति, कदाचिच्च भवति; तदन्यत्र अन्यदा च न भवत्यपीति न नियतंभवम् । सकलदेशकालयोगेऽपि वस्तुतस्तद्योग एव । यदि हि तेन देशेन, तेन वा कालेन न अस्य स्वरूपमाविश्यते, तत् तत्रेति तदेति वा कुतः । आवृत इति चेत्, तेन य आ-समन्तात् वृतः, तस्य कथमन्येन धारणम् । वृतो हि अवष्टब्धः, स कथमन्यावष्टम्भं सहेत; तत एव क एकोऽवयवी बहुषु अवयवेष्वित्यादि सर्वमनुपपन्नम् । एवं यदि चित्स्वरूपं ज्ञानं, तत् नित्यविभुरूपं तदपीति आत्मान्तरं तदिति ज्ञानहेतुः स्वरूपासिद्धः । अथ जडं तत्, तर्हि अर्थं प्रति तस्य प्रकाशरूपता कथमिति सूत्रार्थः । ननु चिदिति ज्ञानमुच्यते, नच वैशेषिकादीनां तदात्मनः स्वं रूपम्, धर्मो हि तदस्य, तत् कथमुक्तम्—आत्मनश्चित्स्वरूपत्वे यथा नित्यत्वं, तथा ज्ञानस्यापि स्यादित्याशङ्क्य आह **'परप्रकाशत्वाभावात्'** इति । ज्ञानमिह नीलादिप्रकाश उच्यते । स आत्मनो मनःसंयोगादिकृतः कादाचित्को धर्मः । स स्वकारणाभावे यदा न भवति, तदा आत्मा नीलादिप्रकाशस्फुरितो न भवतीति सुषुप्तमूर्च्छाप्रलयापवर्गादौ स्वात्मना प्रकाशस्वभावोऽपि जड उच्यते । रूपं तु अस्य स्वप्रकाशमेव, न आकाशकालदिगादिजडरूपव्यापकवर्गतुल्यमपवर्गस्य फलतोऽपुरुषार्थताप्रसङ्गात् शून्यवादिवत् । तत एव भासर्वज्ञाचार्यप्रभृतयो नैयायिका एवमेव अभ्युपजग्मुः । नित्यज्ञानानन्दवत्त्वं न्यायभूषणे आत्मनः समर्थितम् । तश्च आत्मा यथा प्रकाशस्वभावः किमनित्यः, न अनित्यः, अपितु नित्यः, तद्वत् नीलज्ञानमपि नीलप्रकाशस्वभावं किमनित्यम्, न अ-



नित्यम्, नित्यमेवेति उपपन्नो दृष्टान्तः। **'अथवा'** इति भवतु वैशेषिकाणामचित्स्वभाव आत्मा, किमस्थाननिबन्धनेन । आत्मवादिनो हि मया पर्यनुयोज्याः, अतोऽन्ये स्वप्रकाशात्मवादिन इह प्रसङ्गापादनेन निराकरिष्यन्त इति । **'दृष्टान्त'** इति वैधर्म्यग्रहणमत्र न प्रयुक्तं दृष्टान्तस्य सर्वस्य साधर्म्यप्राणत्वात् । आत्मवत् चित्स्वरूपं चेदिति वैधर्म्येण योजनेऽपि निषेध्येन हि नित्यत्वधर्मेण तुल्यता उच्यते अनित्यः शब्दः आकाशादिवदित्यनेन । तथाच वृत्तौ गुणीभूते निषेध्ये नास्य प्रयोग उपपन्नः । नहि भवति अनित्यः शब्दः कृतकत्वादाकाशवदिति, अपितु नित्यमकृतकमाकाशमिवेति; यदि वा यदनित्यं न भवति, तत्कृतकमपि न भवति आकाशवदिति; यदि वा अकृतकत्वादाकाशवत् नित्यः शब्दः इति । तत एव अयं व्यतिरेकभागे भवन् दृष्टान्तः साधर्म्येणैव भवति । इवार्थतुल्यार्थयोः सादृश्यमेव हि सर्वत्र परमार्थः । ततो न वैधर्म्ये तत्प्रयोगः, केवलं साधर्म्यस्य व्यतिरेकनिष्ठतामभिधातुं विशेष्य व्यपदिश्यते वैधर्म्यदृष्टान्तोऽयमिति । तस्मादिह एवं सूत्रे योजना । किंशब्देन काक्वा निषेधोऽभिधीयते, आत्मवत् किमनित्यम्, आत्मवत् न अनित्यमिति यावत्; अथवा किमित्यनेन अनुपपत्तिप्रभावपर्यनुयोज्यधर्मत्वमभिधीयते । तेन यथा आत्मा किमनित्यः, तथा ज्ञानमपि किमनित्यम्; उभयोरपि अनित्यताधर्मोऽनुपपद्यमानत्वेन पर्यनुयोगमात्रमिति । यदिवा असमस्त एव अकारो नञर्थः प्रसज्यप्रतिषेधेऽपिवा । **'अकर्तरि'** इत्यत्र कारकशब्दोपादानलिङ्गसमर्थितोऽसमर्थसमासः । ततश्च निषेध्येन तुल्यता—आत्मवत् नित्यं कस्मात् न भवतीति, चित्स्वरूपत्वेन तु स्पष्टा । एवं तत्र तत्र योजनायामवधातव्यम् । तथाच वृत्तिः **'आत्मन इव नित्यतादिप्रसङ्गः'** इति । जैमिनीयाः

पुरुषं संविद्रूपमेव सुखाद्यवस्थाभिन्नं मन्यन्ते, सांख्यास्तु स्वसंवेदनमात्ररूपमपरिणामिनम् । तत्र चिद्रूपांशे अचिद्रूपधर्मान्तरानुप्रवेशशून्यत्वात् देशकालात्मनापि धर्मेण न अनुप्रवेष्टुं युक्तमिति । तत आह 'तेषां हि' इति । कापिलानां तावत् नित्य एव असौ । जैमिनीयानामपि चिद्रूपांशेन नित्यः, अवस्थांशेन तु अनित्योऽस्त्विति । एवं संक्षेपेण श्लोकार्धं व्याख्याय वितत्य विकल्पपूर्वकतागर्भं व्याचष्टे 'चिदचित्त्वाभ्याम्' इति । अभ्युपगतेऽपि आत्मनि यत् ज्ञानमङ्गीकृतं, तत् स्वप्रकाशं न वेति पक्षस्य द्वैतम्, द्वितैव द्वैतम् । 'तत्र' इति द्वयोः पक्षयोर्मध्ये । सांख्यदर्शने यथा चिदुपरागेण पुरुषप्रतिबिम्बेन प्रकाशता, तथा न इह, अपितु तं विना स्वत एवेति । एष यदि प्रथमः पक्षः, तर्हि व्यापित्वं देशेन अनवच्छेदः, नित्यत्वं कालेन, आदिग्रहणादेकत्वं स्वरूपेणेत्यादिर्य आत्मनः पुरुषस्य धर्मः; स ज्ञानस्यापि प्रसज्यते । चो हेतौ । यस्मात् देशविशेषायोगेन व्यापित्वं, कालविशेषायोगेन च नित्यत्वम्, देशकालोपलक्षितस्वरूपविशेषायोगेन च अभिन्नत्वमिति आदिग्रहणात् । विशेषशब्दो वा पृथगेव स्वरूपविशेषवाची । ननु संविद्रूपस्य देशकालौ तावत् वेद्यौ भासनीयौ, तावेव संकोचकौ भविष्यतः, तत्संकोचाच्च स्वरूपसंकोचोऽपि भवेदित्याशङ्क्य आह 'नच बोधरूपेण' इति । एतेन ज्ञातरि इव ज्ञानगुणेऽपि न संकोच उपपद्यते न्यायस्य तुल्यत्वादिति दर्शयता चेत्यधर्मेत्यादिवृत्तिं गुणिगुणविषयतया व्याचक्षाणेन । एतदुक्तं भवति—बोधे तावत् निर्भासनं यदि चिद्रूपे दर्पणे इव विश्रान्तं प्रकाशते, तत् चिद्रूपस्य कः संकोचः । अथापि वेद्यताबहिर्भूतं तदन्तालिङ्गदेव साक्षिमात्ररूपं संवेदनं बोध्यस्य बोध इत्युच्यते, तथापि कः संकोचः ।



परस्परस्वरूपमेलने हि यावन्योन्यमन्यथाभावं न सहेते—यथा शुक्लो गुणः पटस्य न कृष्णादितां, पटोऽपि न शुक्लस्य अन्याश्रयतां; तौ संकोचकौ परस्परतः । आद्यो रूपभेदोऽपरो देशभेदः । तत्रापि सिद्धत्वे गुणभेदः शुक्ल इति, साध्यत्वे कर्मभेदश्चलतीति । सिद्धत्वे व्यतिरिक्तत्वाव्यतिरिक्तत्वे तन्तुषु पट इति, साध्यत्वे व्यतिरिक्तत्वाव्यतिरिक्तत्वे गच्छतीति, असंकोच्यत्वे असंकोचकत्वं सामान्यम् । तच्च इदं वस्तु वा व्यावृत्तिकल्पितं वा समवायेन तादात्म्येन वेति किमिह अवान्तरेण । तत्रापि अव्यतिरिक्ततया भासमानं यदुक्तं सिद्धसाध्यरूपं, तदेव अत्यन्तव्यतिरिक्तमावेशेन भासमानम् । बाह्यौ देशकालौ गृहे चैत्रः, उदिते जुहोतीति । तस्मादावेशकृतः संकोचः । आ समन्तात् प्रवेशो हि आवेशः । आवेशोऽपि तुल्यकक्ष्यत्वेन । यस्य हि येन समानकक्ष्यास्थानं, तत् तेन आविश्यते । भिन्नकक्ष्यो हि अनावेशात् न संकोच्यते संकोचकव्यापकनियमविरुद्धानियमप्रसङ्गात् । नच पातालगहनेन द्यौः संकोच्यते । संवेदनाच्च भिन्ना कक्ष्या देशकालयोर्बोध्ययोः । कक्ष्या हि प्रकाशस्थानम् । देशकालौ बहिः प्रकाशेते अयं घटस्य देशो वा कालो वेति इदन्तया प्रकाशे बहिर्भावविमर्शात्मतया व्यतिरिक्तप्रकाशपारतन्त्र्यरूपया निर्भासमानत्वात् । प्रकाशस्तु स्वाव्यतिरेकेण अहमिति स्वातन्त्र्येण भातीति । यत्र येन भिन्नकक्ष्यं, न तत् तस्य संकोचकं पातालमिव दिवः । तथा बोधेन देशकालादीति संकोचकत्वव्यापकाभिन्नकक्ष्यत्वविरुद्धोपलब्धिः । बोधादहन्ताप्रकाशमानात् भिन्ना कक्ष्या देशकालयोरिदन्तया प्रकाशमानत्वात् । बोधात् यदि अभिन्ना तयोः कक्ष्या स्यात्, इदन्ताप्रकाशमानत्वविरुद्धमहन्ताप्रकाशमानं स्यादिति व्याप्तिसिद्धौ स्वभावहेतुः । तदेतदाह 'नच' इति । 'बो-

**धस्य यदबहिः**' इति बोधरूपादव्यतिरिक्तं सुखप्रधानं रूपं स्व-
संवेदनलक्षणं तत्र देशकालयोर्न प्रकाशो व्यतिरेकेण बोधात् बहि-
स्तयोः प्रकाशनात् बहिर्मुखेन बोधेन । ननु एवं देशकालौ कस्य
संकोचकौ भवताम् । आह '**इह घट**' इति । चो हेतौ । यस्मात्
इहेति वैयधिकरण्येन देशसंकोचः । स इति पूर्वानुभूते
स्मर्यमाणे भावशरीरानुप्रवेशेन व्यामिश्रीभूतदेशकालावेशः ।
तदेति वैयधिकरण्येन कालविशेषयोगः इति । एवमत्र स-
र्वत्र । तत्र इदन्तात्मिकया इदन्तया व्यतिरिक्तविमृश्यमानतया
निश्चीयमानौ देशकालौ घट इत्येवंव्यतिरिक्तनिश्चयस्यैव तुल्यक-
क्ष्यस्य भेदाय स्वरूपसंकोचनाय पर्याप्तौ । तस्मात् न स्वसंवेदने
तयोः प्रकाशः । तेन बोधस्य न तौ तुल्यकक्ष्याविति संगतिः ।
स्वभाव एव स्वाभाव्यम् । यदि वा स्वभावस्यापि बहिर्मुखतायां
बहीरूपविषयगतदेशकालसंकोचापत्तिर्विषयोपाधिकृतेति कस्यापि
शङ्का स्यात्, यथा वक्ष्यते

'केवलं भिन्नसंवेद्यदेशकालानुरोधतः ।
ज्ञानस्मृत्यवसायादि सक्रमं प्रतिभासते ॥' ( १।५२ )

इति, तामपहर्तुं स्वभावस्य भाव इति अन्यरूपासहिष्णुताभि-
धानाय भावप्रत्ययः । ननु किमुपचरितं बोधरूपत्वमस्ति येन
तच्छङ्काशमनाय चिच्छब्देन अनुपचरितबोधे पुंसि

'चितिशक्तिरपरिणामिनी ।' ( यो० द० १।२ भा० )

इत्यादिस्थानेषु प्रसिद्धेन ज्ञानेन व्यवहारः कृत इत्याशङ्क्य आह
'**सांख्यानां हि**' इति । प्रधानस्य यः प्रथमो विकारो महानिति,
तस्य कारणस्कन्धादन्यो यो बुद्धिशब्दवाच्यः करणस्कन्धः, स
प्रधानविकारत्वात् जडोऽपि चिदात्मकपुरुषप्रतिबिम्बयोगात्
चेतनवत् भासमान उपचरितबोधस्वभावोऽस्त्येव पारमर्षदर्शने



यत एव, तस्मादुपचारशङ्काशमनं कर्तव्यमेव । ननु उपच-
रितबोधरूपमेव तर्हि ज्ञानं भविष्यति, यत्र नित्यता
स्यात्, स धर्मप्रसङ्गदोषो न भवतीत्याशङ्क्य आह '**तादृशी
च**' इति समनन्तरसूत्र एव । ननु चित्तत्त्वरूपस्य आत्मनोऽपि
देशादियोगो भात्येव, तत् कथं तद्दृष्टान्तेन तदयोगप्रसङ्गात्
ज्ञानगुणस्य नित्यतादिप्रसञ्जनम् । तथाहि यथा इह घटः, इदानीं
घट इति प्रतीतिः; तथा इह जानामि, इदानीं जानामि; तत्र
अज्ञानमत्र ज्ञातास्मीति अस्ति प्रतिपत्तिः । सत्यम्, सा तु
शरीरादिनिष्ठा शरीरादावेकसामग्र्यधीनतादिना ज्ञानसंबन्धा-
ध्यवसायेन तदुपाधिवशेन ज्ञातरि प्रतिभाति । तेन चित्तत्त्वस्य
यत् तत्त्वमनुपचरितं स्वसंवेदनप्रकाशरूपमन्तर्मुखम्, तत्र न
दिशा देशरूपया कालेन वा अवच्छेदः संभवति पूर्वोक्तयुक्त्या
तत्त्वे तत्त्वतः । युक्त्यन्तरमपि आह '**बोधैकात्मनः**' इति ।
दिक्कालौ हि अव्यतिरिक्तविशेषाभिधानेन किंचित्करावेव विशेषणं
भवतः, न अकिंचित्करावतिप्रसङ्गात् । तथाहि देशवशात् लोह-
वस्त्रादीनां विशेषः कालवशाच्च भुजगविषादीनां दृष्ट एव ।
चिद्रूपे तु प्रकाश एव एकं रूपं, ततोऽधिकं तु अप्रकाशत्वरूपत्वेन
चिद्रूपे कथं मिश्रीभवेत् । तत् हि वेद्यत्वमेव स्पृशत् ततो बहि-
र्भावमेव अवलम्बते । ननु नीलेऽपि विशेषो नीलत्वाधिकत्वेन
अनीलरूपः कथं समाविशेत् । उच्यते । सिद्धान्तिदर्शने ताव-
दनन्त आभासवर्गो नियतिशक्त्या मिश्रीभूतः सन् पदार्थोऽर्थक्रि-
याकारी, तस्य रुचितेन अंशेन व्यपदेशो भवति । सौगतम-
तेऽपि निरंशस्वभावोऽपि ततस्ततो व्यावृत्तः पदार्थात्मा कारण-
सामग्रीजन्यं रूपभेदं व्यावृत्तिभेदैरध्यवसीयमानं सहते एव ।
ज्ञानं तु स्वप्रकाशं विषयस्य च प्रकाशरूपम् । तदस्य व्यावृत्ति-

स्वीकारिणापि विकल्पेन यः कश्चित् तद्देशत्वतत्कालत्वादिरूपो विशेषोऽध्यवसीयते, सोऽप्रकाशरूपेदंभागनिवेशित्वात् बोधबहिर्भावमेव प्रतिपद्यते। ननु यथा धूसरनीलम्, भास्वरनीलम्, अत्र नीलम्, अधुना नीलम्,—इत्येवंस्वरूपदेशकालविशिष्टानि भिन्नानि नीलानि, तथा बोधा अपि भविष्यन्ति; नच अन्यस्तेभ्योऽस्ति बोद्धेति कथमात्मन इवेति वृत्तावुक्तम्। न तुल्यमेतत् यतो नीलं नाम उक्तरूपं विशेषपरिहारेण न किञ्चिदुक्तचरमिति तथाभूतान्येव तानि नीलानि नामेति युक्तम्। तत आह '**बोध्यत्वानेकवैचित्र्यसहत्वात्**' इति। बोधः पुनः सुप्तसमाधानादिषु वेद्येभ्यो नीलसुखादिभ्यो देशकालेभ्यश्च तदनुरञ्जकेभ्यो निर्मुक्त एव प्रकाशमात्रपरमार्थोऽन्तर्मुखात्मना भाति, तदेव अस्य पारमार्थिकं रूपमिति अधिकं ततो बहिर्भूतमेव। यत् यस्य निजं रूपं, तत् तेनैव सततं भाति तरुरिव शाखादिमद्विशेषात्मना। नच देशकालादिविशेषैः सदा बोधो भातीति। सदा तथात्वाभासेऽपि यदि निजं रूपमिति स्यात्, कदाचित् पटसाहित्येन घटो भात इति पटोऽपि अस्य रूपं स्यादिति अनियम उपप्लवेत। नियमश्च व्यापको दृष्ट इति व्यापकविरुद्धोपलब्धिप्रसङ्गात् विपक्षमुज्झित्वा वर्तमाननिजरूपत्वे सततया भासमानत्वेन व्याप्यते इति व्यापकानुपलब्धिः। यो यद्विशेषरूपः, स तदन्यतमनिर्मुक्तो न भवति तरुरिव धवादिनिर्मुक्तः। नच भवति विशेषनिर्मुक्तो बोधः समाधानसुषुप्तमूर्च्छादाविति न नीलबोधादिविशेषरूप इत्यपि व्यापकानुपलब्धिरेव। भवति च विशेषनिर्मुक्तो बोध इति तु प्रयोगे व्यापकविरुद्धोपलब्धिः। प्रयोगभेदकृत एव हि आसां भेदः। वस्तुतस्तु एकमेवेति सिद्धं नास्ति बोधविशेषस्पर्श इति। तदेतदुक्तं '**बोधैकात्मनः**' इति विशेषानुपरक्तशुद्धबोधमात्रत्वेन भातस्येत्यर्थः।



तथाच नरेश्वरविवेकः

'नहि यथा गोत्वं शावलेयादिविशेषरूपमेव, तथा नीलपीतादिविशेषमयमेव तत्।'

इति। उपपत्त्यन्तरमपि अत्र समुच्चिनोति '**आभाससारत्वेन च**' इति। आभासनमा ईषत् संकोचेन भासनं प्रकाशना सारं तत्त्वं परमार्थो देशक्रमस्य कालक्रमस्य च। एतदुक्तं भवति—क्रमरूपेण देशकालौ भेदकौ भवतः। देशभेदो हि गन्तरि स्फुटो भवति गतेः। एकदेशसंबन्धस्तु एकदेश इति तद्भासनया तिष्ठत्यपि देशभेदः क्रमोल्लेखपरमार्थ एव। कालभेदस्तु क्रमात्मैव भाति। क्रमप्रत्ययसारो हि असौ। तथाहि परोऽयमस्मात् यूनो वृद्धः, अपरोऽयमस्मात् वृद्धात् युवा,—इति जन्मनः क्रमवत्ता तद्वशाच्च अस्तित्वप्रभृतेर्भावविकारस्य निर्भासते। यौगपद्येऽपि क्रम एव परमार्थः। अन्यापेक्षया हि यः क्रमस्तस्य तुल्यताभासेन युगपदिमौ जाताविति प्रत्ययो भविष्यत्क्रमयोग्यतावशेन यौगपद्ये कालप्रत्ययो न परमार्थतः कालभेदोऽसौ तयोरित्यन्ये। चिरक्षिप्रप्रत्ययावपि क्रमस्य भूयसोऽल्पस्य च अनुसन्धिबलात् भवत इति क्रमपरमार्थौ दिक्कालौ। इहास्ति, इह न, तदानीं नासीत्, इदानीमस्तीत्येवंरूपश्च क्रमः। अस्तित्वनास्तित्वयोश्च व्यवहारे भात्ययं, न भात्येव अयमिति निमित्तम्। तद्भासनमभासनेन सान्तरव्यन्तरं सत् क्रमस्य उत्थापकं विचित्रस्य। आभासनैकपरमार्थे तु चिद्रूपे ईषदर्थस्य अनाभासनभागस्य अभावात् निराभासे आभासनात् निष्क्रान्ते प्रकाशैकरूपे कथं क्रमयोगः। अत एव काणादैरपि 'कारणे कालाख्येति' (वै.द. २।२।९) इति वदद्भिः कार्येष्वेव कालभेद इति दर्शितं भवति। परमाणूनां तु

कालेन संयोगमात्रं वस्तुबलात्, न कालभेदः। कालेन असंयोगेऽपि च आकाशादेर्घटाद्यपेक्षया यः कालभेदः 'कविं पुराणम्' इति व्यवहारकाले, स घटादिकार्यनिष्ठ एव वस्तुत इति निराभासे अकार्यरूपे तावदात्मनि न देशकालभेदः। ततो न चिद्रूपे देशकालक्रमश्चिदेकरूपत्वादिति कारणविरुद्धोपलब्धिः। देशकालक्रमस्य कारणं प्रकाशनाप्रकाशनरूपत्वं, तद्विरुद्धं प्रकाशैकरूपत्वमिति। एवमात्मनो नित्यत्वं विभुत्वं च उपपादितं कालदेशायोगात्। देशकालभेदोऽपि भावापेक्षया चिद्रूपस्य, न भावाभासे चिदनवभासाभावात्। तदनवभासो हि घटपटयोरिव देशकालभेदस्य व्यापक इह न उपलभ्यते। चिद्रूपस्य च स्वरूपेण भेदे तदपेक्षयापि नासौ घटस्य इव स्वापेक्षया। तत एव भेदेऽन्योन्याश्रयमिति स्वरूपाभेदमपि उक्तोपपत्त्युपजीवनेन आह **'अत एव'** इति। यत एव देशकालाभेद उक्तो देशकालाधेयविशेषास्पर्शात् निराभासत्वादिति हेतोः, तत एव आत्मनां बहुत्वं चैत्रमैत्रादिषु स्वरूपेण भेदः कथं स्वाभाविकः। स्वभावे हि भिन्ने स्वाभाविकः स्यात्। चिदेव तु यत्र रूपं, तत्र कोऽन्यः स्वभावांशोऽस्ति, यो भिद्येत। तेन देशतः कालतः स्वरूपतश्च आत्मनस्तावत् न कश्चिद्भेदः। अत्र च सर्वत्र चिद्रूपत्वं कारणम्। तच्च अविकलं ज्ञानगुणेऽपीति तेनापि नित्येन व्यापकेन एकेन च भवितुं युक्तमिति। तत्र नित्यत्वव्यापित्वे परेण आत्मनोऽङ्गीकृते, एकत्वमपि सर्वत्र श्रुत्यन्तविद्भिः; येनापि नोपगतं सांख्यादिना, सोऽपि उपपत्त्या उपगमयितव्यः। एतच्च सर्वं ज्ञानेऽपि प्रसज्यते इति प्रसङ्ग एव आपादयितव्ये ग्रन्थकारेण दृढोपपत्तिः पूर्वपक्षवादिमुखेनैव निरूपिता पृथग्भूतो ज्ञानात्मा गुणो हि न सिद्धान्ते अङ्गीकरिष्यते तत्किमस्य प्रसङ्गः



करिष्यतीत्यभिप्रायेण। तदीयो हि प्रसङ्गोऽयं सांख्यादीन् दूषयतु नाम, अस्मत्सिद्धान्ते तु न किंचित् दुष्यतीति। पूर्वपक्षवादी च इयति दूरे प्रसङ्गविपर्ययलाभाशया अधिरूढः। तथाहि अयं प्रसङ्गविपर्ययः—नच चिद्रूपमपि ज्ञानं नित्यव्यापकाद्वैतरूपमुपगतं भवता, तदात्मापि चिद्रूपः कथमेवं भवेत्। तथा चिद्रूपत्वेन अविशिष्टत्वे देशकालभेदवत् स्वभावभेदोऽपि कथमात्मनां येन बहुत्वं स्यात्। अथ चिद्रूपत्वेऽपि बहुत्वमभ्युपगम्यते नानाव्यवस्थात इति

'जननमरणकरणानां प्रतिनियमात्।' (सा० का० १८)

इति, तर्हि देशकालभेदोऽपि भवेदिति। एवं प्रथमश्लोकार्धं व्याख्यातं, द्वितीयं व्याचष्टे **'अथैतत्'** इति। एतेषां नित्यत्वव्यापित्वाद्वैतानां यः प्रसङ्गो बलादेव आपतितः, स एव दोषः स्वपक्षोपमर्दनात् ततो भीरुणा आत्मवादिना जडैकरूपं यदि ज्ञानमङ्गीक्रियते; तदा नीलं यथा न पीतस्य प्रकाशनरूपं भवति, तथा ज्ञानमपि न स्यात्। ननु जडोऽपि प्रकाशो भवति आदित्याग्न्यादिरित्याशङ्क्य आह **'प्रकाशश्च बोधः'** इति। ननु आलोकप्राय एव निर्मलसत्त्वप्रभारूपो बोधो भविष्यतीत्याशङ्क्य आह **'तथात्वे'** इति आलोकादित्वे दीपसूर्यरत्नप्रभादिमध्यप्रवेश इत्यर्थः। **'पुनरपि'** इति। सत्यपि आलोके प्रमातरि अविद्यमाने न अर्थो भाति, सत्यपितु प्रमातरि प्रदीपकल्पे तज्ज्ञानेन भासेतैव अर्थः। प्रदीपशतप्रज्वालनेऽपि न भात एव योऽर्थः, स ज्ञाने तादृश्येव कस्मात् भासते। यो यथाजातीयसंनिधाने यथा न भवति, स तथा भवन् तद्विलक्षणजातीयसंनिधिमवद्योतयति यथा शीतलजलहिमवायुसंनिधावपि घटोऽरक्तत्वेन अनुभूतो रक्तो भवन्नुष्णवह्निसंनिधिम्। जडजातीयसंनिधौ च भावो दृश्यमानत्वाध्यवसीयमानत्वव्यवहार्यतारूपं विशेषमप्रतिलब्धं

कदाचन प्रतिलभमानोऽजडजातीयसंनिधिमवद्योतयति। विपर्यये निर्निमित्तत्वप्रसङ्गात् बाधकात् व्याप्तिसिद्धौ स्वभावहेतुः। संविदि अनुभवनिश्चयरूपायां निष्ठा अन्यानपेक्षिणी विश्रान्तिर्यासां ता विषयाणां नीलादीनां व्यवस्थितयो विविधेन असंकीर्णेन आत्मना अवस्थानानि, ता व्यवस्थितीः कथमचेतनोऽर्थो नीलादिप्रायः प्रयुञ्जीत व्यवस्थापयेत् व्यवस्थितीरिति······प्रधानं व्यवस्थितीः संपादयेदित्यर्थः। सामान्यविशेषभावेन वा निर्देशो हतशायिकाः शाययति मद्यमद इति यथा। यदिवा विचित्राणि यानि अवस्थानानि नीलं पीतमिति, तानि व्यवस्थापयति नियमयति—नीलमेवेदम्, इदमेव नीलमिति। तदचेतनस्य अप्रकाशरूपस्य कथं संभाव्यते एव। तदेव हि प्रकाशनरूपम्। 'उत्तरकारिकायाम्' इति

'············जाड्ये नार्थप्रकाशता।

इति सांख्यं चिदचिद्रूपबुद्धिवादिनमपि प्रति यत् वक्ष्यते, तत्र

'द्वयमत्यन्तविरुद्धमेकस्य न पारमार्थिकं रूपम्।'

इति नयेन यदि जडमस्या वास्तवं वपुः, तत् कथमर्थस्य प्रकाशनरूपा असाविति व्यवस्था। अभावदोषो य इह उक्तो वाद्यन्तराणि अभ्युपगमितजडज्ञानरूपाणि प्रत्याययितुम्, स तत्रापि योजनीयः। एतत् पूर्वपक्षवादी सर्वं पूर्वोक्तं निगमयति 'तत्' इति यदेतदुक्तं तस्मात् हेतुकलापात्। 'उभयथापि' इति चिद्रूपत्वेन अचिद्रूपत्वेन च व्यतिरिक्तस्य आत्मनो व्यतिरिक्तो धर्मो ज्ञानाख्यो न युज्यते। चिद्रूपत्वे नित्यव्यापकस्वभावस्य न तादृशेन कश्चित् संयोगोऽपि परेण अभ्युपगतः, किमङ्ग धर्मधर्मिभावः। चिद्रूपस्यैव च विषयव्यवस्थास्थानत्वे किमन्येन चिद्रूपेण अचिद्रूपेण वा धर्मेण परिकल्पितेनेति 'ज्ञानक्रियायोगात्' इत्यत्र हेतौ



ज्ञानयोगादित्ययमंशो ज्ञानस्य स्वरूपेण असंभवात् तत्संबन्धस्य च अत्यन्तासिद्धेरपि स्वरूपविपरीतसाधनत्वात् विरुद्धस्तद्द्वारेण च धर्मिस्वरूपबाधनादाश्रयासिद्ध इति ॥ ७ ॥

चिद्रूपमचिद्रूपं वा ज्ञानं मा भूदुक्तदोषात्, चिदचिद्रूपं तु भविष्यतीत्याशङ्क्यमानमात्मवादिपक्षं पूर्वपक्षवादी दूषणाय सूत्रेण आह

**अथार्थस्य यथा रूपं धत्ते बुद्धिस्तथात्मनः।**
**चैतन्यमजडा सैवं जाड्ये नार्थप्रकाशता ॥ ८ ॥**

अस्य अर्थं संक्षेपेण टीकाकारो व्याचष्टे '**सांख्योऽयमपि**' इति। सम्यक् ख्यातिः प्रकृतिपुरुषयोर्विवेकेन, संख्यानं च परिगणनं तत्त्वभेदानां संख्या; तदधिकृत्य कृतो ग्रन्थः सांख्यः। तत्र बुद्धितत्त्वस्य वृत्तिर्ज्ञानमुक्तम्। वर्तनं वृत्तिः परिणामविशेषः। पूर्वरूपं हि तिरोदधत् कश्चित् परिणामः काष्ठभस्मवत्, स कार्यपरिणाम उच्यते; यस्तु अतिरोदधत्, स धर्मपरिणामो यः सिद्धाकारतया भाति सुवर्णस्येव कुण्डलता; यस्तु अतिरोदधत् साध्याकारत्वेन गच्छति बुध्यत इति यथा, स वृत्तिपरिणामः। तथाहि वर्तनं तस्येव तथेति वृत्तिरुच्यते। '**पूर्ववदेव**' इति चिद्भागद्वारेण नित्यतादिदूषणम्, जडभागदिशा विषयव्यवस्थानायोगः इति। '**अथ**' इति परसंभावनां द्योतयति। बुद्धिः कर्त्री अर्थस्य नीलादेः संबन्धि रूपं प्रतिबिम्बात्मकं येन प्रकारेण स्वच्छतात्मना सत्त्वातिशयकृतेन धत्ते धारयति, तेनैव स्वच्छताप्रकारेण आत्मनः पुरुषस्य संबन्धि चैतन्यं प्रतिबिम्बात्मना धत्ते अन्तर्बहिश्च सर्वतः स्वच्छत्वादिति सांख्योक्तिः संभाव्यते। तत्रापि दूषणमाह एवं चैतन्यप्रतिबिम्बेन संविद्रूपा जाता प्रकाशप्रतिबिम्बेन इव जलं प्रकाशरूपम्। एवं बुद्धिवृत्तिश्चिद्रूपज्ञानात्मिका। ततश्च पूर्वोक्तो नित्यत्वव्यापित्वादिदोषः,

सांख्यदर्शनोचितदोषान्तरयोगश्चेत्याशयशेषः सूत्रान्तरकरणे। अथ तत्प्रतिबिम्बेऽपि न तद्रूपापत्तिरग्निप्रतिबिम्बेऽपि दर्पणस्य दाहकत्वादृष्टेः। तर्हि सा बुद्धिरर्थचित्प्रतिबिम्बद्वयग्रहणेऽपि जडैव, तत् स एव दोषः—विषयव्यवस्था ततः कथमिति सूत्रार्थः। सूत्रे **'अर्थस्य'** इत्यादिना **'चैतन्यम्'** इत्यन्तेन यदुक्तम्, तत् ज्ञानस्य स्वरूपमिति। प्रकरणेन च अर्थबलेन लब्धं वृत्तौ स्पष्टयति **'ज्ञानं बुद्धिः'** इति। ननु वैशेषिकादयोऽपि **'बुद्धि-रुपलब्धिर्ज्ञानम्'** इति अनर्थान्तरं मन्यन्ते, तत् कोऽस्य वादस्य पूर्ववादात् विशेषः, संवित्स्वभावे एव आत्मनि उपगते किमन्येन ज्ञानेन अभ्युपगतेन, बुद्धिधर्मे वा ज्ञाने किमन्येन आत्मना कृत्यमित्याशङ्क्य आह **'सांख्यस्य'** इति। वैशेषिकादिदृशि तत् ज्ञानमात्मनो धर्मः, इह तु न तथेति भेदः इति एका शङ्का निरस्ता; शुद्धस्वभावसंवित् न अर्थप्रकाश इति द्वितीया; जडप्रधानविकारबुद्धिस्वभावत्वात् जडं ज्ञानं न स्वतःप्रकाशरूपमिति तृतीयेति तात्पर्यार्थः। अहंकारवशादात्मत्वेन उपचर्यमाणाया बुद्धेर्निरासार्थं तत्त्वपदम्। मात्रग्रहणेन तस्य धर्मान्तरयोगं निराकरोति—तथाहि धर्मा उद्यन्तोऽपयन्तश्च धर्मिणोऽपि कथंचित् तादात्म्यात् परिणामानित्यतामायान्ति। ततस्तदभावे परमार्थतो नित्य आत्मा संवेदनशक्तिलक्षणः। ननु सौगतेऽपि संवेदनलक्षण आत्मेत्याशङ्क्य आह·········ततोऽपि अस्य दर्शनस्य भेदमाह **'अन्तर्मुखम्'** इति। स्वप्रकाशमात्ररूपमेव आत्मतत्त्वं सांख्यानाम्, सौगतानां तु स्वप्रकाशत्वेन अन्तर्मुखं, बाह्यनीलादिप्रकाशत्वेन च बहिर्मुखम्। नच एकस्य अन्तर्बहिर्मुखता उपपन्ना स्वपरयोरैक्यापत्तिप्रसङ्गात्। नच सा युज्यते बाह्यस्य अर्थस्य ग्राह-



कात् विच्छेदेन अवभासादिति ग्राहकोऽन्तर्मुख एव। अत एव बाह्यत्वग्राह्यत्वायोगात् न तेन तुल्यकक्ष्यतया परं किंचन चकास्ति। तुल्यकक्ष्यताप्रतिभासकृतश्च गुणभावप्रधानभावाभ्यां धर्मधर्मिभावविशेषणविशेष्यभावोपधानोपधेयभावादिव्यवहारः। तथाच पटोऽयं शुक्ल इति पटाभासशुक्लाभासयोर्बहिर्भूमौ तुल्येदन्ताग्राह्यभावेन स्थितयोः पटाभासोपरक्तः शुक्लाभासो विपर्ययो वा भवतीति युज्यते। तेन अत्र गुणभूतो विशेषणमन्योपधेयरूपत्वादन्यत् स्वरूपव्यतिरिक्तमुपधेयं स्वात्मना अनुरञ्जनीयं रूपं विशिष्टलक्षणं येनेति, प्रधानभूतस्तु विशेष्योऽन्येन उपधेयं विशेषणेन उपरञ्जनीयं रूपमस्येति। एवं च विशेषणविशेष्यभावमुखेन यो व्यवहारः, स आत्मनि न उपपद्यते इति न असौ कस्यचित् धर्मः, नापि तस्य कश्चित् धर्म इति ज्ञानं नाम यद्यपि बुद्धिरूपं; तथापि न आत्मनो धर्म इति नैयायिकादितो भेदः। ननु एवं स एव पुरुषोऽस्तु, किमन्येन ज्ञानेनेति शङ्कित्वा आह **'ज्ञानं पुनर्'** इति। स हि शुद्धः प्रकाशस्तेनैव वपुषा यदि अर्थानां प्रकाशः स्यात्, तत् तस्य रूपस्य तृणमात्रेणापि अनूनाधिकरूपत्वात् सदा सर्वस्य अवभासनं कस्यचित् वा कदाचिदपि अनवभासनं भवेदिति सर्वज्ञमज्ञं वा जगद्भवेत्। तस्मात् घटसंवेदनमिति घटाभासोदये, पटसंवेदनमिति तदाभासप्रक्षये पटाभासोदये च भवति। नच घटपटाभाससंभेदं चिन्मात्ररूपं पुरुषः सहते। नच संवेदनं विषयस्य स्वरूपं जडाजडयो रूपयोर्विरोधात् पूर्ववत् सार्वज्ञ्याज्ञताप्रसङ्गाच्च। तदिदं **'विषयः प्रकाशते'** इति यत् प्रकाशनं, न तत् पुरुषः; नापि तत् नीलादीति पुरुषस्य प्रकाशरूपस्य च्छायेयमिति आयातम्। नच संवेदनं साक्षादेव विषये च्छायामर्पयति अन्धाद्यभावप्रसङ्गात्, नापि इन्द्रियेषु झटि-

त्येव सर्वत्र निश्चयप्रसङ्गेन आलोचनासंभवापत्तेर्य एव पश्यामि, स एव शृणोमीत्याद्यनुसन्धानाभावप्रसङ्गात् बाह्येन्द्रियाव्यापारस्वप्नसंकल्पस्मरणाद्यनुदयप्रसङ्गाच्च । तत् कचन वस्त्वन्तरे अस्य पुरुषस्य च्छाया संक्रामति । नच अस्मिन्नगृहीतविषयप्रतिबिम्बे पुनरपि विषयस्य अप्रकाशत्वापत्तेरिति यदेव तत् वस्त्वन्तरं चैतन्यविषयात्मकोभयच्छायाग्रहणसमर्थं तत एव सत्त्वप्रधानं बुद्धिशब्दवाच्यमनुसन्धानकारित्वादेकं, तस्य जानामीत्येवंभूता जिघृक्षाप्रयत्नोपक्रमा विषयालोचनशरीरा निश्चिनोमीत्यवसाना पूर्वापरीभूता तावद्विषयाध्यवसायफलैक्येन एका तद्धर्मिपरामर्शमतिरोदधती क्रियात्मा विशिष्टा परिणामपरंपरा ज्ञानाख्या—वृत्तिर्वर्तनं तथावस्थानमुच्यते । काष्ठस्य हि भस्म न वृत्तिः काष्ठपरामर्शस्य तिरोधानात् । नापि एक एव क्षणो वृत्तिः, तत्र हि अयमित्थं वर्तते इति को विभागः । तदनेक एव क्षणो धर्मिपरामर्शमतिरोदधत् फलबलेन कल्पितविचित्रमर्यादः क्रियात्मा परिणामो वृत्तिश्चैत्रो गच्छतीतिवत् । सा च वृत्तिर्विषयस्य अध्यवसाये पर्यवसितरूपा पुरुषच्छायाबलेन प्रकाशरूपतामुपगता ज्ञानमुच्यते इति पिण्डार्थः । तदेतदाह **'ज्ञानं पुनर्'** इत्यादिना । पुनःशब्दः पुरुषात् विशेषद्योतकः । **'सततम्'** इति प्रवहद्रूपेण अनवच्छिन्नम् । निद्रादावपि हि प्रत्ययरूपत्वमिच्छन्ति गुरवः पतञ्जलिप्रभृतयः प्रबोधे प्रत्यवमर्शात् सुखमस्वाप्समित्यादेः प्रत्ययविशेष एवं निद्रेत्यादि निरूपयन्तः । पूर्वदेशकालादियोगेन स्मर्यमाणतया वर्तमानदेशकालादियोगेन अनुभूयमानतया तद्द्वययोगेन प्रत्यभिज्ञायमानतया वर्तमानभविष्यद्योगेन संभाव्यमानतया भूतस्य वर्तमानस्य वा भविष्यद्योगेन यदिवा केवलभविष्यद्योगेन उत्प्रेक्ष्यमाणतया तत्रापि स्फुटास्फुटादितया आभासान्तरसाचिव्येन प्रमात्रन्तरादि-



साहित्येन चेत्यादिना वैचित्र्यसहस्रसंभेदनविचित्रा ये आभासाः, अत एव गुणवाचिना तच्छब्देन प्रकारयोगात् द्विरुक्तेन कर्मधारयेण वा तत्तच्छब्देन व्यपदिष्टा घटपटादीनां बाह्यानां संबन्धिन आभासभेदाः प्रतिबिम्बविशेषाः, तेषामुदयलयौ व्यक्तिविलयौ नित्यं विद्येते यस्मिन्, अत एव अन्यः इति बुद्धितत्त्वात् व्यतिरिक्तो बाह्य इति चित्तत्त्वादन्यो यो विषयो नीलादिः तत्र या अन्तर्मुखता तदन्वयव्यतिरेकानुविधानम्, ततो हेतोर्यदायत्तं ज्ञानं, तच्च न चितो, नापि अर्थस्य, किं तर्हि बुद्धितत्त्वस्य पश्यामि, जानामि, निश्चिनोमीत्येवंभूतः पूर्वापरीभूतावयवो यो व्यापारः क्रिया तत्स्वभावत्वेन हेतुना वृत्तिर्वर्तनमित्यनया भाषया सांख्ये दर्शितं

'वृत्तयः पञ्चतय्यः ।' 'प्रमाणविपर्यय ।'(यो० सू० १।६)

इति,

'स्वालक्षण्यं वृत्तिस्त्रयस्य ।' ( २९ का० )

इत्यादिषु स्थानेषु । ननु तदनुसारेण इह तेनापि वृत्तिग्रन्थेन भाव्यमिति **'बुद्धिर्ज्ञानम्'** इति कथं सामानाधिकरण्येन निर्देशः । अत्र आह **'केवलम्'** इति । बुद्धेर्वृत्तिर्बोधनं संवेदनं दर्शनमिति हि प्रत्यासत्त्या समाकृष्टायाः शब्दान्तरसंनिधानाच्च दुर्बलाया अपि अवयवप्रसिद्धेः शब्दान्तर्लीनैव क्रिया भासेत; ततश्च अजडसंवेदनात्मकं तत् ज्ञानमित्याशङ्केत । सामानाधिकरण्ये तु बुद्धिशब्दस्य

'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।'

इति अबाधितेन न्यायेन त्यक्तावयवस्य सामान्यप्रसिद्धौ जडरूपार्थाभिधायिनः समानाधिकरणं ज्ञानं जडरूपमुक्तं भवतीति । वृत्तिवृत्तिमतोश्च किं काणादवत् समवाय इत्यपि शङ्का सामानाधि-

करण्येन अन्यतिरेकपर्यवसायिना निराकृता भवति। सामानाधिकरण्यं च समुदायप्रसिद्धिमुपोद्बलयत् बोधताशङ्कां पराकरोति यथा, तद्वद्व्यतिरेकमपि प्रतिपादयेदित्याह **'अत एव च'** इति। अभेदो यः प्रतिपादितः, ततोऽवश्यमतो बोधताशङ्का शाम्यतीति एवकारः, समुदायप्रसिद्ध्या चेतिचकारः । वृत्तितद्वतोरभेदं प्रतिपादयता सामानाधिकरण्येन बोधताशङ्का निरस्तेति तु व्याख्यानमुत्तानदृशां मतम्। ननु पूर्वापरीभूतानां क्षणानां फलमेकमवलोक्य वृत्त्येकत्वमर्यादा कल्प्यते ग्रामप्राप्तिफलेन गमनमर्यादादृष्टेः, इह तु ज्ञानरूपायाः क्रियायाः किं फलम्। आह **'तस्याश्च'** इति। चः पूर्वपक्षाशङ्कां सूचयति। तस्या यः सत्त्वाख्यो भागोंऽशः, सोऽधिगमक्रियायाः फलत्वं प्राप्तः फलभूतः। ननु सत्त्वं भाग इति तदा युक्तं, यदि भागान्तरयोगोऽस्याः स्यात्। अस्तीत्याह **'त्रिगुणायाः'** इति। ननु सत्त्वरजस्तमांसि त्रीणि यदि अस्या रूपम्, तत् सत्त्वभाग एव कस्मात् फलमित्याशङ्कासूचकोऽपिशब्दः। अत्र उत्तरमाह—परस्य घटादेरसौ यतः प्रकाशस्वभावः।

'सत्त्वं लघु प्रकाशकम्।' ( १३ का० )

इति हि आहुः। ननु नीलादेरपि त्रैगुण्यात्मत्वात् तदीयोऽपि सत्त्वांशस्तथा कस्मात् न भवति। उच्यते **'शुद्धत्वात्'** इति। रजस्तमोभ्यामनभिभूतत्वेन स्वच्छत्वात्। अत एव

'प्रख्यारूपं हि चित्तसत्त्वम्।'

इति उक्तम्। ननु परप्रकाशात्मा चेत् सत्त्वभागः, युगपदेव विश्वं कस्मात् न चकास्यात्, सत्त्वस्यैव च उपयोगे निरूपिते गुणद्वयमन्यत् किमर्थं स्यात्,—इत्याशङ्काद्वयमपिशब्देनैव द्योतितं परिहरति **'रजस्तमोभागाभ्याम्'** इति। सत्त्वं प्रकाशरूपं निर्मलनभःप्रख्यं सर्वतो जलदपटलेन इव वरणात्मना तमसा



समावृतमास्ते। तत्र च मारुतस्थानीयं प्रवृत्तिस्वभावं रजः क्रियात्मकतया क्रमेण तमोजलदमपसारयति न्यग्भावयति। अतश्च स विशेषेण परप्रकाशात्मापि भवन्नसौ सत्त्वभागः क्रमेण नीलादेर्बाह्यस्य सुखादेश्च आन्तरस्य प्रकाशरूपो जायते इति युक्तम्। युक्तश्च त्रैगुण्योपयोगः। ननु प्रकाशरूपोऽपि असौ सत्त्वभागो बाह्यालोकस्थानीयो जड एव, तदेष कथंकारं निराकाङ्क्षीभवेत् येन पार्यन्तिकफलत्वमस्य उक्तम्। किञ्च नीलप्रकाशरूपः सुखप्रकाशात्मा वा यः सत्त्वभागः स नीलसुखप्रतिबिम्बोपरक्तः, ज्ञानात्मिका च वृत्तिः क्रिया, स एव कथं फलं स्यात्। उच्यते—आत्मनः संविद्रूपस्य तस्मिन् स्वच्छे यतः सम्यक्संनिधानं प्रतिबिम्बेन विश्रान्तिस्ततः संवेद्यमानतां प्रतिपद्यते। ननु केन अन्येन तस्य संवेद्यता। न बहिर्बुद्धितत्त्वान्तरमस्ति, नच पुरुषापेक्षया संवेद्यमानता उपपन्ना तथात्वे नीलादेरपि तथैव सा अस्त्वित्यलं बुद्धितत्त्वकल्पनायासेन। आह—प्रकाशमानतैव संवेद्यता न अपरा काचित्, अपितु संविच्छायया अनुग्रहात् प्रकाशत्रुडितः स्वनिर्भास इव स सत्त्वभागो न प्रकाशान्तरमपेक्षते इति एषैव संवेद्यता। एतदुक्तं भवति—सर्वतः स्वच्छात्मनि बुद्धिसत्त्वे विषयप्रतिबिम्बभागो ज्ञानक्रिया, संविच्छायाभागस्तु फलम्। यदुक्तं

'फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः।'

इति। ननु आत्मच्छायावशात् विषये एव प्रकाशमानता अस्तु, किमन्तरालकल्पितेन बुद्धितत्त्वेन। लोके च विषय एव प्रकट इति व्यवहारः। तथाच जैमिनीया अर्थदृष्टतामेव फलं मन्यन्ते। अत्र आह—यदि विषये एव प्रकटता उत्पद्येत, तदा स विषयस्तादृशो जातः, स कथं कस्यचिदतादृशः स्यात्। नहि कारणोप-

नतं रूपं कारणमेव प्रति तथा भवति । एवं हि कुम्भकारमेव
प्रति कुम्भः कुम्भो भवेदन्यान् प्रति अकुम्भः । ननु यथा द्वित्वं
कस्यचित् प्रमातुरपेक्षया बुद्धया जातं नच सर्वान् प्रमातॄन् प्रति
भाति, अपितु तमेव; तथा प्रकटता यदात्मगतभावनात्मकक्रि-
यासंनिधानात् जाता तमेव प्रति भविष्यतीति आशङ्क्य आह
**‘प्रकाशसंज्ञक’** इति । द्वित्वं हि जातं न प्रकाशस्वभावम्,
अपितु तत्सामान्यज्ञानपुरःसरम् । द्वित्वगुणज्ञानात् द्वे द्रव्ये
इति ज्ञानेन भवितव्यम्, ततश्च तत्र द्वित्वोत्पत्ताविव तत्सामा-
न्यज्ञानोत्पत्तावपि अपेक्षाबुद्धेर्निमित्तत्वम् । नच सा प्रमात्रन्तरे
संभवति एकार्थसमवायात् यतो ज्ञानयोः कार्यकारणभावः ।
इह तु प्रकटता चेत् जाता, न अत्र अन्यदपेक्ष्यमस्ति तत्रापि
ज्ञेयायां प्रकटतान्तरानवस्थाप्रसङ्गात् । तस्मात् विषयः प्रकट इति
बुद्धितत्त्वप्रतिबिम्बितस्य विषयस्य संवित्प्रतिबिम्बमेलनमेव इद-
मुच्यते, नतु बाह्यस्य प्रकटता काचित् धर्मः । ननु मा भूत् वि-
षयनिष्ठा प्रकटता आत्मनिष्ठैव भविष्यति मम प्रकटो घट
इति आत्मनि उपसंहारदर्शनात्, तत् किं बुद्धितत्त्वेन । उच्यते
—आत्मा संविन्मात्रस्वभावः साक्षात् द्रष्टा केवलं, तस्य विष-
यप्रकटता नाम यत् संविदोऽधिकं तज्जनकत्वं कथं स्वरूपं स्यात् ।
कथं तर्हि असौ विषयबोधेषु द्रष्टा साक्षी चेति । आह—**बुद्धा-
वेव सत्याम्** । ननु मा भूत् तत्र चिदात्मनि पुंसि अधिकं
किञ्चन विकाराधायि प्रकटतात्मकं फलं, स एव तु भविष्यति ।
आह—**निर्विकार** एव असौ यदि नीलप्रकाशः, तर्हि नीलस्यैव
विश्वस्य असौ तथा स्यात् । प्रकाश एव हि नीलप्रकाशः पीत-
प्रकाश इति आयातम् । **‘अत एव’** इति । यस्मात् न विषये
प्रकटतालक्षणो भोगो विश्रान्तः, नापि आत्मनि, अस्ति च



विषयात्मनोर्भोगयोगव्यवहारः, तत इत्यर्थः । बुद्धिरूपं यत्
सत्त्वं तस्य यतो नैर्मल्यं रजोऽपसारणसहिष्णुता तदीयतमोभा-
गस्य, नतु नीलादाविव अनपसारणीयत्वं ततो हेतोरुभयी-
मपि आत्मनो विषयस्य च संबन्धिनीं रूपच्छायां संवेदननी-
लमयतामनुकरोति तदाकारधारितया भासते नीलरक्तपटमध्य-
गतसितवस्त्रवत् ततो हेतोस्तत्प्रतिबिम्ब आत्मविषयप्रतिबिम्बे
यतो युज्यते, ततो विषयबोधस्वभावो भोगः सिध्यति । स हि
ग्राह्यस्य ग्राहकस्य च यो मेलनात्मा संबन्धस्तद्रूपतयैव लक्षितः,
न अन्यदस्य रूपमिति आशयः । ननु बुद्धौ यदि द्वयप्रतिबि-
म्बयोगः, आत्मनो विषयस्य च कथं भोक्तृभोग्यरूपव्यवहार
इत्याशङ्क्य आह **‘सा च’** इति । सा भोगसिद्धिर्भोक्तृभोग्य-
भावे । आत्मा भोक्ता विषयो भोग्य इति व्यवहारे हेतुर्हि यस्मात्,
तस्मात् तयोरात्मविषययोर्भोक्तृभोग्यतायोग्ययोर्बुद्धितत्त्वे सं-
बन्धो यावद्गति परस्परूपमेलनात्मा वासगृह इव यूनोः यः,
स एव भोक्तृभोग्यभावः । ननु सत्त्वं तावत् प्रकाशात्मकं, तत्र
चेत् विषयप्रतिबिम्बं पतितं; जातो विषयप्रकाशताव्यवहारः;
किमन्येन आत्मप्रतिबिम्बकल्पनेनेत्याशङ्कां वारयति **‘विषयो-
परागवत्’** इति । स हि सत्त्वप्रकाशो बाह्यालोककल्पो जड
इति उक्तम् । **‘बोधावेशेन’** इति बोधसंसर्गेण । ननु यथा
तण्डुलानामयमेव पाके कर्मभावो यो विक्लित्तिलक्षणो विशेषः,
तथैव विषयस्यापि बुद्ध्यमानतायां केनचित् विशेषेण भाव्यम्,
सैव प्रकटता भविष्यति । भवेदेवम्, यदि निर्वर्त्यविकार्ये एव
कर्मणी स्याताम्, अस्ति तु अन्यदपि प्राप्यं कर्म यत्र तत्कर्तृ-
कर्मसंसर्गाधिको न कश्चित् विशेषो ग्रामं गच्छतीति यथा ।
तदाह **‘नहि’** इति । बोधसंसर्गात्मा च बोधावेशोऽयमेव

उच्यते—यो बोद्धा पुरुषेण बुद्धौ विषयस्य संसर्गः । **'अत एव'** इति । सांख्यस्य यदेतदित्यादि आरभ्य पूर्वोक्तमुपयोगि प्रमेयं बुद्धितत्त्वसद्भावे हेतुत्वेन उपजीवति । यत आत्मा निर्विकारः, नच तादृगसौ विषयप्रकाशः, विषयस्य च न प्रकटता नैसर्गिकी उपपन्ना, नच आत्मसंनिधानतः, नापि इन्द्रियसंनिधानमात्रात्, ततो बुद्धिसंज्ञकं स्वतन्त्रमेव तत्त्वं वस्तुरूपम्, ननु आत्मनो धर्मो वैशेषिकवत्, नापि विषयस्य जैमिनीयवत्, न इन्द्रियाणां बार्हस्पत्यवत्,—इति इयती सांख्यस्य मुख्या प्रमेयगतिः । वृत्तौ छायाशब्देन सूत्रे रूपशब्दं तत्पर्यायं व्याख्यत् । **'अतः'** इति उभयच्छायाधारणात् । असौ बुद्धिः । अर्थस्य प्रकाशस्तत्फलपर्यन्तोऽधिगम इत्यर्थः । ननु एवं बुद्धितत्त्वं निर्मलं सदा स्थितं, तत् तदुभयप्रतिबिम्बधारि सदैवेति तावता तावत् परमार्थबन्धो नो कस्यचित् । नहि शिशिरमारुतशिलीभूतशीतलतरमहाहिमानीशकलकप्रतिबिम्बितश्चैत्रः शीतव्यथामनुभवेत्, नापि तत् तुषारशकलकमुपचरितोऽपि बन्धः स्यात् यदि उपचरिता अन्यो भवेत् प्रतिबिम्बितं चैत्रं पश्यन्निव मैत्रः । नच बुद्धिपुरुषावुभौ यस्तथा उपचरति, तादृक् तृतीयोऽस्ति । अस्तीति आह **'अहंकारतत्त्वम्'** इति । करोतिः क्रियासामान्ये । अहं करोमीति जानामि भुञ्जे वेत्यर्थः । तथाहि आत्मा बुध्यते इति अपेक्षाविषये भुङ्क्ते इति तु सुखदुःखसाधनविषये यो व्यवहारः प्रतीतिः प्रत्यवमर्शश्च, तद्रूपा वृत्तिर्वर्तनं व्यापारोऽस्य । ननु अबोद्धरि अभोक्तरि च निरागसि कथमहंकार एवं व्यवहरेत् । आह—उपकारकत्वं बोधोः भोगे च बुद्धिगते यत आत्मनस्तेनैवमध्यारोप्य व्यवहरति । ननु उपकारकत्वं तत्र अस्य कथम् । उच्यते । तत्संनिधौ यतो बोधो ज्ञानभोगोभया-



त्मताविभक्तो बुद्धौ सिध्यति । ननु परिणामधर्मतालक्षणा क्रिया मा भूदात्मनो वास्तवी, भोक्तृतापितु किं न पारमार्थिकी । ओमित्याह **'ननु आत्मनः'** इति । चिन्मात्रतैव, न विषयोपभोक्तृता । नच तदतिरिक्तमस्य रूपमुचितमिति हि उक्तं विस्तरतः । ननु अहंकारेण एवमात्मा भोक्तृत्वेन अभोक्तैव सन् व्यवह्रियताम् । व्यवह्रियमाणस्य तु कथमसौ भोगो भवेत् । उपचारे हि न उपचार्यस्य स्वात्मनि विशेषः कश्चित्, अपितु उपचरितुरेव तथाभूतबुद्धिशब्दविशेषप्रतिलम्भात्मा व्यवहारः, अन्यथा अनन्तप्रमातृभेदेन युगपदुपचर्यमाणाग्निजलादिविरुद्धभावभेदितवपुर्माणवकोऽपि अनन्तविरुद्धरूपतामेकत्रापि क्षणे प्रतिपद्येत । तदेतत् परिहरति **'अहंकारव्यवहार्यात्मना'** इति । केन एतदुक्तं—चिद्रूपताधिकः कश्चित् पुरुषस्य भोग इति । बुद्धिबोधं हि यदात्मनि अविशिष्टतया अहंकारो व्यवहरति, स एव अयं भोगः । चित्प्रतिबिम्बयोगिनि विषयप्रतिबिम्बवति च बुद्धितत्त्वे **'अहमिदं जानामि'** इति चेतनाचेतनप्रतिबिम्बद्वयमेलनाव्यवहारकारिणा अहंकारतत्त्वेन योऽभिमानो जनितः, स एव बुद्धितत्त्वात् तद्वृत्त्यध्यवसायगोचरीकृततद्बुद्धिप्रतिबिम्बचित्तत्त्वेन सह एकाश्रयतालक्षणं संयोगं भजमानश्चित्तत्त्वस्य चित्प्रतिबिम्बादनध्यवसितभेदत्वेन भोग इति उच्यते । काणादादिदर्शनेऽपि हि ज्ञानात्मको गुण आत्मनोऽन्यः । कथं तस्य भोगः । समवायादिति चेत्, संबन्धमात्रं तर्हि भोगरूपतायां कारणमिति उक्तं भवति । इहापि च दर्शितः संबन्धश्चित्तत्त्वादनध्यवसितभेदस्य चित्प्रतिबिम्बस्य विषयप्रतिबिम्बेन सह अहंकारमेलितस्य तयैव बुद्ध्या अध्यवसितस्य एकबुद्ध्याश्रयत्वलक्षणसंयोग इति संसर्गमात्रप्रभावितोऽयं भोगव्यवहारः सर्वत्र ।

संसर्गश्च प्राप्तिलक्षणः संयोगोऽस्तु समवायो वा अभिमानेन वादान्तरेण। यदि वा तथाभूतस्य संयोगस्य पूर्वपूर्वप्रलयमहाप्रलयेषु अपि प्राथम्यं न अवधार्यते इति अनादिः संयोगो भवन् समवायात् न विशिष्यते। बुद्धितत्त्वस्य च सर्वोऽयं धर्मः। धर्मधर्मिणोश्च यः संबन्धः, स संयोग इति वा तादात्म्यमिति वा समवाय इति वा उच्यताम्। वस्तुनि लब्धे हि संज्ञासु क्रियासु च कोऽभिनिवेशस्तत्त्वचिन्ताकारणम्। यस्मिन्नेव च बुद्धिप्रदेशे चित्तत्त्वप्रतिबिम्बयोगात् चिदविशिष्टता, तत्रैव नीलप्रतिम्बयोग इति आधाराधेयभावापृथक्सिद्धिभ्यां समवायतापि उच्यताम्। को विरोधः। सर्वथा तावत् सर्वदर्शनेषु संसर्गकृत एव अयं भोगव्यवहारः। यदाह

'.....परोपाधौ सर्वा धीर्व्यावहारिकी।
अयथार्था.......................॥'

इति। तदेतत् सर्वमनवक्लृप्तिद्योतकेन वाशब्देन आह '**संयोगात्समवायाद्वा**' इति। अहं करोमि जानामीत्येवंभूतेन रूपेण अहंकारतत्त्वस्य या वृत्तिः, तया व्यवहरणम्। भोगव्यहरणे ज्ञानाभिधानलक्षणे योग्य आत्मा स्वरूपं यस्य बुद्धिबोधस्य बुद्धिसंक्रान्तस्य विषयप्रतिबिम्बचित्प्रतिबिम्बमेलनस्य, तस्य चिद्रूपेण पुरुषेण सह यो भेदाध्यवसायाभावः प्रकाशता, येन बलेन च तावन्मात्रे मूर्च्छाकल्पे विश्रमितुमयोग्य इति अभेदाध्यवसाये पर्यवस्यन् पुरुषस्य भोग इति उच्यते; स संयोगादस्तु समवायात् वेति किमनेनेति। एतत् शेषमुनिवचनेन संवादयति। '**तथाच**' इति।

'सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः, परार्थस्वार्थसंयमात्पुरुषज्ञानम्।' ( यो० सू० ३।३५ )



इति सूत्रम्। अस्य अर्थः—सत्त्वं यत् बुद्धिशब्दवाच्यम्, यः पुरुषस्तयोर्जडचिद्रूपतया नीलमुत्पलमितिवदन्योन्यमभिन्नकक्ष्याधिशयनेन अन्योन्योपरागलक्षणं संकरमसहमानयोरपि यः प्रत्यये बौद्धेऽध्यवसाये अविशेषो भेदानध्यवसायेन अभेदाध्यवसायविश्रान्तेन व्यवह्रियमाणमैक्यं, स एव भोगः। स एव बुद्धिवर्त्यपि भवन् भोक्तरि पुरुषे चिद्रूपत्वादुचित इति परार्थ उच्यते। ननु अस्ति एवंविध एष संसर्गबलप्रभावितो भोगः, किंतु एष संसर्गोऽनादिः कथं विच्छिद्येत, येन मोक्षावकाशो भवेदित्याशङ्क्य आह '**यदा तु**' इति। प्रधानं तावदुपादानकारणं महदादिकार्यात्मना परिणमते। तत्र च अस्य जडत्वं, सुखाद्यात्मना च यत् भोग्यत्वं भोगयोग्यता, तत् सहकारिकारणम्। नच गुणानामन्योन्यं भोगयोग्यत्वमुचितं जडत्वात् भोक्तृभोग्यत्वयोरेकत्र विरुद्धत्वादिति अन्यदेव चिद्रूपत्वं प्रति भोगयोग्यत्वमुचितम्। तच्च चिद्रूपं भोगवैचित्र्योपलम्भादनेकम्। यदाह

'जन्ममरणकरणानां प्रतिनियमात्।' (१८ का०)

इति। नच अस्य भोगस्य एनमेव भोक्तारं प्रति भोग्यतेति नियमनिदानमस्ति, तत् सर्वान् प्रति तत् भोग्यम्, भोक्तृता च एषां स्वप्रतिबिम्बार्पणेन बुद्धिप्रभृतिसमस्तप्रपञ्चावभासनम्।...... सप्रपञ्चे बुद्धितत्त्वे संकीर्णोऽपि संयोगमहिम्ना चित्तत्त्वेन परमार्थतो न संकीर्णः। तत् संकीर्णता यावत् चित्प्रतिबिम्बबलात् निर्भासते, तावत् संसारः। यदा पुनरसंकीर्णता, तदा विवेकज्ञानमेतत् ज्ञानम्। न संकीर्णासंकीर्णरूपव्यतिरिक्तं दृश्यमस्ति। तच्च यस्य समुच्चीयेत। चशब्दश्च अपिशब्दार्थे। '**तथापि**' इति अभ्युपगम्यवादोऽयं न सोपपत्तिक इत्यर्थः। '**अत एव वा**' इति। सूत्रे पराशङ्काद्योतकं यत् कृतं, तेन अस्य वादस्य अभ्यु-

उपगम्यापि एतदुच्यते, ननु प्रतिबिम्बवादोऽयमुपपद्यते इति अनादरोऽपि द्योत्य इभिप्रायेण टीकाकृदस्य बुद्धिप्रतिबिम्बवादस्य अनुपपत्तिं बहुशाखां दर्शयन् '**तथापि**' इति वृत्तिग्रन्थार्थस्य आकूतं स्फुटयति '**नच**' इति। स्वच्छमपि हि अधिकस्वच्छमपेक्ष्य अस्वच्छं न अधिकस्वच्छस्य प्रतिबिम्बं स्वीकरोति सितदुगूलमिव स्फटिकमणेः। तथाच बुद्धितत्त्वं पुरुषापेक्षया। तथाहि आलोकोऽपि बुद्धिप्रकाशमपेक्ष्य अस्वच्छः, तथा सोऽपि पुरुषप्रकाशमपेक्ष्य। पुरुषप्रकाशो हि सर्वतःस्वच्छस्तस्य अनन्यापेक्षणादेव संविद्रूपत्वं यतः। यथा यथा हि स्फुटा वेद्यता, तथा तथा स्वच्छत्वाभावः। एवमधिकस्वच्छेन प्रतिबिम्बं स्वीक्रियते अस्वच्छस्येति प्रतिबिम्बस्वीकरणे यत् कारणं, तद्विरुद्धमिह अस्वच्छत्वमिति कारणविरुद्धोपलब्धिः। एवंच वदतः टीकाकारस्य अयमाशयः—सौगत एव सांख्यमतं दूषयन् मत्पक्षस्य अवकाशं दास्यति। सर्वतःस्वच्छे चिद्रूपे विश्वं प्रतिबिम्बितुमर्हतीति। सौगतस्यापिच संविदि संवेद्यं प्रतिबिम्बमर्पयति, ननु संवेद्ये संविदिति स्वपक्षसिद्धिराशये विपरिवर्तते एव। अथ परो मन्येत—न स्वच्छत्वं नाम पारिभाषिकं किंचन, यदेव च अन्यप्रतिबिम्बग्रहणसमर्थं तदेव स्वच्छं; बुद्धितत्त्वं च पुंस्प्रतिबिम्बं ग्रहीतुं समर्थमेव, तदपि किं न स्वच्छमिति। तत्र आह। '**समानधर्माण्येव**' इति। इह प्रतिबिम्बग्रहणे नियमो दृष्टः। तथाहि दर्पणे स्पर्शगुरुत्वादि न प्रतिबिम्बति, अपितु रूपसंस्थानमात्रम्। निर्मलं च अस्य विजातीयरूपैः सजातीयाभावैश्च अकलुषितं निविडसंहननं रूपमुपलब्धं यदा भवति, तदा प्रतिबिम्बयोगः, वाष्परजोरूपान्तरैस्तु विजातीयैरनिविडस्थपुटत्वादिना सजातीयाभावैः कलुषिते तस्मिन् रूपे न भवति,—इति अन्वयव्यतिरे-



काभ्यां मन्यामहे। प्रतिबिम्बार्पकापेक्षया यस्य स्वच्छताख्यो धर्मस्तत्प्रतिबिम्बात्मकगुणविशेषनिष्ठः, स एव प्रतिबिम्बं गृह्णाति। एवं स्वच्छत्वं गुणे समाने विशेषरूपतायां पर्यवसायितमिति अपृथगेव उपसंहरिष्यति '**एवं समानगुणे एव**' इति। तथाहि पार्थिवे भूमिकुट्टिमे, वज्ररत्नादिमये दर्पणे, आप्ये निस्तरङ्गजलाशये, तैजसे चक्षुर्गोलकान्तर्वर्तिदृष्टिमण्डले रूपाख्यो गुणः। तत्संनिवेशश्च संस्थानात्मा गुणोऽस्ति स्वच्छप्रायाणामपि रूपवत्त्वादिति तेषु रूपसंस्थानप्रतिबिम्बमेव उपारोहति, न अन्यत् गुरुत्वस्पर्शादि। यथोक्तं मयैव

'प्रच्छन्नकामिनी कान्तप्रतिबिम्बितसुन्दरम्।
मुकुरं कुचकुम्भाभ्यां स्पृशन्त्यपि न हृष्यति ॥' (तं०आ०३।६)

इति। व्योमावकाशे च परिच्छिन्नदीर्घवर्तुलाकारे यदादित्यतेजो न अतितीव्रं न अतिमन्दं वा चन्द्रतेजो वा, तत्र शरीरसंस्थानप्रतिबिम्बं दृश्यते च्छायापुरुषोपदेशपरिशीलनेन। लोहदर्पणादि तु तैजसमिति मन्तव्यम्, तदपि वा पार्थिवमेवेत्याभिधर्मिकाः। आकाशे च शब्दगुणे वक्तृशब्दस्य प्रतिबिम्बितं प्रतिश्रुत्कारूपम्। निर्मलेन रसान्तरग्राहिणा रसेन भूयसा समाक्रान्तं च रसनेन्द्रियं, तस्य अधिष्ठानं दन्तोदकं निर्मलरसयुक्तमिति तत्र कटुतिक्ताम्लाद्यो रसाः परेण आस्वाद्यमानाः पिप्पलीनिम्बदाडिमादिषु वर्तमानास्तदास्वादानुमानपूर्वकत्वेन प्रतिबिम्बमर्पयन्ति। स्मर्यमाणग्रहणमनुभूतत्वेऽपि तदानीमसाक्षात्क्रियमाणतामात्रमुपलक्षयति। तेन स्मर्यमाणा अनुमेयमानाः समुत्प्रेक्ष्यमाणा वा रसस्पर्शादयः प्रतिबिम्बं गृह्णन्तीति। तथाच शरीरस्य केचिदानन्दस्थानरूपा आधाराः कन्दहृदयतालुतलादयः। तेषु मिथुनोपभोगसमुचितस्पर्शस्तथैव अननुभूयमानोऽपि अनुमेयमानस्मर्यमाणोत्प्रेक्ष्यमाणा-

दिरूपः प्रतिसंक्रामति येन धातुस्यन्दसुखाद्यपि स्यात् । केचित्
तु दुःखाधारा मत्तगन्धजठरकूर्मनाडीकण्ठप्रभृतयः । तेषु परा-
नुभूयमानाः स्मरणोत्प्रेक्षादिसंनिधापिता वा कुन्ताघातशूलादि-
स्पर्शा मूर्च्छादुःखादिकारिणः । परानुभवश्च प्रतिबिम्बितस्य तस्य
स्पर्शादेर्ग्रहणं प्रति केवलं सहकारितां करोति अवधानमुद्बोधय-
मानः । तेन इदं न वाच्यम्—अनास्वाद्यमानोऽपि केनापि दाडि-
मरसो दन्तोदके किं न प्रतिबिम्बतीति यतः प्रतिबिम्बत्येव असौ,
अनवधानात्तु न लक्ष्येतापि । तथाहि—अवहितः सुकुमारोऽ-
ङ्गनाजनः परेण स्पृश्यमानमपि तीक्ष्णकण्टकाग्रं पश्यन् वेपथु-
माविशत्येव । कर्माधिपत्याच्च केषांचित् केचिदाधारा अकलुषा
इति तत्प्रतिबिम्बयोगो विचित्रो दृश्यते । गन्धक्षेत्रेऽपि तीव्र-
विरेचनादिद्रव्यगन्धः प्रतिबिम्बमर्पयत्येव येन तद्गन्धपूर्णमेव
सर्वमभिमन्यते । ननु स्वच्छेन द्रव्येण प्रतिहता नयनरश्मयः
परावृत्त्य स्वमेव मुखं गृह्णन्ति, दर्पणे मुखमिति तु भ्रान्तिरियम्;
नतु सत्यत्वभ्रान्तत्वव्यतिरेकेण अन्यो राशिः प्रतिबिम्बनामधे-
योऽस्ति तृतीयः । मैवम् । एवं हि सति मम एतन्मुखं स्पर्शव-
दित्यपि भासेत; परमुखस्वहस्तादौ च बिम्बप्रतिबिम्बद्वयं दृश्यते ।
अन्योन्यसंमुखादर्शभूयस्त्वे च बहुतरमुखग्रहणं कुतः । भ्रान्ति-
रियमिति चेत्, सैव अस्तु किं सत्यमुखग्रहणाभ्युपगमेन असं-
वेद्यमानेन । नहि शुक्तिकारजतनिर्भासे सत्यरजतनिर्भासोऽपरो-
ऽभ्युपगतः; भ्रान्तावपि च किं दर्पण एव मुखत्वेन भाति, उत स्वमुखं
परमुखत्वेन । पूर्वस्मिन् कल्पे दर्पणे न कश्चित् भासेत शुक्तिरज्जवे-
कचन्द्रादिरिव रजतसर्पद्विचन्द्रादित्वेन भासमानः । अत्र च दर्प-
णस्य न पृष्ठे, न अभ्यन्तरे, न पश्चाद्भागे मुखमस्तीति प्रतिपत्तिर्दर्प-
णस्य अविकल्पस्य निर्भासात् । यदि तु स्वमुखं परमुखत्वेन भासेत,



तदा शुक्तिं यथा रजतधिया गृह्णाति; तद्वत् स्वमुखं दर्पणे संनि-
हिते परमुखधिया गृह्णीयादिति तत्र अयमुदासीनभावमवलम्ब-
मानो भूषणविन्यासप्रसाधनादि न आद्रियेत । प्रतिफलितानां च
स्वदेहसंमुखीभूतानां रश्मीनां चाक्षुषाणां ग्रहणत्वे सशरीरेण आ-
त्मना यदि अधिष्ठानं, तदहमित्येव प्रतिपत्तिः स्यात्, नतु अन्यो-
ऽयमिति । अव्युत्पन्नस्य हि बालादेरयमित्येव एकरसा प्रतिपत्तिः ।
व्युत्पन्नस्तु इदमेव शरीरमत्र प्रतिसंक्रान्तमिति मन्यतां नाम ।
ननु अस्य बिम्बात् न भेदेन प्रतिपत्तिः, प्रतिबिम्बेन अशरीरेण
आत्मना अधिष्ठितास्ते रश्मयः परत्वेन गृह्णन्ति,—इति चेत्, न
देहस्य भोगायतनत्वं स्यात् तमन्तरेणापि बहिर्बुद्धिलक्षणभोगो-
दयात् दर्पणाभावेऽपिच तथा प्रसङ्गात् स्वशरीरे च औदासी-
न्यापत्तेर्योगिवत् च शरीरानपेक्षया संवेदनप्रसङ्गात् । जलतेजो-
भिश्च चाक्षुषाणां रश्मीनां प्रतिघातेन प्रतिफलनं, न निविडैः शि-
लातलैरिति स्वच्छन्दाभिधानम् । स्मरणोत्प्रेक्षणादिषु च अर्थाकारं
पश्यति प्रमाता । नच तत्र नेत्ररश्मीनां कोऽपि व्यापारार्थे संभ-
वो नियमो वा । नच असावबाह्य एव पारमार्थिक आकारो बाह्य-
त्वेन अभिमानादन्यदापि बाह्यापह्नवप्रसङ्गाच्च । अथास्ति संभवः—
यदाकारोऽपि असौ न मुख्यो नच भातः, तत् दर्शनप्रतिबिम्बेनापि
किमपराद्धम् । यत् तत्रापि स्वमुखग्रहणमेव सूत्रे मुनिना कचि-
दपि अनिरूपितमपि दुर्ग्रहादाक्षपादैः समर्थ्यते प्रतिश्रुत्कादौ
श्रोत्रादेर्न प्रतिफलनमिति, तत्र अवश्यं प्रतिबिम्बता समर्थयि-
तव्या । ननु तत्र मुख्यशब्दादिरूपतैव भविष्यति, दर्पणमुखादौ
तु प्रतिघातेन प्रतिबिम्बापह्नव इति परेषां नैयायिकादीना-
माशयः । तमेव प्रकटयति **'केचित् तु'** इति । प्रतिसंक्रमणेन
श्रुत् श्रवणमस्या इति प्रतिश्रुत्का । सा शब्दजा । रसोऽपि दन्तो-

दकसंबन्धी निम्बादिरसस्मरणेन निमित्तेन विकृतः **संपन्नः** कटु-तिक्ताम्लादिस्वभाव एव,स्पर्शक्षेत्रगत एव असौ स्पर्शविशेषः,गन्ध-क्षेत्रनिष्ठश्च गन्धविशेष इति । तेन यथा अन्ये शब्दादयो मुख्य-वस्तुस्वभावाः, नतु तत्प्रतिबिम्बात्मानः; तद्वत् प्रतिश्रुत्कादयो वस्तुत्वे तेषां बाधकस्य कस्यचिदपि अभावात् । रसावेशशब्देन दन्तोदके स रसो निविष्ट इति इह मन्तव्यम्, यदिवा पराभिप्रा-येण रसावेशशब्दः इति प्रतिबिम्बवाचित्वेन प्रयुक्तः । परोऽयं रसावेशं रसप्रतिबिम्बं मन्यते, स वस्तुभूत एव युक्तः । नच बाधिततद्विज्ञानग्राह्यं प्रतिबिम्बमिति युक्तं सर्वस्य तथात्वापत्तेः । ननु दर्पणेऽपि रूपसंनिवेशमात्रस्वभावे पर्वतादिवस्त्वन्तरमेव अस्तु । किं तत्रापि प्रतिबिम्बाङ्गीकरणार्धजरतीयेन । आह **‘दर्प-णादौ पुनर्’** इति । न तावत् दर्पणाक्रान्ते तावति एव आकाशदेशे हस्तिपर्वतयोरुत्पत्तिर्युक्ता तस्य आकाशदेशस्य एकेन मूर्तेन दर्पणेन आक्रान्तस्य मूर्तान्तरेण आक्रमितुमशक्यत्वात् मूर्तानां समानदेशत्वविरोधात्, समस्तनगरप्रतिबिम्बयुक्ते च दर्पणे दृश्यमाने तावतां मूर्तानां कथमेकाकाशदेशतेति शतशाखं परस्परदेशानुप्रवेशविकल्पनाप्रसङ्गः । नच दर्पणस्य पृष्ठे तदुत्प-त्तिर्दर्पणदेशस्य परिमितत्वात् दर्पणादर्शनप्रसङ्गाच्च । नच पृष्ठ-तोऽसौ दृश्यते, दृश्यते तु अभ्यन्तरे । नच तस्य दर्पणे अभग्ने अन्तःप्रवेशो युक्तः । नच अस्य भङ्गो मनागपि अवलोक्यते । दर्पणापेक्षया दूरतरदेशवर्ती इव स पर्वतादिरुपलभ्यते, नचापि अबाह्ये अणुमात्रदेशेऽपि अवलोक्यते । तदुक्तं

‘विरुद्धपरिमाणेषु वक्त्रादर्शतलादिषु ।
पर्वतादिसरूपाणां भावानां नास्ति संभवः ॥’

इति । सप्तम्या आधेयमाक्षिप्तम् । तदयमर्थः—दर्पणादौ संक्रा-



न्तस्य यत् वस्तुभूतत्वं शङ्क्यते, तत्र अयं बाध इति । **‘तावान्’** इति दर्पणपरिच्छिन्नो नभोदेशो वा दर्पणो वा तत्पृष्ठतदन्तर-तत्पश्चाद्भागादिर्वा । किंच यावत्कालकलामात्रं तद्वस्तु मुख्यमस्ति तावदेव च यो विशिष्टदेशसंबन्धोऽस्य दृश्यते, सोऽपि न उप-पद्यते । नहि स्वकारणात् विना तस्य भावस्य उत्पत्तिर्युक्ता । नच प्रसिद्धवस्तुभूतहस्तिपर्वतादिगतकारणजातीयमिह कारणमुपल-भ्यते । तावता च प्रसिद्धहस्त्यारम्भकावयवपरिमाणानां तद-वयवानां यः संबन्धः संयोगनैरन्तर्यादिः, स यस्मात् नोपप-द्यते न संभवति । तज्जातीयदेशकालकारणाभावे च कार्यमपि तज्जातीयं कथं स्यात् । उत्पन्नस्य च अवयवविभागाद्यभाव-हेतुमनारूढवत एव कथं भूतग्रस्तस्य इव एकपदे निरन्वयी विनाशः । क्षणिकवादे तस्य निरन्वयनाशितायामपि विभागस-संतत्यन्तरदर्शनप्रसङ्गः । दर्पणात् पृथग्भूतं च उत्पन्नं भूतलादि वा अन्यत्रापि संचरेत् । ततश्च यावदसौ दृश्यते, तावदस्य तेनैव देशेन दर्पणावच्छिन्नेन यः संबन्धः, स कथम् । रूपसं-निवेशौ च कामं गुरुत्वगन्धवत्त्वादिविहीनौ स्ताम्, स्पर्शर-हितौ तु न दृष्टौ । नच इह पर्वतस्य प्रतिबिम्बितस्य काठिन्य-स्पर्शः । आदिपदेन जलाग्न्यादिप्रतिबिम्बस्य शीतोष्णादिः । वस्तु-भूतेन अन्यप्रसिद्धतद्वस्तुजातीयेन भवितुं युक्तमन्यथा शश-स्यापि विषाणमरूपस्पर्शादिकं वस्तुभूतमस्ति,—इति उच्यमाने इदमेव वस्तु, नेदमिति यत् नियमवत्त्वं व्यापकं वस्तुत्वस्य उपलभ्यते, येन विना वस्तुत्वमपि वचनमात्रसारं स्यात्; तत् हीयेतेति व्यापकानुपलब्धिप्रसङ्गबलेन वस्तुत्वमन्यवस्तुतज्जाती-यत्वाभावात् विपक्षात् व्यावृत्तं साध्येन अन्यतद्वस्तुजातीयत्वेन व्याप्यते इति तदनुपलम्भे वस्तुत्वाभावसिद्धिर्व्यापकानुपलब्धे-

रिति । तत् स्थितमेतत्—प्रतिश्रुत्कादि शब्दजशब्दादिरूपमेव, न तत्र प्रतिबिम्बता काचित्; दर्पणादौ तु सा अस्तु केवलं स्वमुखमेव गृह्यमाणं भ्रान्त्या अभिमन्यते दर्पणेन गृहीतमिति केनापि कृतो विभागः । एनं विभागं दूषयति **'तत्'** इति । यदुक्तं प्रतिश्रुत्कादि वस्त्वेव, दर्पणहस्त्यादि तु अवस्तुत्वात् प्रतिबिम्बमस्तु तावदिति। एतत् विभागेन अयुक्तं न्यायस्य साम्यात् । तदेव आह **'इहापि'** इति । अपिशब्देन न्यायसाम्यमाह । इह प्रतिश्रुत्कारसावेशादिवर्गे या तावत् प्रतिश्रुत्का उक्ता, सा यदि अन्यशब्दजशब्दवत् वस्त्वेव स्यात्, सापि हस्त्यादिवदेव तच्छब्दजातीयैव भवेत् । शब्दजं च शब्दान्तरं भेरीभाङ्कारादि चरमं मन्दतमप्रायं यत्र देशे समाकर्ण्यते, तत्र न तैः प्रमातृभिराद्योऽसौ तीव्रतमः शब्द आकर्ण्यते, नापि तदाद्यशब्दाकर्णनवद्भिः सोऽन्त्यो मन्दः । एवं प्रतिश्रुत्कापि अर्वाग्व्यवस्थितैश्च यत् न श्रूयते, तत् प्रत्युत विपर्यस्येत यदि वस्तुभूता शब्दजशब्दरूपा स्यात् । अस्माकं बिम्बत्वेन प्रतिबिम्बदातृत्वेन अभिमतोऽत एव मुख्यः शब्दाकारः । परपक्षे तु आद्योऽसौ जनकरूपः शब्दः । स यैर्न श्रुतस्तद्गुहागतैः प्राणिभिः, तैः श्रूयते सा प्रतिश्रुत्केति संबन्धः । अपिशब्दो विपर्ययं सूचयति । यैस्तु अर्वाग्देशवर्तिभिः स आद्यः शब्दः श्रुतः, तैर्न श्रूयेतेत्यर्थः । एवम् **'अश्रुतबिम्बाभिमत'** इत्यादिना वस्तुभूतशब्दान्तरविजातीयत्वं तात्पर्येण उक्तम् । ननु प्रतिबिम्बतासाधने अयं हेतुर्यदश्रुतमुख्यशब्देन न श्रूयते इति । नहि प्रतिबिम्बस्य अयं नियमो यददृष्टबिम्बेन न अवलोक्यते । यथोक्तं मयैव श्रीतन्त्रालोके

> 'मुख्यग्रहं त्वपि विना प्रतिबिम्बग्रहो भवेत् ।
> पश्चाद्गतं प्रियं पश्येट्टङ्कितं मुकुरे पुरः ॥'( ३।२९ )



इति । तस्मात् वस्तुभूतशब्दजशब्दजातीयत्वानुपलब्धा प्रतिश्रुत्कापि न वस्तु । प्रसिद्धहस्त्यादिप्रतिबिम्बसालक्षण्यं च श्रीतन्त्रालोके दर्शितं

> 'नचासौ शब्दजः शब्द आगच्छत्त्वेन संश्रवात् ।
> पिठराद्युपधानांशविचित्रच्छिद्रसंगतौ ॥
> चित्रत्वाच्चास्य शब्दस्य प्रतिबिम्बं मुखादिवत् ।
> इदमन्यस्य वेद्यस्य रूपमित्यवभासते ॥
> यथादर्शे तथा केनाप्युक्तमाकर्णये त्विति ।
> नियमाद्बिम्बसांमुख्यं प्रतिबिम्बस्य यत्ततः ॥
> तन्मध्यगास्तु शृण्वन्ति प्रमातारो न दूरगाः ।
> अतः कूपाद्रिपिठराकाशे तत्प्रतिबिम्बितम् ॥
> वक्त्राकाशं सशब्दं सद्भाति तत्परवक्तृवत् ।
> यथा चादर्शपाश्चात्यभागस्थो वेत्ति नो मुखम् ॥
> तथा तथाविधाकाशपश्चात्स्थो वेत्ति न ध्वनिम् ।
> शब्दो नचानभिव्यक्तः प्रतिबिम्बति तद्ध्रुवम् ॥
> अभिव्यक्तिश्रुती तस्य समकालं द्वितीयके ।
> क्षणे तु प्रतिबिम्बत्वं श्रुतिश्च समकालके ॥
> तुल्यकालं हि नो हस्ततच्छायारूपनिश्चयः ।' ( ३।३४ )

इत्यादिना । एवं प्रतिश्रुत्कायाः प्रतिबिम्बतां साधयितुं वस्तुभूतशब्दजवैलक्षण्येन अवस्तुत्वमुपपाद्य, रसप्रतिबिम्बस्यापि तदुपपादयति **'कटुतिक्तादि'** इति । पिप्पलीनिम्बदाडिमादि तावत् तस्य कटुकप्रभृते रसस्य समवायिकारणम्, तत्संयोगसमवायबलाच्च दन्तोदके स मुख्यो दृष्टः, इह तु परेण दाडिमे चर्व्यमाणेऽन्यस्य तदुद्भवः कथं स्यात् । अथ अधिपतिप्रत्ययरूपेण परिचर्व्यमाणेनापि दाडिमरसेन दन्तोदकसंयुक्तात्मसंयुक्तसम-

वायज्ञातेयेन परदन्तोदकेऽपि तद्रसत्वाभिमानो मुख्यः, तर्हि सर्वस्य रसस्य वस्तुभूतस्य सहचरस्पर्शाव्यभिचारो दृष्ट इति पूर्वोक्ततज्जातीयतावश्यंभावापत्तेर्दन्तोदकसविधवर्तिना स्पर्शनेन दाडिमस्पर्शेऽपि शीतादिर्गृह्येत । नच एवम् । ननु

'...............विचित्रा वस्तुशक्तयः ।'

इति अधिपतिरूपेण तेन रसेन संयुक्तसमवायाभिमानोपकल्पितो रसमात्रस्यैव दन्तोदके समुत्पादः, यदि वा तत्र दन्तोदके पारमार्थिक एव उत्पादः; तत्कटुकादिरसमात्रयुक्तस्य द्रव्यान्तरस्य तत्रैव अदन्तोदके रसान्तरस्य यथा हि गुणविनियोगेन मधुर एव अप्सु रसः इति नियमो युक्त इति । एवं तर्हि वक्त्रासवपरिचर्वणप्रवृत्तोऽपि कान्तादन्तोदके तत्र स तमनुभवेत् । तत्र संक्रान्तस्य दन्तोदकान्तरव्यामिश्रीभावात् स रसस्तिरोधीयते इति चेत्, तेनैव तर्हि प्रमात्रा तादृशादपसृतेऽपि दाडिमास्वादनप्रवृत्ते पुंसि स्वकदन्तोदकस्य स्थिरत्वेन सदृशापरापरकारित्वेन वा कूपलवणोदकतुल्यवृत्तान्तत्वात् स रसः कालान्तरेऽपि अनुभूयेत। कालान्तरे नानुभूयतेऽसौ संस्कारदार्ढ्याभावात् रस इति चेत् तत्काल एव तर्हि भुज्यमानमेकरसमपि गुडौदनादि तत एव नातिरुचिकरमपि प्रतिलब्धकटुकाम्लादिविचित्ररसान्तरदन्तोदकसंमिश्रीभूतं शिखरिणीमिश्रितमिव स्वादुङ्कारं परेण भुज्येत । इतिः प्रकारे । न केवलं दर्पणादौ हस्त्यादिरूपत्वे बाधः, यावदत्र प्रतिश्रुत्कारसावेशानामपि एवंप्रकारोऽयमसाविति यस्त्वया नास्तीति समभावि, स वादोऽस्त्येवेति कथं वस्तुभूतता स्यात्, येन तत्र प्रतिबिम्बत्वमपह्नुत्य दर्पणहस्त्यादावपि परः प्रतिघातमात्रेण अपह्नुवीत प्रतिबिम्बव्यवहारमित्याशयः । ननु एवं वस्तुवैलक्षण्यादवस्तुत्वे शुक्तिरजतवत् भ्रान्तता भविष्यति, तथापि का प्रति-



बिम्बतेत्याशङ्क्य आह 'अत एव च' इति । न अनेन बाध उपजीव्यते । एवं हि भ्रान्तित्वाभावे साध्ये बाधसंभवो विरुद्धो हेतुः स्यात् । तस्मात् पूर्वोक्ते ग्रन्थे यत् वैलक्षण्यं गम्यमानत्वेन स्थितं, तदुपजीव्यते । ततश्च अयमर्थः—यथा प्रसिद्धवस्तुसाजात्याभावात् न वस्तुत्वम्, तथा प्रसिद्धभ्रान्तिसाजात्याभावात् न भ्रान्तित्वम् । तदेव दर्शयति **'तस्यां हि'** इत्यादिना **'अत एव'** इत्यनेन वा । निराचिकीर्षितस्य भ्रान्तित्वस्य परेण शङ्क्यमानतायां पूर्वोक्तो बाधो हेतुत्वेन उपजीव्यते । सहेतुकस्य भ्रान्तित्वस्य नेति निराकरणं क्रियते । निराकरणे च हेतुः **'तस्यां हि'** इत्यादिना उच्यते । चकार आशङ्कां द्योतयति । अत एव बाधयोगात् हेतोरेषा दर्पणहस्त्यादिरसावेशादिरूपा भ्रान्तिर्भविष्यति, न प्रतिबिम्बमित्यपि यत् परेण शङ्क्यते, तदपि न । हि यस्मात् भ्रान्तावारोप्यमाणमेव प्रतिभासते; नतु वस्तुतत्त्वस्य नामापि स्फुरति । संस्थानं हि रूपधर्ममात्रम् । रूपतिरोधौ तदपि न किंचित् । वस्तुधर्मत्वेऽपि वा संस्थानस्य समस्तधर्मपूर्णं वस्तु इत्यभ्युपगमे मनागपि वैपरीत्ये वस्त्वन्तरमेव निर्भातं भवेत्, नतु तत् । इह तु ओदनादिरसोऽसंमिश्रो विकारलेशेनापि युक्तो भाति, किंतु स एव भाति, भात्येव सः । यदिच दन्तोदकं तत्कटुकादिरसयुक्तं भ्रान्त्या भासेत, तत्संमिश्रत्वादोदनरसोऽपि विचित्र एव निर्भासेत । पीतशङ्खे प्रतिभाते हि न शुक्लशङ्खवान् वासुदेवकरः प्रतिभाति । तस्मात् यथा न दर्पणस्य पृष्ठे वा अन्तर्वा पश्चाद्वा बाह्ये वा अन्यत्र वा हस्ती कश्चिदस्ति, भाति च तदीयस्वच्छतामहिम्ना; तथा रसादिरपि न दन्तोदकादेरिति प्रतिबिम्बतैव अस्या युक्ता । तत्संभवे च न प्रतिघातिनेत्ररश्मिप्रतिगृहीतस्वमुखादिग्रहणमसंवेद्यमानं

युक्तं कल्पयितुमिति उपसंहरति तस्मात् शब्दो नभसि, स्पर्शः कचिदाधारचक्रे, रूपं दर्पणादौ, रसो दन्तोदके, गन्धस्तत्क्षेत्रे चित्तोपारूढमिति यथायोग्यं स्मरणानुभवोत्प्रेक्षाद्यभिव्यक्तं प्रतिबिम्बरूपतया भाति । भासनसारतैव हि प्रतिबिम्बतेति हि कथमव्यापृततद्विषयचेतस्कस्य प्रतिबिम्बसत्ताव्यवहारः । एतदुक्तं भवति यदि कश्चित् ब्रूयात्—ननु यथा निर्मलो दर्पणश्चेत्, तदवश्यं संनिहितमत्र प्रतिबिम्बतामेति, तथैव दन्तोदकादिषु रसादिप्रतिबिम्बानि स्युः, नच तथा नित्यमवभासन्ते इति; स वाच्यः—इह अवभासनसारमेव प्रतिबिम्बतत्त्वम् । यथोक्तं श्रीतन्त्रालोके

> 'न देशो नो रूपं नच समययोगो न परिमा
> नचान्योन्यासङ्गो नच तदपहानिर्न घनता ।
> नचावस्तुत्वं स्यान्नच किमपि सारं निजमिति
> ध्रुवं मोहः शाम्येदिति निरदिशद्दर्पणविधिः ॥' (३।२३)

इति । अवभासनं च तत्तद्विषयग्राहकेन्द्रियानुग्राहकान्तःकरणाधिष्ठानायत्तम् । तथाहि दर्पणे संनिहितेऽन्तःकरणव्यापारप्रयुक्तनेत्रव्यापारव्यपोहने को मुखप्रतिबिम्बव्यवहारः । को हि वेद अन्धतमसे मुखं संक्रान्तं रत्ने । एवं दन्तोदके रसक्षेत्रे रसनेन्द्रियाधिष्ठानभूते प्रतिबिम्बितो रसस्तत्सविधवर्तिरसनेन्द्रियप्रेरणमन्तःकरणकृतमन्तरेण कथं भासेत । नच अन्यप्रमात्रिन्द्रियगोचरीकार्यं तत्प्रतिबिम्बार्पणस्थानं दर्पणवत्, चक्षुर्गोलवत् वा, येन अस्य स्वयमग्रहेण प्रमात्रन्तरेन्द्रियव्यापारात् निर्भासनं भवेत् । किंतु अन्तर्देहवृत्तित्वात् दन्तोदकादे रसादिक्षेत्रस्य न परप्रमातृगोचरता शङ्क्या । नच अन्तःकरणप्रेरितस्वेन्द्रियव्यापारमन्तरेण तन्निर्भासनं युक्तम् । निर्भासनसारमेव



प्रतिबिम्बमिति न कश्चित् चोद्यावकाशः । **'असंमुखीनानाम्'** इति अव्यापृतचक्षुषामिति । लक्षणया अयमर्थः—संमुखमस्मिन् दृश्यते इति संमुखीन आदर्शः; सच पौनरुक्त्यासंगतिबाधित इति, तेन नैर्मल्यं स्वविषयग्रहणक्षमत्वं लक्षयता व्यापृतेन्द्रियत्वमुक्तं भवति । अन्ये तु दर्शन इति कर्तृसाधनमपि, नतु अधिकरणसाधनमेवेति मन्यन्ते । एवं स्वपक्षमुपसंहृत्य परपक्षायोगमपि उपसंहरति **'मुख्य'** इति । यदि स मुख्यः शब्दः स्यात्, उच्चारयितृदेशगृहदेशान्तरालव्यतिरिक्तदेशवृत्तिभिर्गह्वरोदरगतैः प्रमातृभिः स शब्दः श्रूयेत; तद्देशैरपि घण्टानुनादस्य इव श्रवणे तीव्रमन्दादिविशेषस्य उपलम्भो भवेत् । नच एतदस्ति । रसोऽपि परिचुम्बनावस्थायामन्येन गृह्येत गन्धोऽपि तद्देशवर्तित्वादन्यैः प्रमातृभिः । स्पर्शोऽपि परकीयहस्तस्पर्शादिगम्यो भवेत्,—इति प्रसिद्धतज्जातीयवस्त्वन्तरविषये यावतां प्रमातृभावः, तावतामत्रापि स्यात्,—इत्येवंतात्पर्येण सर्वे शब्दरसगन्धस्पर्शाश्च यथायोगं वातपित्तादिप्रकोपप्रशमस्वकार्यकारिणो भवेयुः । शब्दोऽपि तद्गृहावर्ती जातोऽत्रुटितप्राथम्योचिततीव्रतमभावस्तीव्रतरादिमन्दतमान्तशब्दपञ्चकारम्भकः स्यादिति गुहायाः परतरमपि श्रूयेत । तस्मादस्ति प्रतिबिम्बलक्षणस्तृतीयराशिः । तस्य च समानगुणे स्वच्छे च निर्भासनं दृष्टमिति स्वच्छत्वसमानगुणत्वलक्षणं कारणं प्रतिबिम्बस्वीकरणे वस्तूनामिति सिद्धम् । तद्विरुद्धं च बुद्धेरात्मापेक्षया असमानगुणत्वम्, अस्वच्छत्वं च कारणविरुद्धमुपलभ्यमानमात्मप्रतिबिम्बग्राहित्वस्य स्वविरुद्धकार्यस्य निषेधं करोति । एतदुपसंहरति **'एवं समानगुण एव'** इति । स्वच्छत्वं गुणनिष्ठमेवेति **'पूर्वं समानधर्मण्येव च'** इत्यत्र उक्तमिति पृथगिह न उक्तम् । अतिदूर-

वैलक्षण्यं धियस्त्रैगुण्यात्मकत्वेन भोग्यत्वादात्मनश्च नैर्गुण्येन भोक्तृत्वादिति का समानगुणत्वे संभावनापीति भावः। ननु सौत्रान्तिकाः संविदि नीलादिप्रतिबिम्बमुपयन्ति, नच सा तैः समानगुणा। तद्वासनायोगादनादिप्रवृत्तात् समानगुणत्वं बुद्धावपि भविष्यतीत्याशङ्क्य आह **'प्रतिबिम्बेऽपिवा'** इति। एवं वदन्नपि इदं तावत् सांख्यः प्रष्टव्यः—विषयस्य व्यवस्थापनं दर्शनपरामर्शनात्मकं यदुच्यते, तत् मुख्यामजडरूपां किं भोक्त्रीं चितिशक्तिमपेक्षते, तां विना न भवतीति। ओमिति चेत्, पुरुष एव तर्हि दर्शनपरामर्शनस्वभावोऽभ्युपगन्तव्यः, किमनुपपद्यमानासंवेद्यमानबुद्धिप्रतिबिम्बितचितिशक्तिवादेन। अथ बुद्धिगतेन चित्प्रतिबिम्बेन तत् निर्वहति, तत् तर्हि जडमेव न चिद्रूपमिति बुद्धिरेव तादृशा तुर्येण गुणेन युक्ता कल्प्यताम्, या विषयं व्यवस्थापयिष्यतीत्यलं पुरुषकल्पनया। यदाह देवलाचार्यः

'पुंसि कर्तृत्वमारोप्य बुद्धावपि चिदात्मताम्।'

इति। अथ मुख्यचैतन्यमेव प्रतिबिम्बीभूतं तथा करोतीति उच्यते; तदयुक्तमन्यत्र प्रतिबिम्बे तददृष्टेः। नहि दर्पणप्रतिबिम्बितो वह्निस्तमेव दर्पणमपि तावत् तापयेत्, किमङ्ग इन्धनं दग्धुं प्रभवेत्। उक्तं च

'तज्जातीयेन प्रसिद्धान्यतज्जातीयरूपेणैव भवितुं युक्तम्।'

इतीति बुद्धिपुरुषद्वयकल्पनमकिंचित्करमेव। तदाह **'प्रतिबिम्बेऽपिवा'** इत्यादि। अपिशब्देन अभ्युपगमं दर्शयति, वाशब्देन समानगुणत्वमेव प्रतिबिम्बे कारणमिति। एतत् न आद्रियामहे अपीति अनादरम्। **'तत्र'** इति बुद्धौ। **'तस्याः'** इति पुंस्प्रतिबिम्बवत्या अपि बुद्धेः। एतच्च यद्यपि पूर्वमुक्तम् **'एवंच बुद्धेर्जडत्वे'** इत्यादिना, तथापि दूषणान्तरावकाशाय उक्तम्। तत एव बहुशाखमप्रसिद्धान्तान्तरमपि समुच्चयेन आह **'बुद्धेश्च'** इति। स्वकारणे प्रधाने चित्प्रतिबिम्बस्य चिद्रूपस्य वा न प्रातिस्विकस्य संभवः। तत्रापिच आत्मकृतत्वे अयमेव दोषः, बुद्धिपरिकल्पनावैयर्थ्यं च अधिकम्। कारणेन च संभवद्रूपं न कार्ये समाधीयते इति तदात्म कार्यं प्राप्तमिति आत्मा कारणं भवेदिति

'......न प्रकृतिर्न विकृतिः पुरुषः।' ( सां० का० ३ )

इति त्यक्तं भवेत्। **'तत्र'** इति आत्मनि। ततश्च आत्मन एव प्रथमो विकारो बुद्धिरिति प्रधानकल्पनं व्यर्थं स्यात्। ननु यथा घटे मृत्पिण्ड एव उपादानकारणं, दण्डचक्रदेशकालकुम्भकारादि केवलं तदुपादानकारणसंपादितं, तत एव शेषशब्दवाच्यं विशेषमात्रं विदधत् सहकारि; तद्वदात्मा शेषानुग्रहकारित्वमात्रात् सहकारी स्यात्, न उपादानम्। उपादाने च कार्यमस्ति, न सहकारिषु अनन्तकार्योदयप्रसङ्गादिति परमतमाशङ्क्य आह **'सत्कार्यवादिना'** इति। यदि तावदुपादानासंभविनि विशेषांशेऽपि न व्याप्रियन्ते सहकारिणः, तदलमेतैः; अथ तं जनयन्ति, तदसन्तमेव चेत्, उपादानस्यापि पापात् कुतः शापोऽयम्—यदन्तः कार्यभागोऽस्य अध्यस्यते

'असदकरणात्' ( सां० का० ९ )

इत्यादेर्न्यायस्य तुल्यत्वात्। तस्मात् सामग्रीरूपकारणान्तर्वर्ती कार्यस्वभावोऽभ्युपगन्तव्यः सत्कार्यवादिना धर्मसंचयरूपः, ननु एककोपादानकारणान्तर्वर्ती सहकारिणामनुपयोगप्रसङ्गात्। ननु कानिचित् सहकारीणि उपादानरूपमाविशन्त्येव कारणतां प्रतिपद्यन्ते। जलभूम्योः परिणामिको हि रस ऊष्मणा वेगवता कालप्रभावितेन बीजान्तर्वर्तितामेव उपयाति तावता विचित्रस्य अङ्कु-

रस्य स्वरूपलाभात्, अन्यानि तु धर्माधर्मपुरुषार्थप्रभृतीनि
अभिव्यक्तिमात्रे व्याप्रियन्ते । तेषु का कार्यशेषान्तर्गमनचिन्ता ।
यद्येवं, अभिव्यक्तिर्न कार्यशेष इति तत्र व्याप्रियमाणानामेषां दी-
पचक्षुरादीनामिव कथंकारं कारणतापरिगणनं भवेत् । कार्यशेषः
सेति चेत्, तर्हि असती सैव । एनां तानि यथा उत्थापयन्ति,
तथा उपादानमपि मुख्यकार्यमुत्थापयेत्,—इत्यलं कचित्सत्कार्य-
वादव्यवसनेन । तदाह **'अभ्युपेया'** इति । इणोऽर्हार्थे यत् ।
**'ततः'** इति कार्यशेषकृतादाधिक्यादात्मनि चिन्मात्रता कथं
स्यात् । ननु तावद्रूपत्वमात्मनो भविष्यति, किं हि दुष्यति ता-
वता, किं वा पुष्यति चिन्मात्रतयेत्यत आह **'कैवल्यावस्थायां
च'** इति । अभ्युपेतचिन्मात्रतात्याग एव तावदपसिद्धान्तः, स
तु अपसिद्धान्तान्तरमपि आनयतीति चशब्दः । तथाहि—कैव-
ल्यदशायां न चित्प्रतिबिम्बं बुद्धावुदेतीति तदा पुरुषोऽकारणस्व-
भावः, ततः प्रतिबिम्बात्मककार्यशेषवियुक्तः पूर्वं तद्युक्त इति
योगविभागौ भावाभावत्वेन विरुद्धौ । ततश्च विरुद्धधर्मयोगादैक्यं
कूटस्थं न स्यात् पुंसः । प्रधानस्यापि हि अकौटस्थ्ये इदमेव नि-
मित्तं, न अन्यत् । ननु कैवल्यावस्थायामपि अस्य योग्यत्वम-
निवृत्तम्, तदेव च कार्यशेषान्तर्गमनं प्रधानस्य इव महाप्रलये
इत्याशङ्क्य मध्ये प्रमेयान्तरं हेत्वन्तरेण उपक्षिपति **'नहि'** इति ।
**'अनन्तरम्'** इति कदाचिदपीति आशयः । घटेऽपि पटयोग्यता
भवेत्, पुरुषेऽपिवा महदादिजननयोग्यता,—इति कारणत्वं यो-
ग्यतारूपं नियमवत्त्वेन व्यापकेन कार्यपूर्वभावितविरहात् विप-
क्षादपसारितं कार्यपूर्वभावित्वेन व्याप्यते, तच्च इह न उपलभ्यते,
—इति व्यापकानुपलब्धिः । न कैवल्ये पुमान् प्रतिबिम्बकारणं
कार्यापूर्वभावित्वात् । कार्यपूर्वभावित्वस्य च व्यापकं कार्यपश्चा-



द्भावः । तद्विरुद्धस्तदभावः कार्यपूर्वभावित्वं निषेधति । न कैवल्ये
कार्यपूर्वभावी पुरुषः कदाचिदपि कार्यपश्चाद्भावाभावादिति व्या-
पकविरुद्धोपलब्धिः, कदाचिदपि कार्यपश्चाद्भावसंभावनायां तु
कैवल्यं नास्तीत्येव उक्तं स्यादिति आशयशेषः । यदिवा चिन्मा-
त्रताहानिरित्यत्र अयमाशयशेषः—यत् तत् चिन्मात्रात् भोक्तृ-
रूपात् प्रकाशादधिकं, तत् कथं भोक्तुः स्वरूपं भवेत् । विरुद्ध-
धर्मापत्तेर्हि पुंसोऽनतिव्यामिश्रं रूपम्,—इति उक्तं परिणामित्वं
व्यपोहितुम् । अथ चिदचिद्रूपं च एकं चेत्यपि भवति, तदा पुं-
स्प्रभृतिविवेकसमर्थनं व्यर्थमिति । एवं कार्यशेषान्तर्भावेन पुंसि
दूषणमुक्त्वा अभ्युपगम्यवादेन दूषणान्तरमाह **'कैवल्याव-
स्थायां च'** इति । मा भूद्वा तत्र कार्यशेषान्तर्भावः, तथापि
कारणाकारणतारूपविरुद्धधर्मापत्तेः परिणामित्वमपरिहार्यमिति ।
ननु चिद्रूपतातिरेकेण आत्मनो न कारणताख्यं रूपान्तरमस्ति

'......न प्रकृतिर्न विकृतिः पुरुषः ।' ( सां० का० ३ )

इतिवचसा सप्तविधकर्तृत्वनिषेधाभिधानात्

'पुरुषार्थ एव हेतुः............ ।' ( सां० का० ३१ )

इत्यनेन तु प्रधानस्य विश्वत्र उपादानकारणस्य सुखाद्या-
त्मकत्वेन यत् भोग्यताख्यं दृश्यत्वं नाम रूपं, तदेव निमित्त-
कारणत्वेन उक्तम् । तत्तु स्वात्मापेक्षं न उपपद्यते भोग्यस्य भोक्तृ-
रूपविरोधादिति चिद्रूपमजडं भोक्तारं पुरुषं प्रति इति संपद्य-
मानं विशेषाभावात् सर्वपुरुषान् प्रतीति व्यवस्थाप्यते, ननु
पुरुषः कदाचिदपि किंचित् करोति,—इति परकीयं मतमनुभाष्य
दूषयति **'बुद्धिसद्भावेऽपि'** इति **'न तत्संनिधाने'** इति
निमित्तत्वं सप्तम्यर्थं नेति प्रतिषेधति । एतदुक्तं भवति—बन्ध-
मोक्षव्यवस्थासिद्धये यदुक्तं

'कृतार्थं तं प्रति नष्टमप्यनष्टं साधारणत्वात्'

इति, तत्र तं पुरुषं प्रतीति कर्मप्रवचनीयविभक्तिव्यङ्ग्यो यः संबन्धः, स चेत् न वास्तवः, तर्हि न किंचिदुक्तं स्यात् । वास्तवत्वे संनिधानस्य निमित्तकारणतायामुच्यमानायां कथमकारणस्वभावता पुंसः सिध्येत् कारणस्वभावत्वे सदातने मोक्षायोगः, कदाचिदकारणस्वभावत्वे विधर्मधर्मयोगात् कूटस्थताहानिरिति । **'एवं नचात्यन्तशुद्धम्'** इत्यादिना **'न तत्संनिधाने तदुद्भवः स्यात्'** इत्यन्तेन टीकाग्रन्थेन सूत्रोक्तमनादरास्पदत्वं वृत्तौ तथापीत्यर्थेन **'तथाच'** इत्यनेन अभ्युपगम्यवादाभिधायिना कृतवृत्तिकं परपक्षानुपपत्त्या बहुशाखया प्रदर्शितया स्फुटीकृताभिप्रायत्वेन विवृतम् । अधुना **'तस्याश्चित्स्वरूपता स्यात्'** इतिवृत्तिपरिजिहीर्षितोऽपि विरुद्धधर्माध्यासो बलादेति,—इत्येवं भङ्ग्यन्तरेण व्याचष्टे **'आत्मा'** इति । एवंच अत्र विकल्प्यम्—अयं चित्स्वभाव आत्मा, इयं च चिच्छायाधारिणी धीरिति किमिदमनुभवबलात् व्यवस्थाप्यते, कस्यचिदर्थस्य अन्यथानुपपत्त्या वा । तत् प्रथमं कल्पं दूषयति **'आत्मप्रतिबिम्बयोगात्'** इति । **'यथानुभवम्'** इति अनुभवानुसारेण अनुभवयोग्यम् । अनुभवे च एकमेव सुखाद्यात्मकं स्वप्रकाशतया चैतन्यरूपं तत्त्वं वस्तुभूतमवतिष्ठते अनुभवरूपाबाधितप्रमाणबलेन स्थैर्यमवलम्बते । चोऽप्यर्थे । आत्मानं चैतन्यप्रतिबिम्बार्पकं, तत्कृतं बुद्धौ प्रतिबिम्बमपि अङ्गीकृत्य । एतदुक्तं भवति—आत्मच्छायाकृतेऽपि चैतन्ये चिद्रूपे स्वयं च सुखाद्यात्मकत्वेन साताकारमेकं बुद्धिसंज्ञकं तत्त्वमङ्गीकृतं विरुद्धधर्माभ्युपगमभीरुभिरपि पारमर्षैः । ततश्च प्रतिभासबलात् तदेव ग्राहकरूपं भविष्यति । इह अहं जानामीति हि सर्वस्य अबा-



धिता प्रतिपत्तिः । तत्र इदमंशो बाह्येऽपि आभाति सर्वप्रमातृसाधारणरूपः क्रयविक्रयादौ, अन्तस्तत्प्रतिबिम्बितोऽपि असाधारणो मनोराज्यसंकल्पादौ विकल्पे च । तत्र युक्तं तद्विषयार्पितं दृश्यप्रतिबिम्बं बुद्धाविति, अहमिति तु यदिदं बुद्धौ स्वरूपं प्रकाशते च अध्यवसीयते च, तदेव सुखाद्यनुवेधेन भाति । यदाह **'इदमेव च नः सुखं यत् सातं संवेदनम्'** इति । अहमिति तु रूपमन्यत्र न कुत्रचिदनुभूतं येन तदर्पितं बुद्धितत्त्वे स्यात् । नचापि पुरुषस्य तद्रूपमिष्यतेऽहङ्कारवृत्तित्वेन अस्य इष्टत्वात् । अहमिति इदमिति च मुक्त्वा तत्त्वान्तरस्य न कस्यचिदनुभवः । किंच आत्मानं बुद्धितत्त्वं न पश्यति येन जानीयात्—एतदीया इयं मे चैतन्यच्छायेति । नच अन्योऽनयोस्तृतीयो द्रष्टा अस्ति यस्तथा अध्यवस्य व्यवहरेदुपचरेद्वा । नच सुखादिरूपस्य चैतन्येन विरोधः सुखादेः स्वप्रकाशस्वभावत्वेन निर्भासनात् स्वप्रकाशत्वस्यैव च चैतन्यरूपत्वात् । केवलं सुखादिरूपशून्यमपि विषयग्रहणमात्ररूपं संवेदनमुपलभ्यते,—इति अमुया भङ्ग्या चित्तरूपविशेषकत्वमभिधातुमभिधर्मादौ सुखादयश्चेत्या इति व्यवह्रियन्ते संवेदनमात्रं तु चित्तमिति, तत्र अनुभवबलेन पुरुषकृता चिच्छायेति व्यवतिष्ठते । ननु बुद्धिपुरुषयोः परस्परसंसर्गादियं भ्रान्तिः सुखमेव च स्वप्रकाशमिति । उक्तमन्यत्र

'संसर्गादविभागश्चेदयोगोलकवह्निवत् ।
भेदाभेदव्यवस्थेयमुत्सन्ना सर्ववस्तुषु ॥'

इति । कस्य च इयं भ्रान्तिः । न बुद्धेः पुरुषमपश्यन्त्याः । नच तृतीयः संसृष्टतद्द्वितयग्राही कश्चिदस्तीत्युक्तम् **'एकमेव'** इति, नतु बुद्धिपुरुषद्वयरूपम्, नापि संसर्गकृतभ्रान्तैकरूपमिदमित्य-

नुभवगोचरापत्त्या । नच ज्ञेयं संविद्रूपस्वप्रकाशमिदमित्यस्य अ-र्थस्य वा संविद्रूपं तत एव च विषयभेदात् सुखदुःखादिना अ-नेकेन आकारेण चैत्तरूपेण अनधिकेनापि अधिकेन इव विशे-षेण वर्तमानत्वाच्च प्रतिक्षणभिन्नं संतानवृत्त्या प्रवहत् पश्यामः । सर्वेषां प्रमातॄणां तदतिरिक्ते नास्त्यनुभव इति एकपदेन ब्रह्मविव-र्तवादोऽपि न अन्यः सिद्ध इति ध्वनति । एवं प्रथमस्तावत् कल्पो न युक्तः, द्वितीयोऽपि न उपपन्न इत्याह **'तावन्मात्र एव'** इति । मात्रग्रहणेन स्वप्रकाशत्वविषयग्राहित्वसातादिरू-पत्वादि यावदस्य व्यावृत्तिभेदोपकल्पितं रूपं भाति, तेन न अस्य भेदः कश्चिदिति दर्शयति । एवकारेण अधिकं निषेधति । अर्थभोगस्य इदमहं जानामीति अनपह्नवनीयस्य परिपूर्णेन रूपेण सम्यक्तया अभ्रान्ततया आप्तिः संपत्तिर्यतः, तस्मादर्थभोगरू-पायाः संवित्तेः संबन्धी संसर्गसमवायादिना वर्तमानः कश्चि-दात्मा अस्तीति कस्य अर्थस्य अन्यथानुपपत्त्या कल्प्येत । एवमि-यता वृत्तिगतम् **'अनुपपत्तेः'** इतिपदं व्याख्यातम् । **'एवम्'** इति सूत्रद्वयोक्ताभिर्युक्तिभिः यः प्रसङ्ग उक्तः, तद्विपर्ययेण अनित्यरूपस्य अन्यानाश्रितस्य ज्ञानस्य सिद्धेरित्यर्थः । **'एवं ज्ञानक्रियायोगात्'** इत्यत्र हेतौ ज्ञानभागं विचार्य तदनु-लग्नत्वेनैव क्रिया विवेच्या हेतुभङ्गायेति शिक्षयितुं **'सदपि'** इतिवृत्तावपिशब्द उत्तरकारिकावकाशदानार्थः । अपिशब्दो हि कामकाररूपे सत्त्वे तावदन्ववसर्गं द्योतयन्नन्यस्य तु सत्त्वमपि न अधिगन्तुं शक्यमिति प्रकटयति । तथाच टीकाकार एवमेव विवरीष्यति **'क्रिया तु'** इत्यादिना **'अपिशब्द'** इत्यन्तेन । अत एव उत्तरकारिकार्थो वृत्तिकृता संक्षेपेण इहैव व्याख्यातः । **'यथा'** इति येन न्यायप्रकारेण आर्य एवमाह, स इयता



ग्रन्थेन निर्णीत इति यावत् । **'तत्र'** इति **'प्रत्यक्षे'** इति अनपह्नवनीयप्रकाशे विषयोपलम्भे अर्थभोगात्मनि निमित्ततया स्थिते । समाप्तः सम्यगाप्तः सिद्धः स्वात्मनि तथाप्रकाशा-नुरूपविकल्पनलक्षणः, परत्र तथाप्रकाशसंक्रमणकारिप्रतिपाद-नलक्षणः प्रख्योपाख्याशब्दवाच्यस्तत्पूर्वकश्च प्रवृत्तिप्राप्त्यर्थक्रि-यालक्षणो व्यवहारः प्रमातृप्रमेयाणां बहुशाखपरस्परप्राप्तिरूप इत्यतो हेतोश्चैतन्यं चितिशक्तिमात्रं पुरुषलक्षणं धर्मान्तरप्रतिक्षे-पप्राणेन भावप्रत्ययान्तेन अभिधानयोग्यं यदुच्यते तदपार्थकं निष्प्रयोजनं, न अनेन विना किञ्चित् प्रयोजनं सिद्ध्यति यद-न्यथानुपपत्त्या तत् कल्प्येतेत्यर्थः । तदयं प्रयोगः—अर्थ-संवेदनमध्ये न आत्मा विकल्पनीयोऽनुभवान्यथानुपपत्त्यन्यत-रानुपलब्धेरिति कारणानुपलब्धिः । अधिको हि महानसे पिठरा-दिभ्योऽग्निः, पर्वते च तरुशिलादिभ्योऽनुभवेन धूमान्यथानुप-पत्त्या वा कल्प्यते इति तत्कारणिका कल्पना अकारणकत्वस्य अन्यकारणकत्वस्य वा कल्पना उपरिदृश्यमाननियमायोगादिति । ननु एवमनुभवानुसारेण व्यवस्थायां नीलं सुखं, पीतं दुःख-मित्येतावन्मात्रं प्रकाशमानमङ्गीकर्तव्यम्; अहमिति तु विकल्प-मात्रं, नतु अत्र अधिकं चकास्ति । नीलं हि प्रकाशते, न नीलप्रकाशः कश्चित्, तज्ज्ञानेऽपि कः पक्षपातः, येन करुणा-यमान इव **'सदपि'** इति तदभ्युपगमं परः कुर्यादित्याशङ्क्य आह **'ज्ञानस्य असत्तायाम्'** इति । भवतैव हि उक्तं नीलं प्रकाशते इति । तदत्र प्रकाशते इति यो भागः, स नीलशरीरप-रमार्थ एव चेत् यथा नीलं सर्वप्रमातॄन् प्रति भवति न भवति वा, तथा सोऽपि स्यात् । तदेतदाह **'नहि'** इत्यादिना । **'रूपव-त्स्यात्'** इति । भवनं, न भवनं वा समानं मन्तव्यम् ।

'**तत्**' इति निपातस्तस्मादित्यर्थे वर्तमानः स्यादितिप्रसङ्गसूचितस्य स्वविपर्ययरूपस्य परिदृश्यमानत्वेन अवश्याङ्गीकार्यस्य हेतुतामाह । यतो ज्ञातत्वं न सर्वप्रमातॄन् प्रति, नापि न सर्वप्रमातॄन् प्रति अपितु कंचिदेव प्रमातारं प्रति, ततो हेतोर्ज्ञानमेव, नतु विषयस्वरूपं, ज्ञाततेत्यर्थः । ननु एवं भवतु ज्ञानम्, प्रत्यक्षं तु कुतः । विषयगतप्रकटतात्मकफलानुमेयमनाश्रितस्वप्रकाशसंविदात्मकफलानुमेयं वा तदित्याहुः । अज्ञातेऽर्थे न कश्चित् बुद्धिमुपलभते, ज्ञाते तु अनुमानादवगच्छतीति । तथा

'नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपकल्प्यते ॥'

इति । तेन न स्वरूपमात्रं नीलस्य ज्ञातता, येन सर्वप्रमातॄन् प्रतीति चोद्येत; अपितु तत्प्रकटता तत्संवित्तिर्वा ज्ञातता, तज्जनकं तु भावनारूपं क्रियात्मकं ज्ञानं तदनुमेयं, नतु ज्ञानमेव ज्ञाततेत्याशङ्क्य आह '**अत एव**' इति । अनेनैव अधिकरणसिद्धान्ततामाह

'यत्सिद्धावन्यप्रकरणसिद्धिः सः ।' (न्या० सू० १।१।३०)

इति । अत्र हि हेतुर्यच्छब्देन निर्दिष्टः, स इत्यत्र तु उपचारात् तद्धेतुकस्तद्धेतुसाध्योऽर्थ उक्त इति प्रतिज्ञार्थत्वाविरोधः, हेतुरपि वा प्रमाणमूलाभ्युपगमरूपत्वात् सिद्धान्ततां न जहाति, यदिवा यत्साध्यसिद्धावित्यत्र साध्यतयैव हेतुराकृष्ट इति विशिष्टहेतुक एव साध्यस्तथेति लभ्यम् । अत एव हेतोः सर्वप्रमातॄन्नित्युक्तात् ज्ञानमेव ज्ञातता, नतु प्रकटता संवित्तिर्वा ज्ञाततेति यत् वस्तु ततो हेतोस्तज्ज्ञानं प्रत्यक्षं स्वसंवेदनसिद्धमभ्युपगन्तव्यम् । '**यदा**' इति यदित्यस्य अर्थे '**तदा**' इति तत इत्यस्य अर्थे इति यत् वस्तु विशिष्टहेतुसिद्धं, ततो हेतोः प्रत्यक्ष-



त्वमिति; यस्मादर्थे तु व्याख्यायमाने यस्मादेवमिति यत् वस्तु, तस्य न हेतुत्वमुक्तं भवेत्, अपितु एवमिति विमृष्टे योऽन्यः कश्चित् हेतुः, तस्य प्रकृते साध्ये हेतुत्वमुक्तं स्यात् । धूमवान् यतस्तस्मादग्निमानिति हि आञ्जसी एव एषां प्रतीतिर्येन हेतुना धूमवानयं संपादितः, अथवा ज्ञातः सोऽग्निमत्त्वे हेतुरिति । नच एतत् विवक्षितम्, अपितु धूमवत्त्वस्यैव हेतुत्वमग्निमत्त्वेऽभिधित्सितम् । तच्च अञ्जसा न अतो वाक्यात् प्रतीयते । तेन विवक्षितेऽर्थे एवं स्पष्टा वाचोयुक्तिर्धूमवान् यत्, तस्मात् अग्निमानिति । अनुवदनकाले हि स्वरूपमात्रमस्य परामृष्टव्यम्, ननु हेतुभावः । स हि पश्चात् तच्छब्दपरामृश्यतायां विधेयः । तेन एवंविधेषु स्थानेषु इत्थं गमनिका विधेया—धूमवानित्यत्र इतिशब्दार्थगर्भीकारेण शब्दस्वरूपं वा ज्ञानं वा अवतिष्ठते, धूमवानिति यस्मात् भवति शब्दज्ञानात्मा व्यवहारो धूमवत्त्वलक्षणादर्थात्, ततो हेतोरग्निमानिति । यदिवा यतो हेतोर्बोधरूपात् धूमवानयं सिद्धः, स धूमवत्त्वावबोधोऽग्निमत्त्वे हेतुरिति अनुवादभागे पञ्चमी हेतुविषयं बोधमाक्षिपन्ती हेतोरज्ञातस्य न हेतुत्वमिति ज्ञापयति । एतदेव न युक्तम् । तथाहि अनूद्यमानताकाले न हेतुवाचकात् शब्दात् पञ्चमी प्रयुज्यते यस्मात् धूमवत्त्वादिति, अपितु यतो धूमवत्त्वमिति प्रथमैव; तदेवं यस्मादिति बोधः उक्तः । एतेन अभिप्रायेण चिरन्तनैर्हेतोरनुवादयोगेऽपि पञ्चमी प्रयुक्ता

'यतो हि पूर्वानुभवसंस्कारात्.............।' (२।५)

इत्यादौ, अद्यतनैस्तु प्रसिद्धिमात्रमुपजीवद्भिरभिन्ननारिकेलनिगरणवत् वस्तुतत्त्वमलभमानैर्व्यवह्रियते । यदेति वा यस्यां कालकलायामयमर्थोऽस्ति, तस्यामयमप्यस्तीत्युक्तौ हेतुहेतुमत्तावगतिः

सामर्थ्यात् लभ्यते । अनूद्यमानस्य पूर्वसिद्धत्वेन यदेति हेतुत्वं यु-
ज्यते, तदेति विधीयमानस्य अपूर्वत्वेन साध्यत्वात् हेतुमत्त्वमिति
अलं बहुना । ज्ञानमेव ज्ञाततेत्ययमर्थो विशिष्टेन हेतुना यतः
सिद्धः सर्वप्रमातॄन् प्रतीत्यनेन, ततो हेतोः प्रत्यक्षत्वं ज्ञानस्य सि-
द्ध्यति । यदि तु अन्यतो हेतोर्ज्ञानमेव ज्ञाततेति असाधयिष्याम,
तत्पक्षे तु अस्य हेतुता न भवेत्,—इति विशिष्टहेतुकस्य सतो
हेतोर्हेतुत्वम्, न पुनः

'उपादायापि ये हेया················ ।' (वा०प० २।३७)

इति नयेन । पूर्वहेतुसिद्धेऽर्थे हेतूचिकीर्षिते स पूर्वहेतुस्त्यज्यत
एव । यथा धूमवत्त्वादयमग्निमान्, यस्माच्च धूमवत्त्वादग्निमान्,
तस्मात् शिरोऽर्तिसंतापजनकः—इत्यत्र पूर्वहेतुरयमुपजीव्यते;
तथा अत्रापीति एतदभिधातुमुक्तम् **'अत एव यदा ज्ञानमेव
ज्ञातता तदा'** इति । अयमत्र तात्पर्यार्थः—इह प्रकटता नाम
यदि अर्थस्य क्रियते, तदा सा किं रूपवदर्थधर्मो भवन्ती स्वात्मनि
ज्ञानमपेक्षते, न वा । पूर्वस्मिन् कल्पेऽनवस्था—तस्यामपि हि
ज्ञानकृतं प्रकटतान्तरं वक्तव्यम्, तत्रापि अन्यदिति प्रकटतां
जानन् न अप्रक्षीणेषु ज्ञानेषु अविरमत्सु न अर्थः प्रकटो युगसह-
स्रैरपि भवेत् । अथ सा प्रकटता अर्थस्य चेत् जाता, प्रकटोऽसा-
वर्थो जातः; किमन्यत् प्रार्थ्यते । तत्रापि अर्थस्य यदस्तु, तदस्तु;
मम प्रकटो मैत्रस्य प्रकट इति तु यो नियतप्रमातृसंबन्धस्तत्संमुख-
प्रवर्तनप्रभृतिव्यवहारमात्रपरंपरारूपार्थक्रियानिवहनियमनिबन्ध-
नभूतः, स कथंकारं प्रकटतायाः । जन्यजनकताया इति चेत्,
कुम्भकारक्रियया कुम्भः समुद्भवन् तस्यैव तथा स्यात् । को हि
विशेषः, यत् कुम्भो न तज्जनकस्वप्रकटता तु तस्य । ततश्च कुम्भ-
तायां प्रतिबिम्बार्थक्रिया तत्कृता एव स्यात् प्रकटतायामिव । यत्



भावगतं रूपं, तत् सर्वसाधारण्येन अर्थक्रियायै पटगतमिव
शुक्लत्वम्, तथाच प्रकटतेति । भावनिष्ठं हि रूपं यदि तथा न
भवेत्, बाह्यता अस्य व्यापिका हीयेतेति विपक्षादसाधारण्येन
अर्थक्रियाकारित्वात् व्यापकानुपलब्धिप्रसङ्गेन व्यावर्तितो हेतुः
साध्येन व्याप्यते इति स्वभावः । ननु द्वित्वं यस्य अपेक्षाबुद्ध्या
जनितं, न तदन्यसाधारण्येन अर्थक्रियाकारि,—इति अनेकान्तः ।
असिद्धेरेकोऽनेकान्तः । नहि सौगतस्य विकल्परूपादृते द्वित्वं किं-
चित् भावगतं रूपमस्ति । यस्यापि तत् तथा, तस्यापि न असा-
धारण्येन अर्थक्रिया ततो द्व्यणुकगतस्य अणुत्वस्य सर्वसाधारण-
स्यैव द्वित्वादुत्पत्तेः प्राचुर्येण च न द्वित्वमर्थक्रियाकारि, अपितु
तज्ज्ञानम् । नच तत् बाह्यं भावनिष्ठं रूपम् । अथ तज्ज्ञान-
मपि सर्वस्य कस्मात् न स्यादिति उच्यते, तदत्रापि तेन न न
उच्यते । इह यथा द्वित्वमपेक्षाबुद्ध्या जायते; तथा तत्सामान्य-
ज्ञानम्, ततो द्वित्वगुणज्ञानम्, ततो द्वे द्रव्ये इति द्रव्यज्ञानमि-
ति । अन्यस्य तत् नास्ति तस्या एव अभावात् । अपेक्षाबुद्धिर्द्वि-
त्वजातज्ञानजन्मनि कस्मात् कारणमिति चेत्, रूपज्ञानजन्मनि
किमालोकः कारणमिति पर्यनुयोज्यम् । यथादर्शनं हि कार्यका-
रणव्यवस्थेति आस्ताम् । अथ उच्यते कुम्भो ज्ञातः सन् साधारण्येन
अर्थक्रियाकारी, नतु प्रकटतायां ज्ञानमस्ति; तर्हि न कस्यचित्
सा अर्थक्रियायै भवेत् । अथ द्वित्ववदेव तत्र न सर्वस्य ज्ञानं
भविष्यति, तर्हि प्रकटतायां प्रकटतेति अनवस्थेति उक्तम् । प्रमा-
तृरूपात्मानाश्रितसंविद्रूपफलानुमेयज्ञानवादिनोऽपि समानमेतत्
मम संविदिति व्यवहारासिद्धेः । अथ प्राकट्यसंविदन्तरमन्तरे-
णापि तथा, तत् सर्वप्रमातॄन् प्रति स्यात् विशेषाभावात् । तयोः
संवित्तिप्रकटतयोर्ज्ञानमेव प्रमातृविश्रान्तं प्रकटतेति चेत्, भावेन

किमपराद्धमित्याशयेन **'ज्ञानमेव'** इति एवकारः। स्मरणे अतीतानागतानुमानादौ च अर्थ एव असन् यथा इङ्गितनिमिषितादीन् धर्मानात्मनि न सहते, तथा प्रकटतामपि अनुपाख्यः कथं सहेत,–इति न असावर्थस्य कस्यचित् धर्म इत्यपि एवकारार्थः। तत् सिद्धं ज्ञानमेव प्रकटता ज्ञातताया एव हेतूचिकीर्षिताया अनुमित्सितज्ञानरूपत्वादिति। **'तदुपाधिः'** इति ज्ञातोपाधिर्हि ज्ञात उच्यते। अन्यथा सदैव सर्वान् प्रति च किं न ज्ञातः स्यात्। यदुक्तं **'विनिश्चये जितं जडैः'** इत्युपहस्य **'ज्ञानं च नाम बुद्धिसाधनं प्रत्येति, नच बुद्धिम्'** इति **'श्लाघनीयप्रज'** इति, **'ननु व्यक्तिबुद्धिरेषा'** इति च। ननु यदिदमियता स्वप्रकाशरूपं ज्ञानं सिद्धं, स एव आत्मा भविष्यतीत्याशङ्क्य आह **'तस्य च'** इति। **'ज्ञेयोपाधिः'** इति ज्ञेयकृतो देशभेदो विभुत्वाशङ्काशमननिदानभूतः–इह घट इति; कालभेदः–अधुना घट इति नित्यत्वव्यामोहव्यपोहनहेतुर्भात्येव। यदपि सुखादिज्ञानं, तदपि एकसामग्र्यधीनतानित्यसंबद्धदेहावच्छेदकृतो देशकालभेदो भात्येव; सुप्तादौ तदैव तदेव। नापि औत्तरकालिकजाग्रद्विकल्पव्यवहार्यो देशकालभेदः स्मर्यत एव स्तिमिततायामपि व्युत्थानचित्तप्रभवस्मृतिविकल्पव्यवहार्ये इति ज्ञानानि एव च देशकालस्वभावभिन्नानि व्यापकानि नित्यानि एकात्मकानि संतत्या प्रवहन्ति वहन्ति लोकयात्राम्। तदाह **'न अन्यस्य'** इति **'संबन्धि'** इति तादात्म्यसमवायादिनेत्यर्थः। **'अन्यस्य'** इति वृत्तिं विवृणोति पाठपूर्वकम् **'आत्माख्यस्य'** इति **'वस्तुनः'** इति संतानस्य संबन्धित्वेन उच्यतां नाम मम ज्ञानमिति व्यवहारस्य दर्शनादिति आकूतम्। वृत्तिं तु व्याख्यानभङ्गोऽपि मा भूत्, मा



च भूत् पुनरुक्तमित्यभिप्रायेण टीकाकारः संक्षिप्य विवृणोति **'वक्ष्यमाणनयेन'** इति ॥ ८ ॥

**क्रियाप्यर्थस्य कायादेस्तत्तद्देशादिजातता।**
**नान्याऽदृष्टेर्न साप्येका क्रमिकैकस्य चोचिता ॥ ९ ॥**

संक्षेपेण कारिकार्थमाह **'क्रिया'** इति। **'अदृष्टेः'** इत्यस्य प्रमाणेन अनुपलब्धेरित्ययमर्थ इति दर्शयति **'प्रत्यक्ष'** इति अवसायपर्यन्तः प्रमाणव्यापार इति दृष्टिरवसायपर्यवसायिनी सूत्रे व्याख्येया, येन अनुमानमपि संग्रहीष्यते इत्यवसेयशब्दः स्वरूपेण अन्यसंबन्धितया चेति प्रमाणानवसेयत्वे युक्तिबाधितत्वे च उभयत्रापि संबन्धनीयम्। युक्त्या प्रमाणव्यापारेण बाधितत्वं स्वरूपत उक्तम् **'न साप्येका क्रमिका'** इति, अन्यसंबन्धितया तु उक्तम् **'एकस्य क्रमिका कथं भवेत्'** इति। आत्मन ऐश्वर्यं ज्ञानक्रियायोगादित्येवंरूपपरोदीर्यमाणहेतुदूषण–प्रकटनलब्धं यत् पुनः सूत्रद्वये प्रसङ्गापादनाभिधायिनि प्रसङ्गविपर्यये विश्रान्त्या तस्मात् ज्ञानं न युक्तमिति ज्ञानस्य अयुक्तत्वं, तत् क्रियायामिह सूत्रे वृत्तौ च अपिशब्देन समुच्चीयते,—इत्याशयेन विवृणोति **'न केवलम्'** इति। अनेन च **'क्रियापि न युक्ता'** इति वृत्तिर्व्याख्याता। पूर्वसूत्रवृत्तौ **'सदपि'** इति अपिशब्दस्य अर्थो व्याख्यातः, एतत्सूत्रगतस्य तु अयमर्थः इत्याह **'अत्रापि'** इत्यपिशब्देन टीकाकारः। एवं च वदन् सूत्रवृत्त्योरेकग्रन्थतां स्फुटयति। **'तत्र'** इति न युक्तेति वक्तव्ये सतीत्यर्थः; यदिवा तत्रेति आत्मनि क्रिया। सा तावत् लौकिकी चलनरूपा कर्मपदार्थत्वेन पदार्थविद्भिरुपगता न भवति आत्मनो मूर्तिहीनस्य मूर्त्यनुविधायिनी सा नोपगता यतः। तर्हि अत्मनो ज्ञानचिकीर्षायत्नयोगे एव कर्तृत्वं प्रसाधितं, ज्ञानादयश्च

गुणाश्च तत्समवायश्च न क्रियेति तादृशी क्रिया वक्तव्या, या आत्मनः संभाव्यते । 'तदाह' इति लक्षणम् । कारकस्य फलसिद्धिहेतुभूतक्रियानिमित्तस्य स्वक्रियापेक्षया वा कर्तुः संबन्धी तत्समवायी तदात्मा वा व्यापारो रूपं स्वं लक्षणं यस्याः, सा क्रिया यस्याः संबन्धिनो भागाः पूर्वापरीभूताः क्रमवृत्तयः इति यावत्। यदाह तत्रभवान्

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्तत्क्रियेति प्रतीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥
श्वेतं श्वेतत इत्येतच्छ्वेतत्वेन प्रकाशिते ।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते ॥
कार्यकारकभावेन ध्वनतीत्याश्रितक्रमः ।
ध्वनिः क्रमनिवृत्तौ तु ध्वनिरित्येव कथ्यते ॥'

इति । एवंभूता च क्रिया आत्मनोऽस्त्येव इच्छति जानाति यतते इति पूर्वापरीभूततत्तद्धर्मप्रतीतेरङ्गीकृता च ईश्वरात्मवादिभिः । यथाहुः श्रीग्रन्थकारगुरुपादाः

'तदेच्छा तावती ज्ञानं तावत् तावत्क्रिया हि सा । (१।३)

इति,

'एवं न जातुचित्तस्य वियोगस्त्रितयात्मना ।
शक्त्या...... ॥' (१।६)

इति,

'घटादिग्रहकाले तु घटं जानाति सा क्रिया ।' (१।२४)

इत्यादि च । एतत् लक्षणं परिशोधयितुं व्यर्थं व्याचष्टे 'स्वात्मना' इति । जानातीत्यस्यां क्रियायां ये भागा अभिसंधानदीपालोकादिढौकनमनोऽवधाननेत्रोन्मीलनाद्याः, ते स्वरूपेण केवलं सन्तः, नतु पूर्वे, नापि अपरे पूर्वापेक्षत्वादपरत्वस्य तदपेक्षणाच्च पूर्वत्वस्य, ते अपूर्वापरे सन्तः पूर्वापरीभूता अवयवाः परस्परापेक्षणेन यस्यां सा तथा । ननु किमनेन अपेक्षाजन्मना रूपेण लक्षणेन निरूपितेन स्वरूपमात्रेणैव ते क्रियेति उच्यतामित्याशङ्क्य आह '**अपेक्षमाणानामेव च**' इति, अन्यथा हि आश्रितक्रमत्वं यत् क्रियायाः प्राणितं, तदेव न स्यात् । यत् तत्रभवान्

'यथाच भागाः पचतेरुदकासेचनादयः ।
उदकासेचनादीनां ज्ञेया भागास्तथापरे ॥
यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते ।
तत्रैकस्मिन्क्रियाशब्दः केवले न प्रयुज्यते ॥'

इति । चकारः प्रकृतप्रमेयोपयोगित्वेन प्रमेयान्तरं समुच्चिन्वन्नाशङ्कां सूचयतीति तत्प्रशान्तये फलतो हेतुतां तस्य प्रमेयस्य अवद्योतयति,—इत्यनया भङ्ग्या उद्घोष्यते '**चो हेत्वर्थः**' इति । यथा चैत्राय भोजनं देयम्, परमश्च अयमौदरिक इति वृहत्कं भोजनं देयं कस्मादित्येवं प्रमेयं चकार आक्षिपतीत्यादौ, एवमन्यत्रापि अवधेयम् । ननु अवयूयन्ते एकावयव्यात्मनि मिश्रीक्रियन्ते युतता वापृथक्ता येषां च अवयूयते, ते यस्य अवयवाः संबन्धिनः, सोऽवयवी । नच असावात्मनो धर्मो युक्त इत्याशङ्क्य आह '**क्रमिकत्वात्**' इति । असंभावनादृढीकरणतात्पर्येण अयं हेतुः, नतु अक्रमिकत्वादेव अवयविन आरम्भो भवति रूपरसगन्धाद्यैः समानकालैरपि तस्य अनारम्भात् क्रमिकाश्च अत्र कालभिन्ना देशभिन्नास्तु आरम्भकाः खलु तन्तवोऽवयव्यारम्भणदृष्टशक्तयोऽपि न आरभन्ते, किं पुनरदृष्टसामर्थ्याः क्रियाक्षणा इति तात्पर्यम् । '**भागः**' इति

सूक्ष्मांशः, तत्र अवयवशब्द उपचारात् पृथक्त्वायोगाद्वा । ननु देशक्रमयोगिनामपि गजाश्वादिधवखदिरादिवस्तूनां सेनावनाद्येकप्रतीतिबलसिद्धः समुदायो दृष्टः, तद्वत् क्रमिकाणामपि क्रियाक्षणानां स्यात् । ततश्च एवं लक्षयितव्यम्—पूर्वापरीभूतावयवसमुदायः क्रियेत्याशङ्क्य आह '**एककालत्वाभावात्**' इति । ननु एवं लक्षणे बहुव्रीहेराश्रयणमयुक्तमवयविनः संचयस्य वा अन्यपदार्थस्य अलाभात् । तत इयत् वक्तव्यम्—पूर्वापरीभूता अवयवा एव क्रिया—इत्याशङ्क्य आह '**नापि**' इति । अनेन हि उक्तेन भागा एव प्रतीयन्ते, तथाच भेद एव उद्भूतः स्यात् । भेदे च स्वात्मविश्रान्तिरेव परमार्थः । तद्विरुद्धा च परापेक्षा परनिष्ठत्वस्य तया उन्मीलनात्, अतो भेदोद्भवे पूर्वापरीभावानुपपत्तिरिति अभेदस्पर्शोऽपि आश्रयणीयः । ननु भिन्नस्य कथमभेदस्पर्शो भिन्नेन क्षणान्तरेण स्यादित्याह '**अतः**' इति । यतो भिन्नस्य स्वात्मपर्यवसितस्य अपेक्षा परनिष्ठात्मा न युक्ता, तया च विना न पूर्वापरीभावलक्षणः क्रमः, तन्मयी चेयं क्रिया लोके निर्भासते; अतो हेतोर्बुद्ध्या विकल्परूपया तत्र एकत्वमभेदलक्षणं क्षणानामध्यवसेयम् । यथोक्तं

'बुद्ध्या प्रकल्पिताभेदः···············।'

इति । ननु स्वतन्त्रा बुद्धिश्चेदेवं कुर्यात्, कः प्रतिनियमः इति आशङ्क्य उक्तम् '**एककारक**' इति । न स्वातन्त्र्येण अयमेकताध्यवसायः, अपितु एककर्तृलक्षणकारकस्वरूपाविनिर्भागबलादेकफलात्मककर्मकारकस्वरूपसमाश्रयाच्च । कारकशब्दः कर्तरि कर्मणि च विवक्षितः । ननु पूर्वापरीभूतभागरूपाश्च सेनादयो देशभेदात् समुदायरूपाश्च परस्परसंबन्धात्, तद्वत् क्रियाक्षणा अपि भविष्यन्ति, तत् किमत्र बुद्ध्यवसायेनेत्याशङ्क्य आह



'**सेनादीनां तु**' इति । तुर्व्यतिरेके । '**युगपत्सत्त्वात्**' इति एककालत्वादिति यावत् । ननु न युगपत्सत्त्वमात्रेण समूहप्रतिपत्तिः पिशाचसमूह इति प्रत्ययाभावादित्याह '**दर्शनाच्च**' इति प्रमाणेन यौगपद्यस्य परिच्छेदादित्यर्थः । आगमादेरवगतौ हि पिशाचेष्वपि दृष्टा समूहप्रतीतिः । ननु कोऽसावैक्यदृष्टेर्विषय इत्याह '**तथाहि**' इति । केचित् मांसास्थिमेदोमज्जाद्यवयवान्तरजातिभेदेऽपि पार्थिवतैक्यात् यथा शरीरस्य अवयविता तथा गृहादेरपि,—इति मन्यन्ते । येऽपि एवं न मन्यन्ते, तेऽपि संयुक्तसंयोगं वा पृथग्भूतधर्मपदार्थसद्भावदृशा समुदायलक्षणं वा एकं गजादीनां धर्मं प्रतिजानते,—इति एकोऽपिशब्दः, न केवलमवयवी, वस्तुतस्तत्समुदायोऽपीति द्वितीयः । '**संबन्धोऽपि**' इति सामान्यरूपा हि संबन्धरूपता सर्वत्र संयुक्तसंयोगसमवायादौ, सामान्याभावे च विशेषवृक्षाभाव इव शिंशपायां का संभावनापीति । '**द्विष्ठत्वात्**' इति द्विष्ठेऽपीति यावत् । द्वयोरेव तावत् क्षणयोरेककालत्वं न घटते; का कथा बहूनाम् । नच एकक्षणे क्रियात्वम् । यथोक्तं

'यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते ।
तत्रैकस्मिन् क्रियाशब्दः केवले न प्रयुज्यते ॥'

इति । तेन पूर्वापरभागा एव सतत्त्वं पारमार्थिकरूपसाकल्यं बाह्यं यस्या इति वक्तुमेव बहुव्रीह्यर्थसमाश्रयणनीत्या लक्षणं भाष्यकारीयमाह वृत्तिकारः । एककारकस्वरूपाश्रयात् बुद्ध्यवसितमन्योन्यापेक्षत्वमुक्तम् । तदस्तु, एकत्वं तु कुतः, येन वृत्तावुक्तं '**न का**' इति । अत्र आह '**तथापिच**' इति । पूर्वापरभागमात्रपरमार्थताप्रकारेण उपलक्षिताया अपि अस्याः क्रियाया एकत्वमेका इयं क्रिया इति बुद्ध्या । '**तथा**' इति एकत्वेन

अध्यवसायात्। नच निर्मूलोऽयमेकताध्यवसाय इत्याह 'एक-
कारक' इति। ननु एककारकनिर्वर्त्या न काचन क्रिया
अन्ततः कर्तृकरणाधाराणामवश्यंभावादिति आशङ्क्य आह 'अ-
नेककारक' इति। कर्तृकर्मणोरेव स्वातन्त्र्येण फलत्वेन च
प्राधान्यात् कर्तृस्थकर्मस्थताव्यवहारः। वैयाकरणनिकाये यत्र
विशेषः क्रियातः, क्रियाया वा यतः; तत्स्थेति क्रिया व्यपदि-
श्यते। सर्वस्याश्च कर्तृगतविशेषत्वेऽपि कस्याश्चित् कर्माश्रयवि-
शेषत्वादसाधारणेन कर्मस्थत्वेन व्यपदेशः, शब्दवृत्तिमहिम्ना
वा तत्स्थतानिश्चय इत्येवं कर्तरि एकत्र यतः क्रिया कर्मणि वा,
तत्र एका। चैत्राय रोचते मोदक इत्यत्रापि चैत्रस्य मोदकः
प्रीणयिता अभिलाषयिता चैत्रः प्रीण्यमानोऽभिलाषवान् कर्मेति
वस्तुतः कर्मस्थतैव, केवलं शब्दशक्तिस्वभावात् रुचिरन्तः स्ववि-
षयमभिलाषमस्य उत्थापयति,—इत्येतमर्थमाचक्षाणो विषयविष-
यिभावं संबन्धमभिधया उद्भूतं पुरस्कृत्य तत्कर्तृकमभिलाषं प्रधा-
नत्वेन दर्शयति, आत्मीयं च कर्तारमप्रधानमिव करोति ततो निजं
प्रयोजकव्यापारं गुणीकरोति,—इति संबन्धे सविषयेयं संप्रदान-
संज्ञा जायते, संबन्धसंबन्ध्यपि चैत्रोऽभिलाषे कर्ता,—इति कर्तृ-
स्थतापि। तदुच्यते—'**अन्यकर्तृकोऽभिलाषो रुचिः**'।
ननु एवं पचनपठनयोस्तथा च्छिदिदृश्योरेककर्तृककर्मगतत्वे स्या-
दैक्यं भारोद्यमनस्य वनच्छेदनस्य न ऐक्यमनेककर्तृकर्मगतत्वा-
दित्याशङ्क्य आह '**एकफलोद्देशेन च**' इति। नच पाकपाठ-
कयोरेकफलत्वं च्छिदिदृश्योर्वा अभिसंहितं, तत्र तदभिसंधाने
तु स्यादैक्यं विश्ववर्तिनोऽपि क्रियालक्षणसमूहस्य। यथोच्यते
'जगदिदं विपरिवर्तते' इति। एवं कर्तृकर्मैक्यमपि समूहाभिप्रा-
येण भारोद्यमनवनच्छेदनादौ सुवचमेव। ननु प्रधानमर्थक्रिया-



यामर्थ्यमानं विशेषणसंबद्धं प्रतीयते। प्रधानं च द्रव्यम्। अयं
गौरेकः शुक्लश्चलतीति हि प्रतिपत्तिः। तत्र शुक्लत्वचलत्व-
योर्यथा न अन्योन्यं संबन्धः, तथा चलत्वैकत्वयोरपि,—इति
क्रियायाः कथमेकत्वसंख्या। यत्तु द्वौ पाकावित्यादि उच्यते,
तत्र विकल्पमहिम्ना पाकोऽसौ द्रव्यीभावित एव, न क्रियात्मा।
यथाह 'कृदभिहितो भावो द्रव्यवत्।' इति तथा 'भावमाख्याते-
नाचष्टे।' इति। आख्याते तु द्वित्वबहुत्वसंख्या कर्तृकर्मगतैव
निर्भासते, नतु परविश्रान्तिनियतक्रियाविशेषणभावेनेति कथमु-
क्तम् '**एका**' इति वृत्तिकारेणेत्याशङ्कानुवादपूर्वकमाह '**संख्या-
याश्च**' इति। एकशब्देन न अत्र संख्या उच्यते, अपितु भेदा-
भावमात्रमभिन्नलक्षणमिति। ननु एवंभूता चेत् क्रिया, तत् चलति
चैत्र इति चैत्रमतिरिच्य सा कस्मात् न भायादित्याह '**अयुता**'
इति। समवायाद्वा तादात्म्याद्वा न इयं द्रव्यात् भेदेन प्रतीयते इति
यावत्। अयुतसिद्धत्वेन तादात्म्यनिर्भासनिदानमुपलक्षितम्। यत्
किल युतसिद्ध्या द्वयोरेकस्य वा पृथग्गमनयोग्यत्वमित्येवंरूपया
युक्तं, तदतादात्म्येन भाति घटपटवत् घटाकाशवच्चेति। ननु शुक्लो
गच्छतीत्यत्र शुक्लगुणोऽपि गच्छन् निर्भासते तद्देशे पुनस्तस्य अनु-
पलम्भात्। तथैव चैत्रः पचति, मैत्रः पचतीति क्रिये अपि द्वे
भात एव। तत् कथमुक्तं द्रव्यधर्म एव संख्या,—इत्याशङ्क्य आह
'**अत एव**' इति कारकस्वरूपावष्टम्भेन प्रतीयमानत्वात्। एका-
र्थसमवायकृतोऽयमध्यारोपः। तत एव निमित्तदार्ढ्यात् न प्रमा-
तुरनुसन्धिमपेक्षते गौर्वाहीक इतिवत्, किंतु स्वरसत एव
भवति शुक्तिरजतवत्। तेन एतदभिप्रायेण वृत्तावेकशब्दः संख्या-
वचनोऽपि अस्तु,—इति भावः। ननु तथाभूतलक्षणभेदयोगि-

कारकद्रव्यं कथमेकम् । आह 'ऐक्यप्रत्यभिज्ञानात्' इति । स एव अयं चैत्र इति हि अबाधितं सर्वस्य ज्ञानम् । तर्हि भवतु एवं द्रव्यमेकम्, किंतु क्रिया तत्र अस्ति, सा च पूर्वापरीभूतरूपा क्रमवती पाकपाठादिभिन्नेति कुतः । आह 'तस्य च' इति । चोऽप्यर्थे भिन्नक्रमः, स्वस्थान एव वा उक्ताशङ्कासूचनाय । कारकद्रव्यस्य प्रत्यभिज्ञापनादैक्येऽपि तथाभूतं प्रत्यभिज्ञानसिद्धैक्यं कारकसंनिधौ च उत्पद्यमानं तन्मात्रसत्त्वेऽपि पूर्वमभूतं तत्तदिति ओदनग्रन्थसांमुख्यप्रभृति विशिष्टं फलं क्रमेण आर्द्रतोष्णताविघटनविक्लेदरूपेण आकर्णनावधारणेषत्सांमुख्यसोढत्वादिरूपेण च उपलभ्यते यतः, तस्मात् तत्र एकस्मिन् कारकेऽनुलग्नः कश्चिदर्थो यो द्रव्याश्रितः क्रमिकः स्वरूपभिन्नश्च, सोऽनुमीयते इति संभाव्योऽयमर्थः । यदि हि क्रिया न स्यात्, द्रव्यमेव स्यात्; तस्य फलजनकत्वे पूर्वमपि फलं स्यात्, अन्यथात्वे पश्चादपि न स्यात् । यदि च ततोऽन्यदेव किञ्चित् जनकं, तर्हि तत् न अपेक्ष्यते । तस्मात् तदेव जनकम् । धर्मान्तरयोगी तु धर्मोऽपि यदि क्रमवान् न भवेत्, तदद्भुतफुल्लमिव फलमक्रममेव उपलभ्येत । यदि च पाकपाठयोर्न भेदः स्यात्; फलस्य न भेदो घटेत । तस्मात् कारकातिरिक्तं कारकाश्रितं क्रमिकं भिन्नलक्षणं वस्तु अस्ति,—इति अनुमीयते, तदेव क्रिया । अपिशब्देन अर्थापत्तिरपि अत्र कैश्चिदुक्ता,—इति दर्शयन् मीमांसकोपगतां भावनाख्यामपि क्रियां वृत्तिकृददीदृशत्,—इति सूचयति । कारकस्य भावकस्य पुरुषस्य भावनीयस्वर्गादिनिष्ठो यज्यादिधात्वर्थकरणको यः प्रत्ययेन आख्यातेन वाच्यो व्यापारो जननात्मा एकप्रत्ययवाच्येन कर्तृकर्मान्यतरेण कारकेण संबन्धादुपचरिततत्संख्याव्यवहारो भावनात्मा करोत्यर्थः, सैव सर्वत्र क्रिया । तेन अर्थ



प्रकटतात्मकफलान्यथानुपपत्त्या तन्निष्ठो य आत्मनो व्यापारः स ज्ञानक्रिया,—इत्यपि मीमांसकसंमतज्ञानदर्शनमपि काणादसांख्यज्ञानदृशि निराकृतायां भङ्ग्या टीकाकारो बौद्धमतेन निराचिकीर्षति । तथाच संबन्धबाधकसूत्रं वक्ष्यति । अतोऽपि कर्तृतानुपपत्तेर्ज्ञानक्रियाकर्तृरूपा ज्ञातृता सुतरां नोपपन्नेति । एतच्च तत्रैव व्याख्यास्यामः । एतत्परमतमाभाष्य दूषयति 'एवम्' इति । 'एका कथं क्रमिका' इति सूत्रं स्फुटयितुं वृत्तौ क्रमिकत्वं व्याचष्टे । अनेककालस्पृक्तं हि क्रमिकता । एकश्च तत्कालोऽतत्कालश्चेति कथं भवेत्, तदतदौ वा कालावेकं कथं स्यादिति स्वरूपतस्तावदैक्यं क्रियायां बाधितम् । वृत्तौ कालभेदेनैव देशभेदाभावेऽपि सर्वत्र क्रमिकतायां व्यापकेन स्वरूपभेदमभिदधता देशभेदः स्वरूपभेदश्च स्वीकृत एव, टीकायां तु स्पष्टीकरणार्थं संभवन्नभ्युच्चयहेतुत्वेन दर्शितः 'तावत्' इति । यत्र साधकं प्रमाणं परेण संभावितद्रढिम उक्तम्, तत्र तन्निराक्रियायै प्रथमं प्रयत्यते; इह तु न तथा । तथा प्रमाणपरिनिश्चिते स्वरूपे न स्वरूपविमतिर्युक्ता, नीले इव; इह तु तद्वादिनामेव बहुशाखा असौ । यत् तत्रभवान्

'जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्यैवोपलभ्यते ॥
अन्ते या वा क्रियाभागे जातिः सैव क्रिया स्मृता ।
स्वव्यापारविशिष्टानां सत्ता वा कर्तृकर्मणाम् ॥
क्रियाव्यापारभेदेषु सत्ता वा समवायिनी ।
अन्ते वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते ॥
बुद्धिं तज्जातिमन्ये तु बुद्धिसत्तामथापरे ।
प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते ॥'

इति । विमतिश्च अत्र

'क्रिया नामेयमत्यन्तापरिदृष्टा·········।'

इति तद्वादिनैव परमगुरुणा अभिधानात् । तत्रभवानपि

'क्रमात्सदसतां तेषामात्मनो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः ॥'

इति । किंच साधकमपि प्रमाणं बाधकेन विधुरयितव्यम् ।

'द्रव्यस्य प्रत्यभिज्ञात ऐक्ये सिद्धे फलं कुतः ।'

इति क्रियानुमानम् । साच केशनखादौ सर्वत्रैव भिन्ने भवन्ती न वस्तु अपेक्षते वस्तुनस्तथाभूतस्य अयोगादिति बाधकाधीनमेव प्रत्यभिज्ञानाप्रामाण्यमिति तदेव परदूषणे प्रपततीति प्राक् बाधकमुक्तम् । विरुद्धेन अन्योन्यमभवनमाक्षिपता धर्मेण योऽध्यासोऽधिष्ठानं, तत् भेदेन व्याप्तमिति अभेदव्यवहारं निषेधति । तत्र व्याप्तिं दर्शयति **'न क्वचित्'** इति । भेदाभेदव्यवहारो हि क्वचिदेव भवन् न अनिमित्तको न अन्यनिमित्तकः । तत् यदि विरुद्धधर्माधिष्ठानेऽपि न भेदव्यवहारः, तदनिमित्तकत्वान्यनिमित्तकत्वे व्यापकविरुद्धे प्रसज्येयाताम् । यतो भागा नाम अनेकं वस्तु एकत्वे भागा इति बहुत्वायोगात् । पूर्वापरीभावोऽपि तेषामपेक्षातः, साच न तेषां धर्मः, अपितु प्रतिपत्तॄणां विकल्पमात्रम् । नच विकल्पा वस्तुविषयाः, नापि तदनुसारेण विपरिवर्तते वस्तु तदिति । तस्मादेका क्रिया,–इति विकल्पमात्रं विषयशून्यम् । ननु भागातिरिक्ते क्वचन इयं धीरस्तु,—इत्याह **'भागातिरिक्तस्य'** इति । क्रियाख्योऽवयवी संयोगः समुदायः संबन्ध एक इति भवतैव न अभ्युपगतं क्रमिकत्वस्य कालभेदसंबन्धमयस्य क्रियालक्षणत्वेन उक्तत्वात् । इयता स्वरूपगतबाधकाभिधायिनं **'न सैका क्रमिका युक्ता'** इति सूत्रांशं व्याख्याय



**'नापि क्रमिका च एकस्य च उचिता'** इति आश्रयैक्यबाधकनिरूपणं सूत्रांशं व्याचष्टे वृत्तिकृत् **'नापि कालक्रमव्यापी च'** इति । चकारावन्योन्यविरोधद्योतकौ । सूत्रे एक एव विरोधद्योतकश्चकार उभयनिष्ठं विरोधमाह । एवमाश्रयगतोऽपि एकश्चकारः, अपिशब्दस्तु विरोधसमुच्चये । आश्रयस्य संबन्धिना एकेन आत्मना स्वभावेन पूर्वे परे च भागा न युज्यन्ते,—इत्ययमर्थः । कस्मात् न युज्यन्ते इत्याशङ्क्य आह **'तथाहि'** इति । पूर्वभागपरभागयोः स्वरूपतः कालतश्च भेद इति पूर्वभागसंबन्धः परभागसंबन्धश्च स्वरूपतो भिन्नौ कालतश्चेति आश्रयस्यापि उभयथा उभयरूपं स्वरूपभेदमुभयथापिच कालभेदमाक्षिपन्तौ कथमेकत्वं तस्य सहेयाताम् । **'तत्र स एक आश्रयः'** इत्यनेन स्वरूपभेदकृतः कालभेद उक्तः । पूर्वभागपरभागौ हि स्वरूपेण भिन्नौ कथमेकस्य आश्रयस्य समानकालौ भवेताम् । नहि तदेव तच्च, अतच्च तदेव भवतीति युज्यते । तत् कालभेदमाश्रयस्य आनयतः । **'नच एकस्वभावस्य'** इत्यनेन पूर्वपरभागगतस्वरूपभेदकृतः स्वरूपभेद आश्रयस्य दर्शितः । अथ कालभेदकृतं द्वयं दर्शयितुमुपक्रमते **'कालभेदेनापि'** इति । न केवलं स्वरूपभेदेनेति अपिः पूर्वभागसंबद्धत्वं परभागसंबद्धत्वं च कालभेदेन विरुद्धमिति दर्शयति । **'नहि अन्यस्मिन्नपि क्षणे'** इति । एवं तर्हि तयोर्न कालभेदः स्यात्, यदि परस्परकालावगाहित्वं स्यात् । नच एतदस्तीति । एवं पूर्वपरभागयोः कालभेदमुक्त्वा तद्गतेन कालभेदेन आश्रयस्य स्वरूपभेदं तावदाह **'नहि अन्यस्मिन्नपि क्षणे'** इति । परभागक्षणे काले पूर्वभागक्षणाभावरूपे पूर्वभागसंबद्धत्वलक्षणः स्वभावो नास्तीति स प्राच्यः

स्वभावो नष्ट इत्यर्थः । अथ पूर्वपरभागयोः कालभेदेन आश्रयस्यापि भेद इति दर्शयति **'नास्ति'** इति । पूर्वभागसंबद्धत्वं परभागसंबद्धत्वं च कालभेदेन विरुद्धमाश्रयस्य एकस्मिन् काले कथं स्यातामिति आश्रयस्य कालभेदं वितरतः । तत्र न पूर्वकालं पूर्वभागसंबद्धत्वमाश्रयस्य उत्तरस्मिन् काले संभवति । तत् हि पूर्वकाले एव युक्तम्, उत्तरश्च कालः पूर्वकालाभावरूप इति कालभिन्नाभ्यां ताभ्यां धर्माभ्यामाश्रयस्य कालभेदः स्यादिति चतुर्थो अयं विरुद्धधर्माध्यासः । अत्र च देशभेदोऽपि मन्तव्यः । स तु असार्वत्रिकत्वात् न दर्शितः आत्मा जानातीत्यादौ तदसंभवो यतः । कालभेदस्तु सार्वत्रिकः । स च स्वभावभेदपर्यवसायी । ननु सत्त्वाश्रयस्य भिन्नाः स्वभावा इति आशङ्क्य आह **'नच स्वभावव्यतिरिक्तः'** इति । तर्हि किमस्त्वित्याह **'तदा'** इति । यत एवं तत इत्यर्थः । एवकारः स्वभावो नश्यतु, स्वभावी तु स्थितः—इति शङ्कामपास्यन् स्वभावी एव नष्ट इति द्योतयति । एवं शास्त्राभ्यासजनितविकल्पोपहतमतिभिरपि अधुना बाधकोपजीवनबलात् यत एतत् लब्धं, ततः पश्चात् व्याचष्टे **'अर्थस्य कायादेस्तत्तद्देशादिजातता ।'** इति सूत्रार्थं **'केवलं गमन'** इत्यादिना वृत्तिग्रन्थेन । सूत्रे तु पूर्वोपादानं शास्त्रानुपहतसरलमतिजनताभिप्रायेण स्फुटत्वादस्य अर्थस्य । ननु एकैको भाग एव पाकोऽस्तु,—इत्याह **'नच'** इति । ननु भागस्यैव पाकत्वे बहुषु भागेषु पचतिप्रत्यय एकत्वेन कथं भवेदित्येवं भागमात्रक्रियापेक्षः कथं निर्बीज एव शङ्कित इत्याह **'पाकसामान्यम्'** इति । तावत्सु भागेषु एका पाकत्वजातिरेकबुद्धेरालम्बनमिति सबीज एव अयं पक्षः । तर्हि कथं **'नच'** इति उक्तम् । आह **'निर्भागस्य इव'** इति । सभागत्वे हि प्राच्य एव दोष



इति भावः । **'पूर्वापरीभूतता'** इति कालक्रमवत्तेत्यर्थः । यच्च उच्यते

> 'आहितोत्तरशक्तित्वात्प्रत्येकं वा समूहिनः ।
> अनेकरूपा लक्ष्यन्ते क्रमवन्त इवाक्रमाः ॥'

इति, तत्र इवशब्देनैव क्रमिकत्वस्य अवास्तवत्वमावेदितम् । नच उत्तरक्षणेषु पूर्वक्षणैः शक्त्याधानं किञ्चित्, विशिष्टस्तु उत्तरक्षण इति न अधिकमुक्तं स्यात् । **व्यभिचारात्'** इति कुत्रचिदपि असंभवादित्यर्थः, नतु अव्यापकत्वादिति मन्तव्यम् । ननु मा भूत् क्रमिकता अस्या लक्षणम्, धर्ममात्रमधिकं यत्, सैव क्रिया भविष्यति । आह **'नापि'** इति । **'प्रथमोऽपि'** इति । अन्ये तावत् क्षणा देशान्तरसंयोगविभागविशिष्टाः परैरपि उपगताः । प्रथमकाले तावत् पूर्वदेशसंयोगविनाशकेन विभागेन यत उद्भूयते, तेन क्रियापदार्थेन भवितव्यम् । तत्रापिच न असौ कश्चित् प्रत्यक्षेण उपलभ्यते पृथग्भूतो द्रव्यात् । ननु क्रिया इयमात्मनि विचारयितुं प्रक्रान्ता, तदत्र कायघटादेः कः संबन्धः, येन सूत्रे **'कायादेः'** इति उक्तम् । सत्यम्, दृष्टान्ताभिप्रायेण तु सूत्रम् । यथा कायादेः क्रिया तत्र तत्र देशे अपूर्वस्य अपूर्वस्य जन्ममात्रं गमनक्रियायामेकदेशावस्थितस्य आसनस्थानादिक्रियायां तत्र तत्र काले सूत्रे आदिशब्देन संगृहीते तथा अन्तरात्मनि ज्ञानरूपे इच्छति–जानाति–यतते–स्मरतीति कालभिन्नज्ञानस्वरूपापूर्वजन्ममात्रम्, नतु अन्या क्रियेति । एतदाह **'यथाच'** इति । **'उच्यते'** इति तादृक्रूपदार्थस्वरूपव्यवहाराय कृतेन सांकेतिकेन शब्देन । यथाह

> 'भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ॥'

इति । ननु अयं शब्दो नियोक्तारं समाश्रित इति गमनं

प्रसिद्धात्वात् सर्वोत्क्षेपणाद्यनुगमाच्च तावदुपादीयताम्, परिणामेन तु एकीयदर्शनसिद्धेन कोऽर्थः,—इत्याशङ्क्य ब्रूते '**परिणाम**' इति । सर्वं धात्वर्थरूपं भावनात्मकं च देशभेदासंभिन्नकालक्रमाविष्टं परिणामेन संगृह्यते । यतो गमने यद्यपि अस्ति कालभेदस्तथापि देशभेदस्य तत्र स्थूलदृष्टिगम्यस्य असाधारणस्य संभवः इति न अत्र कालभेद उदाहृतो भवेदिति केवलग्रहणम् । '**अत एव**' इति यतः केवलकालक्रमोदाहरणतात्पर्यं परिणामस्य, ततो गमनं देशभेदयुक्तं पृथक् कृतम् । परिणामविशेषा देशभेदवन्तो वृद्ध्यपक्षयादयो गृहीताः केवलम्, कालक्रमवन्तस्तु स्थानासनभवनज्ञानस्मरणेच्छाप्रभृतयः परिणामेनेति द्वयोरपि विशेषवाचित्वात् न इदमाशङ्कनीयम्—सामान्यविशेषवाचिनां कथं द्वन्द्वः । नहि भवति धववृक्षावितीति । वृत्तावादिग्रहणेन स्फुटस्वरूपभेदमाम्रं परिपच्यते दुग्धं परिणमते इत्यादिकं हरितपीतादिना मधुराम्लद्रवकाठिन्यादिना भिन्नेन स्वरूपेण वक्ष्यमाणेन सतोऽपि कालभेदस्य अनादरकारिणीं क्रियां संगृह्णीते । तेन गच्छतीति देशभेदः, तिष्ठति दिनमिति कालभेदः, नीलति, श्वेतते, राजते दीप्यते इति स्वरूपभेदश्चैत्रस्य प्रतीयते इति देशकालस्वरूपान्यतैव क्रिया,—इति उपसंहरति '**तत्तत्**' इति । वस्तुग्रहणेन उपलब्धिलक्षणप्राप्ततामाह । अनुपलम्भात् प्रत्यक्षाप्रवृत्तिरुक्ता, अथवा पूर्वजन्मप्रबन्धादेव फलं ग्रामप्राप्त्यादिकं संपद्यते

'यस्मिन्नेव हि संताने......... ।'

इति नीत्या स्वर्गादिसिद्धिः, संयोगोऽपि तद्देशसमानसामग्रीको देवदत्तक्षणस्ततोऽपि चलामीत्यभिसन्धानज्ञानक्षणैकसामग्रीको देहक्षणस्ततोऽन्यदेशक इति कस्य अनुरोधेन धात्वर्थरूपा वा



भावनात्मा वा कर्मपदार्थात्मा वा क्रिया अभ्युपगम्यते इति अनुमानमपि नास्ति, अर्थापत्तिरपि वा । तत्र सूत्रार्थस्य प्राधान्यात् वृत्तौ निर्मग्नस्य टीकायां स्फुटपरामृष्टस्य सौत्रेणैव क्रमेण बुद्धिनिवेशो यथा स्यादित्यभिप्रायेण '**तत्तद्देशादिजातता नान्या**' इति सूत्रार्थांशं पूर्वं निगमयति '**अप्रमाणा क्रिया**' इति, परिशिष्टं पश्चात् '**प्रमाणबाधिता च**' इति ॥ ९ ॥

**तत्र तत्र स्थिते तत्तद्भवतीत्येव दृश्यते ।**
**नान्यन्नान्योऽस्ति संबन्धः कार्यकारणभावतः ॥ १० ॥**

एवं ज्ञानं क्रियां च परीक्ष्य '**तद्योगादैश्वर्यम्**' इत्यत्र हेतौ योगशब्दवाच्यं संबन्धांशं परीक्षितुं संबन्धे तावत् साधकं प्रमाणं नास्तीति '**तत्र तत्र**' इति कारिकया कथयति, प्रसङ्गाच्च क्रियायामपि वक्तव्यं शेषं परीक्षते । तथाहि—यदि कश्चित् ब्रूयात् तत्तद्देशकालस्वरूपभिन्नं वस्तु संतानवृत्त्या प्रवहत् क्रियेति यदुक्तम्, तदासनगमनादावस्तु, यत्र अकर्मकत्वं प्राप्यकर्मता वा, यत्र च निर्वर्त्यं घटादि कर्म; तत्र क्रियाकारकभावस्य अभावे कुम्भकृत् मृदो दण्डादिभिर्घटं करोति,—इति बोधः, तथैव अत्र क्रियापर्यन्तव्यवहारसिद्धः कथं स्यात्, तद्भावश्च क्रियया विना कथमिति, सोऽपि अनेन सूत्रेण प्रत्याय्यते तत् तस्यापि अनन्तरसूत्रेण अस्य अर्थस्य स्फुटीकरणदिशा । अत एव प्रासङ्गिकत्वमुक्तत्वं च दर्शयितुं विवृतिकारो दृष्टान्तत्वं क्रियायाः संक्षेपावतरणे प्रदर्शयति '**यथाच**' इति । सूत्रे च '**नान्यत्**' इति सामान्योक्तिरपि क्रियायामपि पर्यवसाय्यते । दृष्टान्तत्वेन च सा संबन्धे योज्यते '**न प्रत्यक्ष**' इत्यादिना । सौत्रमेवकारं व्याचष्टे '**दृश्यते**' इति प्रमाणावसायमात्रम् । एतावान् हेतुः ।

यत एतावत् दृश्यते, ततो नान्यदिति न क्रिया, न तत्संबन्धः कश्चिदस्तीति संपाद्यदृष्टान्तसाध्यनिर्देशः । तथाच वृत्तौ पृथगेव व्याचष्टे '**क्रियावच्च न क्रियाकारकसंबन्धः कश्चित्**' इति । तेनैव अन्यशब्दयोर्न पुनरुक्तिर्मन्तव्या । नान्यदित्यत्र पूर्वस्य हेतुत्वं वृत्तावुक्तं भिन्नस्य व्यतिरिक्तस्य अस्य संबन्धस्य क्रियाया इव अनुपलम्भादित्यनेन । ननु '**तत्र तत्र**' इति सप्तम्या आक्षिप्तो यः प्रातिपदिकार्थातिरिक्तः संबन्धः, स तर्हि किमित्याशङ्क्य यत् सूत्रं '**नान्योऽस्ति**' इत्यादि, अस्य संक्षेपेण निरूपणं '**कार्यकारण**' इति । संनिवेशग्रहणेन अन्यरूपसंहारपूर्वकनियतरूपप्रवेशहेतुं तदीयज्ञानेच्छायत्नविशेषोपयोगमपि आह । अभूतपूर्वाणां पदार्थानामुत्पाद एव क्रमः, सोऽनुभूयते । '**अन्तरालवर्तिनी**' इति कारकाणामन्योन्यं फलेन सह योजना वा योजिका वा । '**देशकाल**' इति इह अधुना अस्माकमनुभव इत्येवमादिभङ्गीमनालम्ब्येत्यर्थः । ननु सूत्रे '**दृश्यते**' इति वर्तमानकाल उक्तः, तेन च देशानुभवितृविशेषावाक्षिप्येयातामित्याशङ्क्य आह '**कारिकायां** च' इति । संक्षेपेण वृत्तश्रव्यताबलेन च प्रतिपाद्ये झटिति यया बुद्धिः क्रियते, सा कारिका । एतदुक्तं भवति—देशाद्यसंकोचेन वीप्सा व्याप्तुमिच्छेत्येवंरूपा पारमार्थिकी पूर्वं हृदये प्रविष्टा भवन्ती '**दृश्यते**' इति वर्तमानप्रत्ययस्य प्रत्युत प्रवाहनित्यतायोगात् महानदीप्रवहणवत् नित्यप्रवृत्तरूपवर्तमानार्थविश्रान्ततां करोति । चित्रायाजीति तु भूतार्थो जनितेति भविष्यदर्थस्य स्वेन रूपेण उपकर्तुमशक्त इति तदानुगुण्यं प्रतिपद्यतां नाम, ननु असाविह न्यायो धातुसंबन्धसूत्रारम्भेऽपीति । ननु '**तत्र तत्र**' इति सौत्रं पदं टीकायां मृत्पिण्डादौ सति घट इत्येष सार्वत्रिकोऽर्थः,



इत्येवं व्याख्यातम् । कथंच एतदनन्तरदेशकालव्याप्त्या सिध्येदित्याशङ्क्य आह '**भावस्वभाव**' इति । भाव एव हि निरंशो व्यावृत्त्युपकल्पितैर्यावद्भिर्धर्मैरेकदा व्यवस्थापितः, तावद्भिः सर्वत्र सर्वदा च अवियुक्तः । वियोगे स एव असौ न भवेत्, ततश्च घटपूर्वतैव स्तूपकता, स्तूपकानन्तरतैव च घटता,—इत्यपि कार्यकारणस्वभावता स्तूपकघटग्राहिणः प्रमाणादेव सिद्धेः । '**तथाविध**' इति । काठिन्यादिबुद्धिमदादिरूपत्वं स्वभावविशेषो मृदः कुलालस्य च । आदिग्रहणादायततातानवे दण्डस्येत्यादि । ननु किं तत्र कारणं, किंवा कार्यं; नियतपूर्वं कारणं, नियतपरं कार्यमिति चेत्; तदेव किमित्याह '**यदापिच**' इति । यदेति हेतौ । च उक्ताशङ्काद्योतकः । अपिर्भिन्नक्रमः । अग्न्यभावे यो न भूतो धूमस्तस्य अभूतस्यापि तस्मिन्नर्थान्तरस्वभावे अग्नौ सति यतः सद्भावस्ततोऽसौ प्रयोजकसत्ताकः पूर्व इति व्यवह्रियते, प्रयोज्यसत्ताकस्तु परः इति स्वरूपमेव तयोः पूर्वत्वं परत्वं च, नतु अन्येन प्रकारेण परस्परापेक्षापारतन्त्र्यरूपश्लेषादिना कार्यकारणयोः परत्वपूर्वत्वलक्षणः कश्चित् कालोऽस्ति । तदुक्तं

> 'पश्यन्नेकमदृष्टस्य दर्शने तददर्शने ।
> अपश्यन्कार्यमन्वेति विनाप्याख्यातृभिर्जनः ॥
> दर्शनादर्शने मुक्त्वा कार्यबुद्धेर्न संभवात् ।
> कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥'

इति । एवं सकृत्प्रवृत्तप्रत्यक्षानुपलम्भप्रसिद्धं स्वरूपद्वयमेव कार्यकारणभावः सार्वत्रिकः,—इति सिद्धम् । एवकारं सौत्रं व्याचक्षाणो '**दृश्यते**' इत्यन्तस्य हेतुतां '**नान्यत्**' इत्यादेश्च साध्यतां व्याचष्टे '**कार्यकारण**' इति । '**अत्र अर्थान्तरे**'

इति एतदुपलम्भावसरे । अनेन प्रत्ययान्तरसाकल्यलक्षणामुपल-
ब्धिलक्षणप्राप्ततामाह । ननु 'तत्र' इति सप्तम्याः कोऽर्थः ।
साहि कारकविभक्तिः । तर्हि राज्ञ इति संबन्धविभक्तेरपि
कोऽर्थः । उच्यते—संबन्धस्य उपकारकरणप्रभावित्वादुपका-
रस्य च व्यतिरेके संबन्धोपकारानवस्थायोगादव्यतिरेके न्याये
कार्यकारणभाव एव षष्ठ्यर्थः । हन्त तर्हि कारकविभक्तीनामपि
स एव अर्थः । तदाह 'सर्व एव' इति । ननु स एव संबन्धो
भविष्यत्येक इत्याशङ्क्य आह 'नैककालिकम्' इति । अग्नि-
सत्तायां न धूम इति किमग्नावेव कार्यकारणभावो विश्राम्यतु ।
नच एवं तस्य कार्यरूपत्वाभावात् स्वात्मनि । एवं धूमकाले
पूर्वभावी वह्निक्षणो निवृत्त इति किं धूम एव अस्त्वसौ, नच
युक्तमदस्तस्य कारणत्वायोगात् स्वरूपे । तत् कुत्र काले स
एकोऽस्तु । तस्मात् कार्यकारणयोः स्वे स्वे काले यत् रूपं, तदेव
विकल्पेन व्यवह्रियमाणमेकः संबन्ध इति उच्यते, न वस्तुतः ।
यथोक्तम्

> 'इत्यमिश्राः स्वयं भावास्तान्योजयति कल्पना ।
> तामेव चानुरुन्धानैः क्रियाकारकवाचिनः ॥
> भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ।'

इति । ननु प्रत्ययान्तरसाकल्येऽपि पिशाचवदहृश्योऽसौ संबन्ध
इत्याह 'अथापि' इति । 'अनुपलम्भात्' इति प्रत्यक्षा-
भावादिति यावत् । कामं दृश्यानुपलम्भोऽयं न भवतीति अस-
त्तानिश्चयो मा भूत्, सत्तानिश्चयस्तु नास्तीति प्रस्तुतमस्माभिः ।
साधकप्रमाणाभावनिरूपणावसरो हि अयमिति तावद्ग्रहणम् ।
'कार्यादि' इति आदिग्रहणेन स्वभावहेतुः । ननु एतावता
अन्यस्य संबन्धादेरस्तित्वं न सिद्धम्,—इत्यस्तु, नच अस्तित्वसि-



द्धेरभावः । इयता तु प्रमाणव्यावृत्त्या प्रमेयव्यावृत्तेरयोगो
'नावश्यं कारणानि' इतिन्यायात् तत्संबन्धो नास्तीति कुतः
सिध्येत् । सूत्रे च 'नास्ति अन्यः संबन्धः' इति, वृत्ता-
वपि 'न कश्चित्संबन्धः' इति, विवृतावपि 'न अपरः
पदार्थोऽस्ति' इति सत्तानिषेध एव उक्तः । तदेतत् कथमि-
त्याशङ्क्य आह 'बाधकप्रमाण' इति । अयं भावः—'द्वि-
ष्ठस्य' इत्यादि 'पारतन्त्र्याद्ययोगाच्च' इत्यन्तं भावि 'ना-
न्योऽस्ति संबन्धः' इत्यनेन सूत्रेण आवृत्त्या अभिसंबध्यते ।
तत एव टीका भविष्यति 'संबन्धः पूर्वसूत्रात्' इति ।
तेन संबन्धेऽस्तित्वव्यवहाराभावो नास्तित्वव्यवहारश्चेति द्वयं
'नान्योऽस्ति' इत्यनेन उक्तमस्तीति न सिद्ध्यति नास्तीति
सिद्ध्यतीति च अध्याहारभङ्ग्या । तच्च एतत्सूत्रांशेन अनन्तरसूत्रां-
शेन च मिलित्वा सिद्ध्यति । अत एव भाविसूत्रे पञ्चम्य एत-
त्सूत्रार्थोपयुक्ता एव । तदुभयमेळनावशात् तु संबन्धो नास्तीति
यत् सिद्धं, तस्य अन्यत्र हेतुताभिधानाय 'तेन' इति परामर्शः
करिष्यते इति ॥ १० ॥

> द्विष्ठस्यानेकरूपत्वात्सिद्धस्यान्यानपेक्षणात् ।
> पारतन्त्र्याद्ययोगाच्च तेन कर्तापि कल्पितः ॥ ११ ॥

तथाहि सूत्रावतरणमित्थमेव करोति 'तदेवम्' इति ।
क्रियायास्तावदेवमिति 'क्रियाप्यर्थस्य' इति 'तत्र तत्र
स्थिते' इति सूत्रद्वयोक्तात् साधकाभावात्, बाधकयोगाच्च
योऽभावः 'नान्योऽस्ति,नान्यदस्ति' इत्येवं सूत्रद्वये निर्दिष्टः,
संबन्धस्यापि योऽभावोऽस्तित्वनिश्चयाभावनास्तित्वनिश्चयरूपः
एवमिति 'तत्र तत्र' इत्युक्तेन साधकाभावेन द्विष्ठत्वादियुक्ति-

भिश्च बाधकेन मिलित्वा उपपादितः, तदिदमभावचतुष्टयं मिलितं '**कर्तापि कल्पितः**' इत्यत्र हेतुतां सूत्रे '**तेन**' इति नीतम् । सा हेतुता तु टीकायाम् '**अभावात्**' इति पञ्चम्या संक्षेपादुक्ता । पञ्चमीं चशब्दं च पूर्वसूत्रेण संगमयति । '**संबन्धः**' इति नान्योऽस्ति संबन्धो द्विष्ठस्यानेकत्वात् सिद्धस्यान्यानपेक्षणात् पारतन्त्र्यादियोगाच्च इति संगतिः । '**संबन्धः**' इत्येतावन्मात्रं तु स्वकण्ठेन विवृतौ निर्दिष्टम् । '**द्विष्ठस्य**' इति सामान्योक्तावपि प्रकरणात् संबन्धस्येत्ययमपि अर्थो लभ्यतामिति । ननु दृश्यानुपलब्ध्यैव नास्तित्वनिश्चयकारिण्या सोऽर्थो बाध्यते । वस्तुतः इयमेव हि अस्य बाधा यत् निश्चितनास्तित्वावेदनं, नतु द्रुघणेन इव शरावस्य विशरारूकरणम् । साच अत्र प्रदर्शितैव दृश्यस्य प्रमाणेन अनुपलम्भादिति । सत्यम्, अनुपलब्ध्या तु नियतदेशकालावच्छेदेन नास्तित्वप्रतिपत्तिः—इह अधुना घटो नास्तीति । यदाह

'......नासत्तानिश्चयो विप्रकर्षिणाम् ।'

इति, तथा

'इष्टं विरुद्धकार्येऽपि देशकालाद्यपेक्षणम् ।
अन्यथा व्यभिचारि स्याद्भस्मेवाशीतसाधने ॥'

इति । तस्मात् सार्वत्रिकीं संबन्धादेरसत्तामावेदयितुं पराभ्युपगततदीयरूपासंभवसंपादको विरोधः प्रमेयनिष्ठो वक्तव्यः, यत् त्वयैव अस्य रूपमुक्तं, तत् त्वदुक्तेनैव रूपान्तरेण विरुध्यते इति तत एव तद्रूपद्वयविरोधसिद्ध्यैव बाधकाभिधायी कृतार्थो जायते इति दूषणहेतौ न धर्म्यसिद्ध्यादिचोद्यप्रसङ्गः—इति वितत्य निर्णीतं प्रसङ्गग्रन्थादावित्यास्तां तावत् । तत्र सामान्यलक्षणद्वारं बाधकमुपन्यस्यति । यत् किल द्वयोः स्वरूपसमाप्त्या युगपत् तिष्ठति, तदेकं न भवति वेश्मद्वयवर्ति घटद्वयमिव ।



एकत्वं हि अभिन्नरूपत्वं, तद्विरुद्धेन च भिन्नरूपत्वेन व्याप्तं द्वयोर्युगपत्स्वरूपसर्वस्वेन अवस्थानम् । अभिन्नरूपो हि यद्येवं स्यात् घटादिः सर्वः, एकोऽपि एवं स्यादिति द्विष्ठत्वस्य क्वचिदेव भाव इत्येवंरूपो यः खलु नियमो व्यापकः, स हीयेत । तद्विरुद्धव्याप्तोपलब्ध्या एकत्वस्य निषेधः । एवं सामान्येन द्विष्ठैकसंबन्धमात्रे बाधकमभिधाय तद्विशेषेऽपि अभिधित्सुराह '**सिद्धस्य**' इति । इह राज्ञ इत्युक्ते प्रतीतिर्न निराकाङ्क्षा राजेतिवत्, अपितु अन्यदाकाङ्क्षति राजा । तत् सा आकाङ्क्षा क्वचित् संबन्धस्य वपुर्भवन्ती सार्वत्रिकत्वेन व्यवस्थाप्यते इति अपेक्षैव संबन्ध इति व्यवह्रियते । तां दूषयति '**उपकारकविषयैव**' इति भवतीति । अस्य अयमर्थः—न तावत् जडेषु अपेक्षा युक्ता । यदाह

'अपेक्षा पारतन्त्र्यं च न संबन्धो जडात्मनोः ।
असंभवात्........................॥' (सं०सि० १)

इति । यत्रापि सा भवति, तत्रापि उक्तद्विष्ठसंबन्धलक्षणा एकपदार्थरूपा न उपपन्नेत्याह '**स्वरूपातिशयलक्षण**' इति अव्यतिरिक्तो यत उपकारस्तं कुर्वन् कारणमेव स्यात् । अपेक्षितं च कार्यमित्थमुक्तं स्यात् । नच एतद्युक्तमित्याह '**सतश्च**' इति । यदाह

'अपेक्षा यदि संबन्धः सोऽसन्कथमपेक्षते ।'

इति । निःस्वभावस्य स्वभाव इति विरोधमाह । ननु सतस्तर्हि कारणस्य कार्येऽपेक्षा भवतु, अविद्यमाने का अपेक्षा, लब्धं च अनेन रूपं, तत् किमर्थमस्य अपेक्षा । यदाह

'संश्च सर्वनिराशंसो भावः कथमपेक्षते ।'

इति । कारणत्वप्रतिलम्भाय कार्ये अस्य अस्तु अपेक्षेति

चेत्, ननु कारणत्वमस्य न स्वरूपाधिकं किञ्चित्, स्वरूपं च एतेन लब्धम् । सत्यं लब्धम्, तद्व्यवहारस्तु न लब्धः । इदमपि सत्यम्, किन्तु व्यवहारो ज्ञानाभिधानात्मा तस्य कारणस्य न कश्चित्, अपितु व्यवहर्तुरसौ । एवंच व्यवहर्तुरपेक्षेति आयातम् । साच विकल्परूपा भवत्येवेति अङ्गीकृतमदः

'.............तान्मिश्रयति कल्पना ।'

इति । तदेतदुक्तं **'तदभावात्'** इत्यादिना । सतोस्तर्हि अपेक्षा भविष्यति राज्ञः पुरुष इतिवत् । एतत् निरस्यति **'नच'** इति । **'द्वयोः'** इति संबन्धसामान्ये षष्ठी । षष्ठ्यर्थमेकगतं सप्तम्यर्थं च अपरगतं स्वीकरोति । अयं हि अत्र अर्थः—राज्ञः सतः सति एव पुंसि अपेक्षेति, ननु अन्योन्यापेक्षा अत्र विवक्षिता । सा हि पारतन्त्र्ये वक्ष्यते । अन्योन्यापेक्षाशब्दोऽपि वृत्तावेवमर्थपर्यवसायी मन्तव्यः । एवं च प्रयोगो लाघवेन पारतन्त्र्येऽपि तथाप्रतिपत्त्यर्थः । तेन तत्रापि राजपुरुषयोः कार्यकारणभावविश्रान्ततैव कर्तव्या, अन्यथा वास्तवषष्ठ्यर्थायोग इति आकूतशेषः । ननु पत्नीयजमानयोरिव यागे, रागियुगलस्य इव आलिङ्गने परस्परापेक्षारूपं पारतन्त्र्यं संबन्धो भविष्यति धवश्च खदिरश्च च्छिद्यतामित्यादावित्याशङ्क्य आह **'परस्परोन्मुखता'** इति **'अन्योन्यमौन्मुख्यम्'** इति । शब्दमात्रमेकम्, ननु एकस्य या उन्मुखता, सा अन्यस्येति कथं संबन्धः स्यात् । सिद्धे का परतन्त्रतेति तु दूषणमुक्तं पुनः पुनरस्य अर्थस्य स्पृष्टत्वात् । तत् भवतु उन्मुखता काचित्, तया न संबन्धसिद्धिरित्येवमत्र अभ्युपगमसिद्धान्ते तात्पर्यम् । तेन **'पारतन्त्र्यरूपः संबन्ध'** इत्यत्र इत्थं योजना—पारतन्त्र्यं भवदपि संबन्धो न सिद्धयतीति । सिद्धयोश्च किं पारतन्त्र्यमित्यपि स्पृष्टं वृत्तौ टीकायां च । राजा



राजेति एकत्र तद्रूपं दृष्ट्वा सर्वत्र तदेव रूपं संबन्धस्य तत्तदन्यतमरूपवादिना कल्प्यते इत्येवं राज्ञः पुरुष इत्यपेक्षायामपि पारतन्त्र्यमेव दर्शितम् । राजा च पुरुषश्चेत्युदाहरणान्तराभिप्रायेण वा यदपि उच्यते परस्पररूपा प्राप्तिरेव अङ्गुल्योरिव संबन्ध इति, तत्रापि आह **'रूपश्लेषात्मापि'** इति । यदि द्वे रूपे कथं श्लेषः, अथ श्लेषः ऐक्यरूपात्, कथं संबन्धता । तदुक्तं

'............द्वित्वे सति कथं भवेत् ।'

इति । ननु रूपश्लेषः सूत्रे तावदादिशब्देन उक्तः, वृत्तौ तु किं न विवृत इत्याशङ्क्य आह **'एवमादि न विवृतम्'** इति । **'बहुधान्यदूषित'** इति ग्रन्थपरिवर्तने को भर इति यावत् । **'दूषितेऽभिनवेन दूषणसंरम्भेण'** इति च वदन् ग्रन्थकृत् पूर्वपक्षोऽपि अयं भागे सिद्धान्तेन संमतः वाद्यन्तरोक्तस्य संबन्धादेरनभ्युपगमादिति दर्शयति । तथाच सिद्धान्तोपगमे **'सत्यम्'** इति वक्ष्यति । आदिपदेन तन्त्रान्तरोक्तमपि सूचयति । यदाह तत्रभवान्

'नाभिधानं स्वधर्मेण संबन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वाद्रूपं नास्योपदिश्यते ॥
उपकारात्स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ॥
तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः ।'

इत्यादि । एतच्च संबन्धस्तोत्रमात्रम्, ननु न्यायाभिधानमिति न दूषितं ग्रन्थकृता । कार्यकारणभावश्च न अत्र संगतः । तथाहि आत्मा तावत् न कार्यः । ज्ञानमपि विषयेन्द्रियमनस्कारादेर्भवत् न आत्मानं कारणीकुर्यात्

'यस्मिन्सति भवत्येव यत्ततोऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥'

इति न्यायात् । क्रिया च नाम न काचिदिति न कश्चित् संबन्ध इहेति । '**तत्समाश्रय**' इति । प्रकृत्या क्रिया, प्रत्ययेन च कर्ता संबद्धौ वक्तव्यौ । नच अस्ति असौ संबन्धः कश्चिदिति भावः । अनुभवविकल्पनस्मरणादिज्ञानमालैव अस्ति, नतु ज्ञाता,–इत्यस्य अर्थस्य प्राक् प्रसाधितत्वात् । अधुना दृष्टान्ततां प्राह '**यथा**'इति । ननु '**कर्तृत्वमपि**'इति कथं वृत्तिः । ज्ञातृत्वे हि ज्ञानमस्ति, तदन्यत् तत्संबन्धश्च न विद्यते, परकर्तृत्वे तु न क्रिया, न तदन्यः, न तत्संबन्ध इति कथं साम्यम् । '**कल्पितः**' इति इयति अंशे दृष्टान्त इति किं सर्वसाम्येन । तदपिच न अतिदुर्योजमित्याह '**अतोऽपि**' इति '**सुतराम्**' इति ज्ञानमपि तावत् धात्वर्थरूपं वैयाकरणमते क्रिया मीमांसकानां च, भावनावादिनां केषांचित् तु प्रत्ययवाच्येति विशेषः । तत्र समस्तक्रियादूषणेन ज्ञानक्रियापि परसंमता दूषितैव भवति । तदस्ति सर्वसाम्यम् । प्रत्युत ज्ञाने सत्यपि ज्ञातृता न उपपन्नेति दृढोऽयं वाद इति प्रकर्षप्रत्ययः । तत एव ज्ञातृताया दृष्टान्तता युक्ता । प्रसङ्गदूषणेन च सिद्धान्तिनो ज्ञानानुपपत्तौ का ज्ञातृतेत्यपि प्रकर्षः । इदानीं

'ननु स्वलक्षणाभासं·············।' (१।२।१)

इत्यादेः

'········तेन कर्तापि कल्पितः ।'

इत्यन्तस्य सूत्रसंघातस्य वृत्तिकृत् पूर्वपक्षे उपयोगि फलमाह '**इति कथमात्मा सर्वेश्वरः**' इति । इतिशब्देन धर्म्यसिद्धिं



सूचितां विवृणोति '**ज्ञानस्यैव बोधात्मनः**' इत्यादिना । हेत्वसिद्धिं सूचितां दर्शयति '**क्रियाकारक**' इति तावन्मात्रलक्षणमुपकल्पितमिति सिद्धान्तिना उक्तस्य ऐश्वर्यव्यवहारसिद्धौ स्वभावहेतोरभावमाह,–इति बौद्धेन ज्ञानसंततिमात्रमेव आत्मेति प्रसाधितमिति शिवम् ॥ ११ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां
पूर्वपक्षविमर्शो द्वितीयः ॥ २ ॥

## अथ तृतीयो विमर्शः ।

इच्छाशक्तिसुनिर्भरममृताभमनन्तभुवनजननपटुम् ।
वन्दे स्वशक्तिलहरीबहलितभैरवपरानन्दम् ॥

अथ अस्मिन् पूर्वपक्षेऽधिकारद्वयेन सिद्धान्तो निरूप्यते । तत्र

'सत्यं किन्तु····················।'

इत्यादिना

'·············स्मृत्यपोहनशक्तिमान् ।'

इत्यन्तेन श्लोकसप्तकेन परदर्शनानुपपात्तिं विमृशता तत् निराक्रियते । यदुक्तं

'ननु स्वलक्षणाभासं·········।' ( १।२।१ )

इत्यादिना पीठबन्धमुपरचय्य

'संस्कारात् स्मृतिसिद्धौ स्यात्स्मर्ता द्रष्टेव कल्पितः ।' ( १।२।६ )

इति, तत ज्ञानविचारोऽयमधिकारः । क्रियासंबन्धविचारस्तु द्वितीयेऽधिकारे भविष्यति । तत्र श्लोकाभ्यां ज्ञानं स्वसंविद्रूपमिति स्मृतावनुभवस्य न प्रकाशस्तत्संस्कारोत्थायामपि,—इति उक्तम् । श्लोकाभ्यां स्मृतेर्भ्रान्तित्वं शङ्कापूर्वकं निरस्य तृतीयेन

प्रसङ्गात् सर्वाध्यवसायानां तत् निरस्तम्, सत्यपि संस्कारे परदृशि स्मृतिरयुक्तेति व्यवहारलोप इति एकेन उक्त्वा स्वपक्षे तदुपपत्तिः श्लोकेन उक्तेति तात्पर्यम् । तत्र पूर्वपक्षे सर्वात्मना शमयितव्ये नेति प्रयुज्यते, ईषदङ्गीकार्ये उच्यते इति, ईषन्निराकार्ये सत्यं किन्तु इति । एषा प्रेक्षापूर्वकप्रयोगशालिनां शैली । इहच **'सत्यम्'** इत्यनेन बहु तावत् पूर्वपक्षवाद्युक्तं सिद्धान्तेऽङ्गीकार्यम् । सांख्य-काणादादिदर्शने ज्ञानं न उपपद्यते,—इति हि यदुक्तं शाक्येन, तत् संमतमेव । तत्रैव तु विशेषान्तरं दर्शयितुं **'किन्तु'** इत्यनेन शब्देन अधिकं पृच्छामो विरतशिक्षाव्यापारो मा तावदद्यापि भूरिति द्योतयता तद्व्यामोहापसारणे यत्नोऽयमिति उक्तम् । तथाहि

'ज्ञानं च चित्स्वरूपं चेत्………… ।' ( १।२।७ )

इति यः प्रसङ्ग उक्तस्त्वया, अयमेव नः सिद्धान्तः । तत्र **'सत्यम्'** इति **'एतत् व्यर्थमेव'** इत्यन्तेन विवृतम्, **'केवलम्'** इत्यनेन **'किन्तु'** इति । अनेन च उत्तरग्रन्थाक्षेपः कृतः । तथाहि **'न कार्यकरः'** इति । इयता एतत्सूत्रार्थस्य उपक्षेपः, **'आत्मना महेश्वरेण'** इति श्लोक-सप्तकार्थस्य, **'ज्ञानमुखेन'** इति सकलस्य ज्ञानाधिकारस्य **'प्रथमम्'** इत्यनेन क्रियाधिकारस्य, तद्वस्तुनिष्ठत्वाच्च परिशिष्टस्य । तत् किन्त्वित्ययं शब्दो विजिगीषुवत् **'आक्रान्तो न अन्यदाक्रामेत्'** इति न्यायेन स्ववाक्यं प्रकरणमधिकारा-न्तरं, समस्तं शास्त्रमुपक्षिपन् प्रधानबीजकल्प इत्याह **'ज्ञानस्य आत्मतत्त्वस्य भेदं वदति'** इति । न इयता परः कृतकृत्यः, अपितु संस्कारमपि आहेति अपिशब्दः । ज्ञानात्मतत्त्वे संस्कारेण विना यथा न कार्यकरे, तथा संस्कारोऽपि अस्मिन् नये येन विनेति द्वितीयोऽपिशब्दः । **'अधुना'** इति प्राप्तकालतया

*But Remembrance though born of the traces of earlier perception is an entity by itself dependent on itself alone and has no capacity to bring the earlier perception into the form of a new observation [or] help in a new observation today.*



पूर्वपक्षानन्तरमिति प्रस्तौति श्लोकसप्तकाभिधेयमेतमर्थं वक्तुं प्रारभते । अनेन प्रकरणोपक्षेपः प्रथमम् । **'ज्ञानमुखेन'** इति ज्ञानाधिकारप्रक्रमे समस्तशास्त्रार्थोपक्षेपो ज्ञानमुखेन ज्ञातृत्वसमर्थनार्थमिति वक्तव्ये कर्तृत्वग्रहणं शुद्धस्वातन्त्र्यरूपमेव ऐश्वर्यमिति दर्शनार्थं यथोक्तमादिसिद्धसूत्रे । तथाहि ज्ञानविषयं यत् यथारुचि संयोजनवियोजनलक्षणं स्वातन्त्र्यं प्रकाशविमर्शद्वय-सारतया, तत्र प्रकाशभागमात्रं प्रधानीकृत्य ज्ञानाधिकारे विचारः, विमर्शप्राधान्येन तु क्रियाधिकारे इति मुखग्रहणम् । मुखं द्वारमुपाय इत्यनेन नहि एकांशद्वारेण धर्मिणि पूर्ण एव प्रवेश इति उक्तम् । तेन कर्तृत्वं शुद्धस्वातन्त्र्यरूपं पूर्णमिह समर्थनीयम् । तत्र ज्ञानक्रियाविचार उपायमात्रमिति । इह अनुभवेन सुखहेतुतां निश्चित्य स्मरणादुपादत्ते इति व्यवहारः । तत्र अनुभवसंस्कारात् कामं स्मृतौ विषयप्रकाशः समर्थितः । नच तावता किञ्चिदनुभवस्य अप्रकाशे तदित्येवंरूपाभावात्, अनुभवप्रकाशश्च न घटते संस्कारजतायामपि,—इति प्रकरणतात्पर्यार्थः । तदाह सूत्रं

**सत्यं किन्तु स्मृतिज्ञानं पूर्वानुभवसंस्कृतेः ।**
**जातमप्यात्मनिष्ठं तन्नाद्यानुभववेदकम् ॥ १ ॥**

**'स्मृतिज्ञानम्'** इति । स्मृतिरूपं ज्ञानं पूर्वानुभवसंस्कारात् यद्यपि जातं, तथापि आत्मनि स्वरूपे निष्ठा विश्रान्तिर्यस्य तादृशम्, नतु आद्यस्य अनुभवस्य ज्ञापकं, तत् भवति । नहि तत् तेन सह आत्मानं मिश्रयति । तदाह **'अन्योन्यभिन्नावेव'** इति । एवकारः कथञ्चिदपि असन्नये इव अन्तर्मुखतापि भवन्मते नास्ति अभेद इत्याह । तत्र ज्ञानस्य विषयेण

*resting in its own self and*

व्यपदेश्यत्वात् तन्मुखेनैव भेदं समर्थयते '**स्फुट**' इति। स्फुटो ज्ञाने स्वाकारार्पणेन ग्राह्यः स्वलक्षणात्मा ज्ञानसमकालावभासो विषयोऽवभासतेऽस्मिन्, स्मृतौ तु अस्फुटो, न स्मृतिज्ञानजनकः, नापि तत्समकालावभासः। यस्मिन् ज्ञाने यादृगर्थो भासते, तत् ज्ञानं तावदेव स्वकाले एव तथाभूतस्य स्वात्मविषयमात्रस्य स्फुटस्य अस्फुटस्य वा उपदर्शनं न ज्ञानान्तरावभासिनो विषयस्य संस्पर्शेऽपि क्षमम्। आस्तां तु तत्प्रकाशनम्। ननु स्मृत्या अनुभवकालभाविनोऽर्थस्य प्रकाशनम्। सत्यम्, किन्तु स्वकाले एव स्वविषयस्यैव सतः स्वविषयतयैव च प्रकाशनं, नतु परविषयस्य परविषयतया वा। घटोऽयमासीदस्ति भविष्यतीति त्रिकालविषयावभासिना विकल्पेन स्वकाले एव स्वविषयस्यैव प्रकाशः, परकालतया अध्यवसायेऽपि प्रकाशनेऽपि वा न परकालस्य अध्यवसायः, वस्तुनः सतः प्रकाशो वा। रजतद्विचन्द्रतया अध्यवसायप्रकाशेऽपि हि न रजतद्विचन्द्रयोरध्यवसायादिः। तदेतदाह '**तत्तदिति**' तेन तेन भूतभविष्यदादिना कालभेदेन संभिन्नमनुविद्धं यद्यपि अर्थवस्तु अवगाहते अध्यवसायमुखेन स्वीकरोति, तथापि तावदेव स्वकाल एव स्वविषयमेव च स्वीकरोति। यथा स्वप्रदृष्टः कान्ताजनः स्वकाल एव स्वविषय एव च गृहीतः, नतु कान्ताज्ञानकालस्तद्विषयो वा तथात्वे कान्ताजनस्य तथाप्रतीतिप्रसङ्गात्; तथा अत्रापि '**तत्तत्कालभेद**' इति टीकया '**पूर्वानुभवसंस्कारप्रबोधजन्मापि**' इति वृत्तिर्व्याख्याता। '**संकारवशाद्धि पूर्वानुभवकालालिङ्गितोऽसौ भाति स्मृतौ विषयः, न ज्ञानान्तरे**' इति तु ग्रन्थेन व्याख्यातम्, '**आत्ममात्रनिष्ठत्वात्**' इति वृत्तिवाक्यम्। मात्रपदेन ज्ञानान्तरविषयनिरासः, ननु आत्मवि-



षयनिष्ठमिति सूत्रे वक्तव्यम्, वृत्तौ च '**स्वविषयसंवेदिकैव**' इति। ननु किं विषयवेदनेऽपि स्वनिष्ठता घटते विज्ञानस्य। क एवमाह। किन्तु विषयमुखेन इयं चेदप्रस्तुता स्मरणाभिलाषेण विषयोपादानादिव्यवहारच्छेद इति। तदाशयेनैव टीकाकारो विषयपुरःसरीकारेणैव उत्थितः स्फुटविषययादृगर्थार्थवस्तुस्वात्मविषयवाचोयुक्तिभिः। तत् कथमुक्तम् '**आत्मनिष्ठस्वरूपसंवेदिकैव**' इत्याशङ्क्य आह '**आत्मानात्म**' इति। आत्ममात्रप्रकाशनं तावत् न नास्ति ज्ञानं समाधानादौ, इह तु विषयनिष्ठं विचार्यते इति अपिशब्दः। '**तस्यैव**' इति '**अनात्मप्रकाशनं ज्ञानम्**' इत्यस्यां भणितावनात्मनः प्रकाशनमिति यदुच्यते, तत्र प्रकाशनमित्यनेन अंशेन अनात्मा घटादिर्न आलिंग्यमान उच्यते विषयधर्मत्वाभावात् प्रकाशस्य, अपितु ज्ञानमेव अनात्मप्रकाशतया वा अनात्माकारधारितया वा प्रकाशते इति प्रकाशनं स्वनिष्ठमेव ज्ञानस्य। अत एव सुशिक्षितनैयायिकम्मन्यैरन्तर्मुखबहिर्मुखत्वे ज्ञानस्य विरुद्धरूपत्वात् भेदापादके शाक्यदर्शनान्तःप्रवेशेन उक्ते स्थूलदृशः प्रत्याययितुमित्यास्तां तावत्। ननु विज्ञानवादे मा भूत् स्वरूपाधिकं नीलप्रकाशनम्, बाह्यार्थवादे तु नीलं प्रकाशते इति कथमध्यवसायमपह्नवीमहि,—इत्याशङ्क्य आह '**बाह्यवादेऽपि**' इति। अपिः पूर्वपक्षसूचकः। प्रकाशो न विषयमाश्लिष्यति प्रकाशरूपत्वात्, विषयस्य अप्रकाशरूपत्वात् वेद्यत्वमिति। तदावेशे प्रकाशोऽपि अप्रकाश एव स्यात् यथा मिथ्याकचकूर्चकज्ञाने। प्रकाशश्चेत् कचकूर्चकमाविशेत्, तर्हि असन्नेव स्यात्। नच कचप्रकाशोऽसन्निति युज्यते तस्य सत्त्वादेवेति चिराद्यवगतौ तच्चिकित्सादिव्यवहारनिर्वाहात्। एवंच विषयश्लेषिणो रूपस्य

व्यापकं तद्धर्माविष्टत्वम् । नच तत् कचकूर्चकप्रकाशेऽस्ति अस-
त्यताधर्मानावेशादिति बाह्यवादिनि उपगमिते तस्य बाह्यस्य
धर्मो वेद्यत्वम् । तद्विरुद्धमवेद्यत्वम् । तेन व्याप्तं प्रकाशरूपत्वं
वेद्यत्वेऽनवस्थानादेर्बहुशाखस्य उक्तत्वादिति व्यापकविरुद्ध-
व्याप्तोपलब्धिः । ननु शाक्यमतमीदृशं यदि स्यात्, तत् स्वसंवे-
दनमेव एकं प्रत्यक्षं समदर्शयिष्यत, न ऐन्द्रियिकमित्याशङ्क्य
आह '**केवलम्**' इति । कारणभेदात् स्वरूपभेदाच्च अवान्तर-
भेदकृत एष विभागः इन्द्रियादेः कारणात् परप्रकाशतास्वरूपेण
च प्रकाशनात् । तेनैव असाधारणेन व्यपदेश ऐन्द्रियिक इति,
अर्थप्रकाश इति च यथा मानसयोगिप्रत्यक्षानुमानज्ञानानामसा-
धारणेन व्यपदेशः । यत्र तु असाधारणं निमित्तान्तरं न उपल-
भ्यते, तत्र औत्सर्गिकं स्वसंवेदनत्वं व्यवह्रियते इति । तदपि
अर्थात् गोबलीवर्दन्यायेन विशेषनिष्ठमेव जायते । ततश्चतुर्वि-
धप्रत्यक्षवादिनोऽपि स्वरूपसंवेदकत्वं स्थितमेव । ननु मा भूत्
परज्ञानविषयस्य ज्ञानान्तरेण अवभासनम्, स एव तु अनुभवः
स्मृतिज्ञानेन प्रकाश्यतामतीतरूपोऽपि धारासार इव नदीपूरेणेति ।
आह '**स्मृतिज्ञाने च**' इति । **अर्थवत्**' इति वैधर्म्येण दृष्टान्तः ।
अर्थो हि यथा भेदेन भाति, न तथा अनुभवः ।

'नच युक्तं स्मृतेर्भेदे स्मर्यमाणस्य भासनम् ।' ( १।४।३ )

इति भाविदृष्ट्या साधर्म्यदृष्टान्तो वा । स्मृतौ निर्दग्धपित्रादिरर्थो
यो विषयः, तस्य न स्मृतिज्ञानात् बाह्यस्य कस्यचित् संभा-
वना भेदेनेति अन्तर्मुखरूपाभेदेन स्मृत्यनुभवयोः प्रकाशः
सिद्धान्त एव भविष्यति । '**एवंच**' इति अनुभवविषयस्य
अनुभवस्य वा स्मृतिज्ञानेन अप्रकाशनेऽपि संस्कारेण तावत्
सविषयतामात्रं दीयतां स्मृतिज्ञानस्य; अनुभवविषयतया तु योऽ-



ध्यवसायो विषयस्य, स न स्यादिति । तत् यदि तृतीयापि
गतिर्न अङ्गीक्रियते अनुभवेन सह स्मृतेरेकमेव रूपमन्तर्मुखमि-
त्येवंरूपा, तदा हि एतत् निर्वहति—स्मृतिप्रकाश एव हि अनु-
भवप्रकाशोऽन्तः कालभेदस्य विषयोपाधिकस्य संविदि अवास्त-
वत्वादिति स्मृतावपि अनुभवविषयतयैव आभाति सोऽर्थः ।
तिसृभिर्गतिभिः शङ्क्या तद्विषयता । द्वे च सर्वथा अनुपपन्ने
इति तृतीयगतिमुखेन इत्थं सिद्धवदुक्तम् । '**ततश्च**' इति
तद्विषयत्वेन अवभासाभावात् स्मरणादभिलाषेण या प्रवृत्तिरुपा-
दानादिका, सा न स्यात् । पूर्वानुभवस्य यो विषयः, तेन सह
यदि स्मृतिविषय एकतां नीयेत, तदा असावुपपद्येत । तथाहि
कपित्थमवलोक्य सुखसाधनमिदमिति स्मृत्वा उपादत्ते । सुखं च
पूर्वानुभवैकलग्नमस्यां स्मृतौ न किंचिदस्ति । यदाह

'इदमेव च नः सुखं यत्सातं संवेदनम् ।'

इति । संस्कारादेव तु सुखरूपतायां सुखानुभवज्ञानमिव इदं
स्यात्; ननु स्मरणमिति । अनेन '**ननु व्यवस्थापिका
घटते**' इति वृत्तिर्व्याख्यता ॥ १ ॥

ननु मा भूत् परविषयस्य स्वीकारः, यस्तु संस्कारमहि-
मोपनतोऽध्यात्मसिद्धश्च मम अनुभवोऽभवदिति स्मृतावनुभ-
वस्य अवभासः, स किं न अङ्गीक्रियते इत्याशङ्क्य तन्निराकरण-
हेतुतया सूत्रं

**दृक् स्वाभासैव नान्येन वेद्या रूपदृशेव दृक् ।**
**रसे संस्कारजत्वं तु तत्तुल्यत्वं न तद्गतिः ॥ २ ॥**

दृक् ज्ञानम् । सा स्वस्यैव आभासः स्वस्य आभासनं नाम तस्यै-
वेति । नच अस्या अप्रकाशमानं रूपमस्तीति । प्रकाशश्च अस्याः

परप्रसादोपनतोऽपि भवेत्, सदाप्रकाशमानत्वेऽपिच नीलाद्याकारच्छायाकल्पं द्वितीयमपि अप्रकाशमानं रूपं स्यादिति अवधारणद्वयमन्यत्। तेन स्व एव अस्या आभास एव, स्वस्या आभास एवेति वेत्येवं वैयधिकरण्यसामानाधिकरण्याभ्यां यदीयः स्वभावः प्रकाशेन सर्वस्य नियम्यते, सा जडात् भिद्यते। तदत्र नियमोपलक्षितेन अनेन लक्षणेन अन्यवेद्यत्वं निराकृतम्। रसे रसविषया दृक् यथा न अन्येन रूपादिज्ञानेन वेद्या, तद्वत् सर्वा दृक् न अन्येन ज्ञानेन वेद्या। अनुभवश्च दृग्रूपः इति न स्मृतिज्ञानेन वेद्यः। संस्कारेण तर्हि किं कृतम्। आह विषयस्य जनकस्य अभावात् निर्विषयतायां प्राप्तायां सविषयतारूपं तत्तुल्यत्वं तेन कृतम्, उपचारात्तु कार्यकारणयोरभेदेन निर्देशः। उपचारे प्रयोजकं कार्यान्तराभावेन तदेकप्रवणताधिगमः, नतु तदवगमरूपत्वं पूर्वानुभवाभासकत्वं, संस्कारजन्यं तत्तुल्यत्वमपि वस्तुचिन्तया उच्यते। तस्य तु गतिरवगमो न उपपद्यते। स्मृत्यनुभवयोर्हि कस्तृतीयः सादृश्यमध्यवस्येत्। तौ च अनन्योन्यदृश्वानौ न सादृश्यमधिगच्छत इति सूत्रार्थः। '**न तद्गतिः**' इत्यत्र द्वावर्थौ तच्छब्देन अनुभवस्य सादृश्यस्य च परामर्शात्। तत्र प्रथमार्थो द्वितीयस्मिन् हेतुत्वेन मन्तव्यः। उपचार इह वृत्तौ स्फुटीकृतः '**संस्कारजत्वेन**' इति। एतत् संक्षेपेण अवतारयति '**आद्य**' इति। यत आद्यानुभवे वेदकत्वादनुभवस्य यत् मुखं विषयप्रकाशनं, तेन स्मृतेरपि विषयप्रकाशनरूपत्वं स्यात्; नच तदस्तीति सूत्रस्य गम्यमानसाध्याभिप्रायनिर्देशः। '**यस्मात्**' इत्यनेन गम्यमानसाध्योपयोगित्वं दर्शितम्। '**संस्कारजत्वेऽपि**' इति अभेदोपचारात् तुल्यत्वमपि संक्षेपेण उक्तम्। '**ज्ञानान्तरवेद्यं न भवति**' इति। अमुना '**तद्गतिः**' इत्यस्य संक्षेपेण द्विधा



व्याख्यानम्—न अनुभवस्य अवगमः स्मृतिः, न तत्तुल्यत्वस्य अवभासः स्मृत्या अनुभवेन तृतीयेन वा। सर्वत्र साधारणं हेतुवचनं ज्ञानं ज्ञानान्तरवेद्यं नेति। '**स्वसंवेदनैकरूपत्वात्**' इत्यनेन दृगित्यादेरर्धस्य संक्षिप्य अर्थनिर्देशः। एकग्रहणेन एवकारार्थव्याख्यानम्—एकमेकाकि अनन्यसहितमेकं च, तदेव; नतु कदाचिदन्यत्, एकस्य च तस्यैव अजडस्य रूपं, न जडस्य। स्वसंवेदनमेकं रूपं यस्य इति टीकाकारोऽस्य सूत्रस्य शङ्कितपरमतनिरसनहेतुतां हिशब्देन द्योतयति। दृगेव स्वाभासा, दृक् स्वाभासैवेत्येवमयोगान्ययोगोपलक्षितस्वाभासनियमवत्त्वं दृशो लक्षणम्। तत्र दृगेव स्वाभासा न अन्यद्वस्तु इति यदन्यदाक्षिप्तं जडं, तल्लक्षणपुरःसरमजडाया दृशो लक्षणमाह '**अयं हि**' इति। अप्रकाशात्मा जड इत्युक्ते नीलं प्रकाशते यदा, तदा न जडं स्यादिति स्वयंग्रहणम्। प्रकाशमानस्यापि हि तस्य यत् प्रकाशनं, न तत् स्वात्मनि नीलरूपे संबन्धितया विश्रान्तम्; अपितु परत्र प्रमातृरूपे। तेन अयं विग्रहः—अविद्यमानः प्रकाशः प्रकाशनं यस्मिन् विश्रान्ततया, तादृगात्मा स्वभावो यस्येति। एतदाह '**स्वात्मनो न प्रकाशः**' इति। अस्यैव स्फुटीकरणं भविष्यति —'**स्वात्मनो न प्रकाशते, अपितु परस्य प्रकाशते**' इति। सप्तम्यर्थे षष्ठी। यच्च नीलं प्रकाशते इत्यत्र प्रकाशनं नाम, न तत् नीलस्य स्वभावः; अपितु परभूतमेव तत् नीलात्। चैत्रमैत्रादेः प्रमातुर्हि स्वभावभूतं तत्। प्रकाशनं न आत्मा, अपितु परभूतं यस्येति विग्रहः। तदाह '**स्वात्मना न अस्य प्रकाशः**' इति। एतदेव व्यक्तयिष्यति '**पर एव अस्य प्रकाशः**' इति। एवं नीलं यथा स्वात्मनि नीलं, न तथा प्रकाशरूपं, प्रकाशनं च यथा प्रमातृरूपं न तथा नीलस्येति यस्य अप्रकाशो

perception must have a perceiver

रूपं, प्रकाशश्च न रूपं; तत् जडमिति तात्पर्यम् । एतद्विपर्ययेण अजडं ज्ञानं यस्य अप्रकाशो न रूपं, तत् दर्शयति '**अजडस्तु**' इति '**स्वात्मनः प्रकाशः स्वात्मा अस्य प्रकाशः**' इति प्रकाशनमात्मनि विश्रान्तं यस्येति, प्रकाशनमात्मा स्वभावः, ननु परो व्यतिरिक्तो यस्येति च विग्रहद्वयेन '**प्रकाशात्मा**' इति व्याख्यातम् । तदेव क्रमेण स्फुटीकरोति '**स्वात्मन एव**' इत्यादिना । एवमप्रकाशात्मा प्रकाशात्मेति च जडाजडयोर्लक्षणं प्रत्येकं द्विधा स्वरूपयोजनमुखेन पररूपव्यावर्तनमुखेन च टीकाकृता व्याख्यातं क्रमेण स्फुटयता । अनेनैव टीकाग्रन्थेन '**स्वाभासैव**' इति नियमश्चतुर्धा व्याख्यातः । तथाहि स्वरूपस्यैव सा प्रकाश इति व्याख्यातं '**स्वात्मनः प्रकाशः**' इति, अप्रकाशमानमस्या न रूपमिति व्याख्यातं '**स्वात्मा अस्य प्रकाश**' इति कदाचिदपि न अस्याः प्रकाशः परप्रसादोपनत इति विवृतं '**स्वात्मन एव प्रकाशते न परस्य**' इति, नीलाद्याकारान्तरमस्या न रूपमिति विवृतं '**परोऽस्य न प्रकाशः**' इति । परो हि यो नीलादिः, सोऽस्य कथं प्रकाशात्मकरूपः स्यादित्यर्थः । एतद्वैपरीत्येन जडेऽपि चतुर्धा लक्षणं योज्यम् । '**सर्वा हि ज्ञप्तिः**' इति सर्वशब्देन दृगिति जातावेकवचनं व्याख्यातम्, ननु अदृग्रूपम्; दृगित्यवधारणं च । स्वाभासा हि या काचन वस्तुमात्रा, सा सर्वा दृग्रूपा भवतीति । वाक्यान्तरगतं हि अवधारणमेकत्र अंशेऽपि अवधारिते यद्यपि कृतकृत्यं भवति यत् तत्र तत्र उच्यते भिन्नक्रम इति, तथापि सर्वाङ्गपरिपूर्णं पूर्णं तत् भवतीति सर्वांशगतत्वे बाधकं चेत् नास्ति तथैव व्याख्येयम् । नच एकवाक्यतायाः खण्डना काचित्, प्रत्युत नियतैकघनाकारस्य वाक्यार्थस्य प्रतिपत्तिरेकतयैव स्फुटा भवति,



तत एव ब्रह्मादिषु'हन्तेर्भूते क्विप्'इत्यादौ चतुर्विधावधारणाश्रयणमनुपदकारादयः प्रतिपेदिरे । व्याख्यानार्थं तु अवान्तरवाक्योत्थापनं न वाक्यभेदमानयति एकस्मिन्नपि नियमे विधावपिवा तस्य अवश्यंभावात् । ब्रह्मादय एवंभूतास्तावत् मन्तव्या उपपदत्वेनेत्यादिवाक्यभेदमन्तरेण व्याख्यानायोगादित्यलं बहुना । ननु एवं नियमे दृग्व्यतिरिक्तस्य जडत्वमिति उक्तं भवति । ततश्च ज्ञानेभ्योऽतिरिक्तो यः प्रमाता, स जडो भवेदिति अजडप्रमातृवादी ज्ञानस्वाभासतावादेन कथं जयेदित्याशङ्कां निरस्यति '**अत एव**' इति । यदिदं जडाजडयोर्लक्षणमुक्तम्, तत एव हेतोर्न जडः प्रकाशते स्वयम्, नापि अयमर्थः प्रकाशकारी । व्यतिरेकेण उक्त्वा अन्वयेन आह '**प्रकाशस्यैव हि**' इति । यस्मादयमन्वयोऽस्ति, तस्मात् व्यतिरेकोऽपि अयं पारमार्थिक इति हिशब्दः । ननु प्रकाशस्य प्रकाशते इति प्रकाशद्वयं स्यात्, नच एवम् । अस्मदर्थ एव हि प्रकाशते, इयं च असौ संविद्वा द्रष्टृता वा ज्ञानं वा न मता । आह '**प्रकाश एव हि**' इति । हिशब्देन हेतुतां द्योतयता निराकरणीयवस्तु शङ्क्यमानं सूचितम् । प्रमायां स्वतन्त्रः प्रमाता, प्रमा च प्रकाशनम् । तत् यस्य न अन्यतः, अन्यस्य च यत्प्रसादात् तत्; स एव तस्यां स्वतन्त्र इति तात्पर्यम् । '**प्रकाशात्**' इति नीलं प्रकाशते इति यः प्रकाशभागः, तस्माद्भिन्नः स्वात्मांशः प्रकाशस्वभावोऽन्यथा वेति विकल्पद्वयम् । यदि प्रथमः पक्षः, तर्हि अर्थांशगतः प्रकाशोऽन्यः किमङ्गीक्रियते । नहि प्रकाशद्वयं भाति, नचापि प्रकाशस्य देशकालस्वरूपतो भेद इति वितत्य उदितं प्राक् । प्रकटता च न अर्थधर्म इत्यपि उक्तम् । संवित्तु विवेचयिष्यते । तत्प्रथमपक्षे प्रकाश एव प्रकाशकः प्रमातेति सिद्धम् । द्वितीयस्तु पक्षो दोषोपहत

इति उपेक्ष्य एवेत्याह **'प्रकाशात्मत्वे'** इति । ततश्च प्रकाशस्यैव नीलं प्रकाशते इत्यत्र अयं परमार्थः—महाप्रकाशात्मकं यत् भगवतो रूपम्, तत्रैव स्वशक्त्या शून्यप्राणाद्यन्तःसंकुचितो बहिर्विषयेषु न अत्यन्तं संकुचितो यः प्रमाता प्रकाशते, स एव बहिः संकोचमापद्य नीलप्रकाशत्वेन भातीति। परमार्थत इयं श्रीमतो महादेवस्य शक्तिविजृम्भा महादर्पणान्तरवभासिप्रगृहीतप्रतिबिम्बकबहुतरसूक्ष्मदर्पणान्तरवदिति प्रकाश एव अजडः प्रमातेति युक्तम् । ननु जड एव अप्रकाशमानः प्रमाता अस्तु । आह **'तदप्रकाश'** इति **'कस्य'** इति **'मम'** इति । प्रकाशमानस्यैव हि भित्तिकल्पस्य विचित्रकल्पतया नीलं प्रकाशते इत्यादय उल्लेखाः । **'तत्रापिच'** इति अपेक्षणीये प्रमात्रन्तरे । **'तथात्वे'** इति जडत्वेन प्रमात्रन्तरापेक्षायामनवस्था । ननु भवतु असौ बीजाङ्कुरवत् । भवेत्, यदि मूलं न निहन्यात्, निहन्ति तु । तदाह अर्थस्य प्रतिपत्तिरवभासो न भवेत् पूर्वरूपविलक्षणस्य प्रकाशमानस्य कस्यचिदभावात् । ननु च इयता प्रकाशमात्रं प्रत्यर्थनियतं सिध्येत्, न प्रमातेति । आह **'अनुगत'** इति । स प्रकाशो यद्यपि बहिर्मुखतया वेद्यभेदेन तदुपरागायातेन च देशकालभेदेन संकुचितः, तथापि अन्तर्मुखप्रमातृलक्षणमपि असंकुचितमभिन्नं रूपं तत्र संकुचितेऽनुगतम् । तेन विना न कश्चिदर्थानां कार्यकारणभावबाध्यबाधकभावादिसमन्वयो लोकयात्रास्वभावः परमार्थोपदेशपर्यन्तः स्यादिति वितत्य भविष्यति

'देशकालक्रमजुषा............ ।' (१।७।३)

इत्यादौ

'समलो विमलो वापि व्यवहारोऽनुभूयते ।' (१।७।१४)

इत्यन्ते प्रकरणे । ननु अनुगतं प्रमातृरूपं ज्ञानलक्षणानां प्रमाणां



समवायिकारणमात्मा भविष्यतीति किं तत्प्रकाशनाप्रकाशनचिन्तया,—इत्याशङ्क्य आह **'ततः'** इति । यतोऽन्तर्मुखप्रकाशस्वभावोऽनुसन्धानप्रत्यवभासपरामर्शस्वभाव एव समन्वयः, ततो न प्रमाकारणत्वमात्रेण विषयेन्द्रियादिवैलक्षण्येन जडस्य आत्मनः प्रमातृता युक्ता । ननु काणाददृशा जडत्वमनुपपन्नमस्तु प्रमातुः, प्रकाशमानत्वे तु प्रमातुर्घटादेरिव कारकसामग्रीजन्यतद्विषयसंविदुत्पादलक्षणं कथम् । नहि घटं वेद्मीतिवदहमंशः कर्मत्वेन भाति, तत एव अयमजडोऽपरोक्षश्चेति । एतत् प्राभाकरं मतं स्वदर्शनेन समीकरोति **'अन्यथा तु उपपद्यते'** इति वचनम् । नीलं हि यथा इदमिति परस्य प्रकाशते, न एवमयमात्मेति । तत्कथं जडः स्यादिदन्तया प्रकाशनाभावात् । नच अयं प्रकाशः । नीलसुखादि हि प्रकाशते इति स्यात् तद्विषया संविदुत्पद्यते । ननु आत्मा प्रकाशते आत्मसंवित्त्यनुदयात्, ततोऽयं न नीलवत् प्रत्यक्षो नीलप्रत्यक्षतायाम् । नच सर्वथा निःस्वभाव एवेति अपरोक्ष आत्मा इति तदित्यपरोक्षताभिधानमेव युक्तमस्मदुक्त्या स्वप्रकाशात्मतया, नतु अन्यथा । तथाहि सतो द्वयी गतिः— प्रकाशते चेत्, प्रत्यक्षः; न चेत्, परोक्षः । तत्र अप्रकाशनपक्षे परोक्षता स्यात्, प्रकाशनपक्षे प्रत्यक्षतेति अपरोक्षताभिधानेन प्रकारान्तरमुपतिष्ठेत असत्त्वं नाम । नच तद्युक्तमित्याह **'नहि'** इति । **'पुरुषभेदनियतः'** इति मम प्रकाशते चैत्रस्य प्रकाशते इति । एवं प्रकारान्तरेण अपारोक्ष्यमसत्तायामेव विश्राम्येदिति उपपाद्य स्वदर्शनेन तत् निर्वहति **'अपारोक्ष्यं पुनः'** इति । प्रसिद्धं यदैन्द्रियकमानसप्रत्यक्षसंवेद्यं, तदिदमिति प्रमातुर्भेदेन भातीति अक्षप्रतिगमादस्तु प्रत्यक्षम्, नैवं प्रमाता । तत् न प्रत्यक्षो नच न भातीति न परोक्षः। **'अन्यथा'** इति एवमभ्युपगतेऽस्य भङ्गीभ-

णितस्य विषयविभागे परोक्षतैव यदि तस्य अस्तित्वमिति आकूत-शेषः। परेण हि एवमुच्यते—अहं घटं वेद्मि, अहं पटं वेद्मीत्या-दिव्यवहारेषु घटादिविषयाः संविद उत्पद्यमानाश्च विलीयमानाश्च भान्ति । तथाभूतसंविदुदयप्रसादात् घटादीनां प्रत्यक्षता । ताश्च संविदो न विषयधर्माः, न आत्मधर्मः स्वातन्त्र्येण निर्भासनात् । तदेतदस्तु तावत् , यत्तु अहमिति भाति, न तत्र संविदुदयोऽपेक्ष्यस्तदपेक्षणे तद्भानस्य विच्छिन्नतया प्रसङ्गात् , कर्मत्वेन च । नच एवम् । यदाहुः

'सकृत् विभात आत्मा ।'

इति । तदत्र आत्मनः प्रकाशरूपतैव उपगता भवति केवलं; संविदामपि प्रकाशरूपत्वे स्वरूपदेशकालादिभेदाभावे ततः प्रकाशरूपात् पारमार्थिकात् कथं भेदो भवेदिति मायाकृतनीलादिभेदोपरागसंकोचप्रसादोपनतो नैव अङ्गीकर्तव्योऽस्मन्नयानुप्रवेशेनेति प्राभाकराणामपि मोहोऽपसारितः प्रसङ्गात् । तदेतदाह 'अत एव' इति । यदेतदपारोक्ष्यं स्वातन्त्र्यप्रकाशनसारमङ्गीकृतम्, तत एव हेतोरिदमयत्नसिद्धमङ्गीकर्तव्यम् । यत् किल वक्ष्यते—अस्तित्वं प्रकाशमानत्वमेव, तच्च प्रकाशस्वरूपे स्वनिष्ठमेव अनन्यापेक्षत्वात् । मायाकल्पितभेदत्वेन मायादशायां यो नीलादिर्जडः, स प्रमातृनिष्ठ एव प्रकाशते इति प्रमातुरेव असावस्ति, नतु स्वात्मनः किमपि असौ; स्वात्मैव हि अस्य न कश्चिदिति । तथाच अजडप्रमातृसिद्धिः

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।
जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः ॥' (१३)

इति । ननु संविद्वादी प्राभाकरः काममनुना नयेन स्वदर्शने निपात्यताम्, काणादस्तु कथम् । स हि एवमाह—आत्मनि समवायिकारणे मनःसंयोगादसमवायिकारणात् कार्यैकार्थसम-



वायेन प्रत्यासन्नात् दृष्टसामर्थ्याच्च अक्षालोकादेर्निमित्तकारणाच्च ज्ञानमुत्पद्यते चेत्, अर्थः प्रकाशते इति । तदर्थप्रकाशाधीनश्च इच्छाप्रयत्नदेहक्रियाहानादानादिर्व्यवहारः संपन्नः इति किं प्रकाशमानत्वेन आत्मनः कल्पितेन । यदापि आत्मा प्रकाशते इति व्यवहारः, तदापि अनुमानेन मनसैव आत्मविषयज्ञानमेव आत्मनः प्रकाशनमिति का हानिः । अत्र उच्यते—किं ज्ञानोत्पत्तिरर्थस्य प्रकाशतां करोति, उत सैव सः । तत्र प्रथमं पक्षमाक्षिपति '**नच**' इति । प्रकटता हि एवमर्थधर्मोऽङ्गीकृतः स्यात् कार्यताभ्युपगमे । सा च दूषिता बहुश इति स्वभावतापक्ष एव द्वितीयो युक्तः । तदाह '**अपितु ज्ञानमेव**' इति '**प्रकाशमानता**' इति संबन्धः । '**तदपि**' इति आत्माक्षार्थादिस्तावत् न प्रकाशधर्माः, ज्ञानमपिच यदि न प्रकाशधर्मः; तर्हि '**प्रागवत्**' इति तदनुदये यथा न किंचित् प्रकाशते, तथा तदुदयेऽपि मा किंचित् प्राकाशिष्ट, किं नश्छिन्नम् । किं नेत्याह '**अर्थोऽपि**' इति । अर्थस्य हि ज्ञानमेव प्रत्यक्षतेति अतत्प्रकाशे कथं प्रत्यक्षत्वेन असौ व्यवहारः शुक्लाप्रकाशे शुक्लत्वेन इव । तद्व्यवहार्यतायां हि कारणं तद्रूपेण प्रकाशनम्, अन्यथा नियमेन तथा व्यवहारः कुत इति कारणानुपलब्धिः । अथ प्रत्यक्षतापि ज्ञानान्तरेण प्रकाशते इति उच्यते, तदनवस्थेति प्रागवच्छेदस्य अर्थः । एवं प्रकाशस्य तावत् परप्रकाश्यता न उपपन्ना । तावद्ग्रहणेन इदमाह—प्रकाशस्य इदं स्वाभासत्वं स्थितम्, तस्मिन् सति परप्रकाश्यत्वं निवृत्तम् । तन्निवृत्तावनुभवः स्मृतिज्ञानेन न प्रकाश्यते इति । यद्यपि इयत् प्रकृतं प्रमेयं, प्रमाता तु न अद्यापि सिद्धः, तथापि तत्त्वचिन्ता इयं वादरूपा वर्तते इति प्रकाशस्य तात्त्विकरूपचिन्तनं टीकायां न असमञ्जसमिति

तत एव न अस्य चोद्यस्य आशङ्का किल । बौद्धेन स्मृतिसमर्थनाय अनुभवज्ञानं स्मृतिज्ञानेन भाष्यतामित्युक्ते कारिकया उचितमुत्तरमुक्तम् , वृत्त्या अपि तदनुसारेण निरूपितम् । तत्त न किंचित् सूत्रवृत्त्योरयुक्तम् । विवृतौ तु '**सर्वा हि ज्ञप्तिः**' इति व्याख्यातुं जडाजडयोर्लक्षणभेदो य उक्तः, स युक्तः । '**ज्ञानं ज्ञानान्तरवेद्यं न भवति**' इति हि प्रकृतमेतत् । तदनन्तरं तु तत्प्रकृतप्रमेयसमर्थनग्रन्थ एव कर्तव्यः '**एकप्रमातृनिष्ठत्वेनापिच**' इत्यादिः । अनेन हि संतानान्तरज्ञानस्य कदाचित् ज्ञानान्तरेण अनुमानादिना प्रकाश्यत्वमस्तु, नतु स्वसंततौ तत् कथमपि उपपन्नमिति आवेद्यते । मध्ये तु योऽयं ग्रन्थः '**अत एव न यस्य प्रकाशः स्वात्मभूतः**' इत्यादिः '**पराशयः प्रकाश एव भवति, नतु तदनुमानम्**' इत्यन्तः; स कथं संगच्छते । नहि अनेन कारिकावृत्त्यर्थः कश्चित् समर्थ्यते, केवलं प्रमातुर्जडाजडत्वचिन्ता क्रियते । स्मृतिबलात् प्रमातृप्रसाधनायैव च अयं यत्नः । तथाहि ज्ञानानां न अन्योन्यविषयस्पर्शनेन अन्योन्यप्रकाश्यप्रकाशकभावस्तदधीनश्च सर्वस्मृत्यादिव्यवहार इति प्रमाता अवश्याङ्गीकार्य इति प्रकरणान्ते निर्वाहयिष्यते

'न चेदन्तः कृतानन्तविश्वरूपः·········।'( १।३।७ )

इति । तस्मात् किमेतदिति यतः प्रकाशस्य वृत्तान्तस्तिलशस्तत्त्वचिन्तायां विचारयितव्यः । स्वप्रकाशस्वरूपपर्यालोचनप्रसङ्गात् यदायातम् , तत् चेदुपेक्षेत विवृतिकारः, न सुस्पष्टमनेन ज्ञप्तिस्वरूपं विवृतं स्यात् । ततश्च तद्विवरीषुणा तत्स्वरूपं च निरूपितं प्रकृतश्च ज्ञानस्य स्वप्रकाशतावादः समर्थितः । अयं हि अभिप्रायः—प्रकाशस्तावदेकोऽस्तु वा, परमार्थतोऽनेको वा, प्र-



मातृरूपो वा । सर्वथा तावत् परप्रकाश्यत्वमस्य अनुचितमिति । वस्तुतश्च अस्य ऐक्यमेव उचितं भेदहेतोः स्वरूपदेशकालादेरयोगादित्याशयेनापि '**दृक्**' इति एकवचनं सूत्रे । अनादरमत्र तु ख्यापयितुं '**सर्वा**' इति वृत्तौ । तत्संवादनार्थमेव सूत्रान्तरवचसा बहुवचनान्तेन संवादनमिति न किंचिदत्र अवद्यम् । मध्यग्रन्थावतारणे च अस्माभिरुक्तं यदि बोधः स्वप्रकाशं ज्ञानमुद्ग्राहयन् स्मृतिं समर्थयितुमक्षम इति प्रमाता कश्चिदङ्गीक्रियते, स तर्हि ज्ञानव्यतिरिक्तत्वादेव स्वप्रकाशः प्राप्नोतीति अपसिद्धान्तः सिद्धान्तिनः प्रसज्यते । अयमेव हि एवंविधस्य विषयो यत्र परोपदेशाय वादे क्रियमाणे तत्त्वनिरूपणाय बहुतरं वस्तु समर्थ्यम् , तत्र किंचित् समर्थयमानस्य समर्थनीयान्तरघटनमिति । अत एव न अयं हेत्वाभासस्य विषयः । सहि एकसाध्यविषयो भवति । तदपसिद्धान्तशङ्कानिराकरणमकारि टीकाकारेण । नहि प्रमाता नाम ज्ञानव्यतिरिक्तं किंचित्, अपितु ज्ञानानां बहिर्मुखसंकोचभाजां यदन्तर्मुखमदेशकालभेदप्राणितं, तदेव स इति । किंच स्वप्रकाशत्वं नाम बोधस्य लक्षणमिह उक्तं, तत्र लक्ष्यव्यतिरिक्तेऽपि विषये यत् लक्षणमास्ते, तदतिव्याप्तिदोषदूषितमिति अलक्षणं स्यात् । लक्षणहेतुश्च अयम् । तदिदं प्रमातरि अपि अस्ति '**भवन्मते**' इति सिद्धान्तिनः कथमिदं बोधस्य लक्षणम् । नच परसिद्धतामात्रेण वस्तुसिद्धिरित्यपि बौद्धस्य भवेत् वचनावकाशः, तमपि उपशमयितुं मध्यग्रन्थः,—इत्यलं बहुना, प्रकृतं तु ब्रूमः । ननु प्रकाशत्वे प्रमातुर्जडतायामनवस्था,—इति अप्रकाशस्वभावोऽसावुक्तः, तदेतत् कथं परप्रमातुर्व्यापारव्याहारादिना अनुमेयत्वात् । बौद्धस्य अपि ज्ञानमेव संतत्या विकल्पकतया वा प्रमातृरूपम् । तदपि व्यापारादिना परसन्तानगतमनुमेयमिति कंचित् ब्रुवाणं प्र-

तिक्षिपति 'यदपि' इति । ननु ज्ञानमपि सिद्धान्तिमते प्रमातुरव्यतिरिक्तम् । तत् तस्मिन्ननुमेयतया प्रकाश्यत्वेन अङ्गीकृते प्रमातुरपि स्यादेव प्रकाश्यत्वमिति । आह 'कल्पित' इति । इह यथा बौद्धमते स्वप्रकाशस्यापि ज्ञानस्य प्रत्यक्षवेद्यस्यापिवा घटादेरर्थस्य कार्यत्वादिर्धर्मो व्यतिरिक्तोऽपि व्यावृत्तिबुद्ध्या कल्पितोऽनुमीयमानोऽपि न स्वसंविदध्यक्षसिद्धतामपहस्तयति, तथा प्रमातुर्मायाशक्त्या यत् निराकारवादे विषयौन्मुख्यं नाम स्पष्टं साकारवादे विषयाकारत्वमनतिरिक्तमपि अतिरिक्तमिव रूपं, तस्य प्रकाश्यत्वेऽपि न प्रमातुः स्वप्रकाशता खण्ड्यते परमार्थस्य कल्पनया अनपबाधनात् । मूलप्रसिद्धमेव हि रूपं तत्र अनुमानेन काल्पनिकेन उपबृंह्यते स्वप्रकाशतया विना यथोक्तयुक्तिभिरनिर्वाहात् । एवं ज्ञानमेव अनुमेयं, ननु परमार्थप्रकाशः । तद्धर्मानुमेयतोपरागात् तु प्रमातुः परस्य अनुमानमिति प्रसिद्धिः । ननु ग्राहकोऽपि परोऽनुमेयतया प्रसिद्धः, किमत्र बाधकं येन परोपरागकृतोऽयमत्र अनुमेयताव्यवहारः स्यात् । अस्तु एवम्, तथापितु परसंतविपतितशरीरप्राणबुद्धिशून्यरूपसमाविष्टत्वं प्रकाशस्य अनुमीयते स्वप्रकाशस्यापि तत्र व्यापारव्याहारादिना । ततश्च अयं परमार्थः—स्वप्रकाशं संवेदनं सकलदिक्कालगतमपि अधुना धर्मिण्येतच्छरीरादौ विषयोन्मुखं विषयाकारमेतच्छरीरादितादात्म्यसमाविष्टमिव साध्यमेतच्छरीरादिव्यापारव्याहारयोगात् स्वशरीरादिवत् । नच एतावता स्वप्रकाशताहानिः स्वसंवेदनस्य । तथा

'सामान्यमेकं प्रत्यक्षम्·········· ।'

इति दर्शने कान्यकुब्जे गौरस्तीति प्रमाणान्तरेण प्रसिद्धो गोत्वसंबन्धोऽनुमीयमानोऽपि न गोत्वस्य प्रत्यक्षतामपहन्ति ।



तदेव हि तत् गोत्वं प्रत्यक्षसिद्धं तत्र अस्तीति सिद्धं तेन अनुमानेन उपबृंह्यते । यच्च येन अनुमानेन उपबृंह्यते, तत् तस्य न बाधकं भवति व्यवहारसाधनमिव प्रत्यक्षस्य । तथाच परप्रमातृतानुमानेन स्वप्रकाशत्वमेव उपोद्बल्यते स्वप्रकाशत्वस्य अभावे प्रमातृताया एव अनुपपत्तेः । तथाच देहे क्रियादर्शनादेवमध्यवसीयते । अत्र उत्तिष्ठामीति स्वप्रकाशमभिसन्धानमस्ति सावेगं ग्रासतात्पर्यदर्शनात् भुङ्क्ते इति, सुप्ते प्राणादिप्रेरणात् प्रेरयामीति सर्वत्र च अस्मदर्थविश्रान्तप्रकाशप्रतीतेरिति । बाधकस्य हि कारणं तद्रूपोन्मूलकत्वम्, अन्यथा सर्वं सर्वस्य बाधकं भवेत् । तद्विरुद्धं च तदुपबृंहकत्वमिति कारणविरुद्धोपलब्धिः । परशरीरस्य प्रमातृता परमनुमेया । तत्तु प्रत्यक्षमपि भवति, परप्राणादि तु स्वरूपेण अनुमेयमेव सर्वदेति शरीरग्रहणं न कृतम् । यथाच स्वसंतानेऽपि न स्वप्रकाशताहानिः, तथा परसंतानेऽपि । शरीरादिप्रमातृताभिमानदार्ढ्यात् तु परोऽयं प्रमातेति व्यवहारः । परमार्थप्रमाता तु स्वप्रकाश एव । सोऽपिच अस्य अनुमातृतया वर्तमानस्य प्रमातुः स्वप्रकाशत्वेन अवश्यं भाति अन्यथा प्रमातृताया एव अयोगात् । उक्तं हि

'यद्यप्यर्थस्थिति············· ।' (अ०प्र०सि०२०)

इति । प्रमातृत्वेन तु अभिमानास्पदं न भवति देहादिप्रमातृताभिमानदार्ढ्यमित्याशयेन अनुप्रविष्टग्रहणम् । अनुप्राणकतया प्रविष्टमनुप्रविष्टमिति । क अनुप्रविष्टमिति निरूपयितुं स्वशब्देन प्रत्यगात्मशरीरप्राणादिरुक्तः । स्वस्य देहादेः प्रमातृत्वेन यत् संवेदनं, तदनुप्राणकत्वेन प्रविष्टोऽवश्यं निर्भासनयोग्य इति यावत् । एवं परमार्थप्रमातुरेकत्वात् स्वसंवेदनप्रकाशस्य अनुमेयता क्वचिदपि न उपपन्ना, तत् कथं प्रकाश्यत्वं स्यादिति उक्तम् । अधुना तु

इदमाह—भवन्तु वा बहवः प्रमातारः, तथापि स्वप्रमातरि तावत् प्रकाश्यत्वं नास्ति; परप्रमातृषु तु तदनुमानबलादानीयेत । नच अनुमानेन क्वचिदपि स्वलक्षणं स्पृश्यते । सामान्यविषयत्वं हि तस्य अन्यथा संबन्धग्रहणाद्ययोगात् । ततश्च प्रमातरि परत्र यदि नाम अपोहरूपमप्रमातृव्यावृत्त्यात्मपरिगृहीतमवस्तुज्ञानाकारमात्रं वा व्यतिरिक्तमात्मत्वलक्षणं सामान्यं वा, तावता तदस्तु प्रकाश्यम् । वस्त्वन्तरस्य तु प्रमातुः कः प्रकाश्यताकलङ्कार्पणावकाश इति । '**अनुमानमपिच**' इति चशब्दः प्रमेयान्तरसमुच्चये । अपिशब्देन प्रत्यक्षस्य अत्र अप्रकाश्यतापादने नास्ति संभावनेत्याह । एवकारेण घटादावपि अनुमानदिशा न प्रकाश्यत्वं निर्वहतीति ब्रूते । '**अध्यक्षज्ञानावभासिनः**' इति साक्षात्कारानुप्रवेशयोग्यं स्वलक्षणमनया भङ्ग्या उक्तमिति घटादेरपि न अनुमेयत्वम् , किमङ्ग प्रमातृस्वलक्षणस्येति । ननु अवस्तुग्राहकत्वेऽपि अनुमानस्य वस्त्वध्यवसायितया प्रामाण्यम् । यदाह

'प्रामाण्यं वस्तुविषयं द्वयोः·········· ।'

इति । तदनुमानागमविकल्पैर्वस्तुभूते आत्मनि अध्यवसाय इति तथाध्यवसेयत्वात् प्रकाश्यत्वमागच्छेदेवेति आशङ्कां व्यपोहति '**आत्मा**' इति । आत्मेति विकल्पेन प्रमातेति विकल्पेन चेति संबन्धः । आदिग्रहणेन आगमादिग्रहणम् । द्वितीयश्चकारः पूर्वपक्षशङ्काद्योतकः । '**वक्ष्यते**' इति टीकाकृता । यद्यपि उक्तमादिसिद्धसूत्रे, स्वतःसिद्धसूत्रे च; तथापिच

'स्वातन्त्र्यामुक्त················ ।' ( १।५।१६ )

इति भाविसूत्राशयेन '**वक्ष्यते**' इति उक्तम् । ननु यदि साक्षादात्मा न प्रकाशते परकीयः, कथं परचित्तज्ञानं स्फुटाभं



भवेत् परात्मनोऽप्रत्यक्षत्वादनुमानेन स्फुटाभस्वरूपावेदनाच्चेति । आह '**सर्वथा**' इति । योगिप्रत्यक्षं हि इदं, न पुनरनुमानम् । तथाहि

'तस्माद्भूतमभूतं वा················ ।'

इति

'प्रत्ययस्य परचित्तज्ञानं संयमात् ।' (यो० सू० ३।२०)

इति न्यायेन धारणाध्यानसमाधिबलात् परचित्तेन सह अभेदं यदा भावयति, तदा वस्त्वनुसारेण सा भावना, तथा वस्तुत ऐक्यात् मायाकृतत्वात् भेदाभिमानस्य स्फुटाभं परचित्तं प्रकाशते, नतु अनुमीयते तदा परचित्तमिति । ननु अनुमानेन मा भूत् साक्षात्प्रकाश आत्मनः, प्रत्यक्षेण तु स्वलक्षणमेव प्रकाश्यते, तच्च परात्मनि भवत्येव योगिप्रत्यक्षं परचित्तज्ञानादेः प्रसिद्धत्वादिति स्यात् परप्रकाश्यत्वमात्मनः इति शङ्कां व्यपोहितुमाशयपदम् । एतदुक्तं भवति—तत्र योगिप्रत्यक्षेण रागादयश्चैत्ताः प्रकाश्यन्ते । तत्संवेदनेन सह योगिन ऐक्यापत्तेः संवेदनं स्वप्रकाशमेव भाति, नतु प्रकाश्यत्वेन । एवकारः समासानन्तरं प्रयुक्तो नतु मातृप्रकाशोऽत्र अभेदभावनासाध्यस्तस्य सदाप्रकाशत्वादिति वदन् '**पराशयस्यैव**' इति पूर्वपदार्थे स्वार्थं निवेशयति राजपुरुष एव अयमिति यथा, तथा स्वस्थानगतोऽपि एवमाह साक्षात्कार एव अयं पराशयस्य, नतु अनुमानमध्यवसायमात्ररूपमिति स्फुटाभस्य न सर्वथा अनुमेयत्वं कथञ्चिदिति । एवं परप्रमातुरपि प्रकाश्यत्वं नास्तीति समर्थितम् । बौद्धस्य तु परप्रमातृसिद्धिः संतानान्तरसिद्धिविध्वंसनं वासनाप्रबोधसूत्रे कुर्वता टीकाकारेण वितत्य विचारयिष्यते इति विरतमिह । एवं प्रसङ्गात् सिद्धान्तिना स्वदर्शने प्रमातृवृत्तान्तो विचारितो

मध्यग्रन्थेन अमुना '**अत एव न यस्य**' इत्यादिना '**नतु तदनुमानम्**' इत्यन्तेन । अधुना '**दृक् स्वाभासैव**' इति प्रकृतमेव प्रमेयं निर्वाहयति भङ्ग्यन्तरेण । तथाहि कश्चित् ब्रूयात् —ज्ञानं स्वप्रकाशं स्वसंताने, परसंताने तु प्रमात्रन्तरापेक्षया ज्ञानान्तरप्रकाश्यमपि भविष्यति विषयभेदेन विरुद्धधर्माध्यासस्य अकिञ्चित्करत्वात्, सैव हि प्रमदा दयितस्य सुखं सपत्न्याश्च दुःखं जनयति; नच विरोधः कश्चिदिति । तं प्रति उच्यते '**एकप्रमातृनिष्ठत्वेनापिच**' इति । अयमन्वभूत्, अहमन्वभूवमिति स्मृतिद्वयं विलक्षणं भासते । तत्र स्वानुभवनिष्ठायां स्मृतावनुभवस्य यदात्मरूपत्वमात्मविश्रान्तत्वेन अनन्यापेक्षामयमस्मदर्थविमर्शनीयम्, तत् चेत् न भाति; परनिष्ठानुभवनिर्भासनात् कोऽस्य विशेषः स्यात् । अथ अयमस्मदर्थस्तदनुभववेदनरूपस्मरणपरिनिष्ठितः सन् वेद्येऽपि अनुभवे संक्रामतीति उच्येत, तर्हि परानुभवस्मरणवेदनयोगेऽपि अन्वभूवमित्येव प्रतीतिः स्यात् । अथ योऽनुभवस्तदापि अस्मदर्थविश्रान्तियोग्य एव भाति, तत्स्मृत्या संवेद्यते इति का भाषा । अस्मदर्थो हि प्रकाशस्य आत्मविश्रान्तिरनन्यापेक्षा, स्मृत्या वेद्यत्वं च अन्यापेक्षेति विरोधः । यद्यपि परसंतानवर्तिनोऽपि ज्ञानस्य परप्रकाश्यत्वमनुचितं, स्वप्रकाशत्वमेव हि ज्ञानस्य अनौपाधिकं लक्षणम्, नच तत् विषयाभेदादन्यथा भवति, नहि नीलपृथिव्यादि अन्यापेक्षयापि जलादि संपद्यते, औपाधिकस्यैव रूपस्य तज्जनकत्वादेर्विपरिवृत्तिदर्शनात्, अन्यथा सर्वं विपरिवर्तेतेति भावस्य स्वरूपनियम एव न स्यादिति अन्यथाभवनस्य यदौपाधिकत्वं व्यापकं, तद्विरुद्धानौपाधिकत्वोपलम्भादन्यथाभवनं स्वप्रकाशत्वस्य ज्ञानीयस्य निषिध्यते । तेन ज्ञानस्य विरुद्धमेव



परप्रकाश्यत्वम् । अनेनैव आशयेन हि वक्ष्यति '**न ज्ञानस्वरूपमन्यसंवेद्यं स्वप्रकाशैकरूपत्वात्**' इति । एकग्रहणेन हि अनौपाधिकत्वेन तल्लक्षणतया तादात्म्यमुक्तं; तथापि अत्र तावत् विषयभेदप्रथनं धूलिप्रक्षेपणप्रायं विरोधपरिहाराय जात्युत्तरमपि स्यात्, इह तु तदपि नास्तीति अत्यन्तपदम् । अत्यन्तविरुद्धत्वमेव हेतुना घटयति '**नहि**' इति । '**तद्वेद्यः**' इति स्मृतिवेद्यः । '**तदापि हि**' इति स्मृतित्वेन यः संमतः कालः, तत्र । '**तत्स्थः**' इति स्वसंततिस्थ आत्मविश्रान्तिरूपोऽहमितिविश्रान्तियोग्यो न भातः स्यात् । भासतां तर्हि तथा । आह '**स्वप्रकाशो च**' इति स्वप्रकाशत्वपरप्रकाशत्वयोर्विरोध इति हि उक्तम् । अनया टीकया सूत्रं वृत्तिश्च भङ्ग्यन्तरेण व्याख्यातम् । स्वाभासैव या दृक् स्वसंतानरूपा, तया आत्मविश्रान्तियोग्यमहंविमर्शनीयं यत् ज्ञानं; तत्र अन्यवेद्यता न उपपन्ना । स्वसंवेदनैकरूपा स्वसंतानरूपतया आत्मताभिमानस्थानं या काचित् हि ज्ञप्तिः, सा अन्यसंविद्वेद्या न भवतीति । ननु यथा नीलादि कारणत्वात् संविदो विषय इति उच्यते, तथा अनुभवोऽपि स्मृतिज्ञानस्य कारणमिति विषयोऽस्तु,—इत्याशयेन आशङ्कते '**अथापि अन्यवेद्यता**' इति । अयं भावः—स्मृतिज्ञानस्य तावदनुभवज्ञानं पारंपर्येण कारणमिति यदि विषय उच्यते, रूपज्ञानस्यापि रसादिज्ञानं समनन्तरत्वेन परंपरया वा अवश्यं कारणमिति रूपज्ञानेनापि अशेषाणि रसगन्धादिज्ञानानि विषयीक्रियेरन् । एकज्ञातृसमवेतपदेन बौद्धमते कारणत्वेन विशिष्टं काणादमते तु एकार्थसमवायेन विशिष्टं ज्ञानत्वमविशिष्टमिति सूचितम् । तेन एकसमवायिज्ञानत्वविशेषादिति मन्तव्यम्, नतु ज्ञानत्वाविशेषमात्रात् । एवं हि निर्मलमेव अभिधी-

यमाने सति वासुकिज्ञानाद्यपि अस्मदादिज्ञानस्य विषयो भवेदिति सर्वः सर्वज्ञः स्यादित्यादिर्भूयान् विप्लवः, योऽग्रे वक्ष्यते। नचापि रूपरसादिज्ञानामन्योन्यवेदकत्वं युगपत् क्रमेण वेद्यते, प्रसज्यते तु,–इति सहैव प्रथमतः प्रसञ्जनीयः स्यात्,नतु इन्द्रियनियमाभावमात्रम् । तेन सूत्रेऽपि एवं योजना–रसविषया दृक् स्वाभासैव यथा रूपदृशा न वेद्या, तथा अन्या अपीति। अग्रे तु रूपदृगेव रसदृगिति अविशेषेण योजयिष्यति । ननु रसज्ञानं यदि प्रकाशते, तत् किं नियमेन ज्ञानोपाधिना प्रकाशितव्यम् । नहि कुम्भेन प्रकाशमानेन तदुपाधेर्विशिष्टबुद्धिमत्कृतत्वादेरवश्यं प्रकाशः, तत् कथमुक्तं सूत्राधिकं वृत्तौ **'अन्योन्यवेदने अन्योन्यविषयवेदनमपि स्यात्'** इति यस्य व्याख्यानाय टीकेयम्—रसोऽपि तदुपाधिः प्रकाशेतेत्याशङ्क्य आह **'ज्ञानप्रकाश एव हि'** इति । न इदमुपाधिमात्मानं कुम्भवत्, अपितु तत्प्रकाशरूपं; ततश्च रसस्य प्रकाशो रूपप्रकाशे प्रकाशते इति रसस्यापि प्रकाशनमङ्गीकृतमेव भवति । तथाङ्गीराच स्वहेतोश्चक्षुर्ज्ञानं रसादिविषयं रसादिप्रकाशनयोगात् जातमिति इन्द्रियनियमो हीयेत । सहि त्रिविधः प्रसिद्धः । इन्द्रियबलात् ज्ञानस्य कार्यस्य नियमः–चक्षुर्जनितं हि ज्ञानं रूपस्य एव प्रकाश इति । इन्द्रियस्य च नियमो योग्यतात्मा—येन नयनं रूपज्ञानमेव जनयति, न अन्यदिति । इन्द्रियाणां च नियम इयत्ता षडिन्द्रियाणीत्यादि, तत्र प्रथमं प्रकारद्वयं व्याख्यातुं **'ततश्च'** इत्यादिना तावत्पदेन तृतीयः सूचितः । तं च व्याचष्टे **'तदभावाच्च'** इत्यादिना । इन्द्रियाणां स्वभावे नियमाभावात् तज्ज्ञानानां च विषयनियमाभावात् चक्षुर्ज्ञानस्य सर्वविषयाभासनसामर्थ्यादनेकेन्द्रियकल्पना व्यर्था । अत्र हेतुः–**'एकेन्द्रियस्य**



**तथाभूतं सामर्थ्यम्'** इति । अत्रापि हेतुः–**'कार्यस्वभावस्य'** इत्यादि । अत्रापि हेतुः–**'अन्यथा'** इत्यादि । न चक्षुषा तावत् रूपज्ञानं जन्यते । तेन यदि नाम रसज्ञानं प्रकाश्यते, तावता शुद्धे रसे ज्ञानं प्रति अनुपाधिभूते प्रचिकाशयिषिते रसनेन्द्रियोपयोगो भविष्यतीति अनेकेन्द्रियकल्पना न व्यर्था । अत्र आह **'एवंच'** इति । चो हेतौ । एवं हि उच्यमानेनैव हेतुना केवलस्यापि रसस्य चक्षुरेव प्रकाशकं प्राप्तम्, केवलं संभवद्दृश्यमानमुपाधिभूतमपि न प्रकाशेत पिशाच इव; दिक्कालसमवायादयस्तु सर्वदैव उपाधिभूता भवन्ति बुद्ध्यादीनां रूपादय इवेति । तत्प्रत्यक्षताप्रक्षेऽपि न तेषां केवलानां प्रत्यक्षताप्रसङ्गः । तेन उपाधिभूतस्य प्रकाशनं संभवत् केवलप्रकाशाभावात् व्यावृत्तं केवलप्रकाशेन व्याप्यते इति उपाधिभूतप्रकाशनस्वभावेन केवलप्रकाशनस्वभावः साध्यते इति स्वभावहेतुः । ननु उपाधिभूतस्य रसस्य न चक्षुर्ज्ञानं प्रकाशः, अपितु तत्र निर्भासमानं रसज्ञानमिति उपाधिभूतप्रकाशनमसिद्धो हेतुरित्याशङ्क्य आह **'चक्षुर्जनिता'** इति । न तस्य रसज्ञानं प्रकाशस्तस्य स्वरूपेण असत्त्वात् । तत् हि तदा भवेत् यदि रसनेन्द्रियजनितं वर्तमानं तत् स्यात् । केवलं स्मृताविव अतीतानुभवो रसज्ञानमसदेव रूपज्ञानेन प्रकाश्यते इति रूपज्ञानमेव तदानीं सभ्रमज्ञानस्य उपाधिमतस्तदुपाधेश्च रसस्य प्रकाशनमिति न असिद्धो हेतुः । इन्द्रियनियमाभावे च अन्धाद्यभावप्रसङ्गः, एकदा च अवलोकितविषयस्य तद्विषयतदनुभवनाशेऽपि तत्स्फुटीभावप्रसङ्गः इति न किंचित् कस्यचित् नष्टं स्यादिति । एवं क्रमभाजां ज्ञानानामन्योन्यवेदकत्वे दोष उक्तः । इदानीं वर्तमानानां यौगपद्येन ज्ञानानामन्योन्यवेदकत्वे दोषमाह **'साकारवादे च'**

इति । नटमल्लनर्तकीप्रेक्षादौ नर्तकीं वयं पश्याम इत्यस्यां प्रतिपत्तौ यावन्त एकैकव्यतिरिक्ताः सामाजिकाः, तावन्ति दर्शनानि प्रत्येकं वेद्यानि । तानि सत्यपि बाह्ये आकारवन्ति, तच्छायायोगेन असत्येव बाह्ये तेनैव बाह्येन आकारेणेति एकैकस्य अनन्तनर्तक्यवभासो भवेत् । एकनर्तक्यवभासश्च संवेद्यते । तस्मिन् विषये यत् ज्ञानमेकैकस्य संबन्धि, तस्य वेदकानि यानि ज्ञानान्तराणि, तच्च वेदकं येषां ज्ञानान्तराणां; तेषामाकारवतामन्योन्यवेदकरूपाणामनेकत्वादेकनर्तक्याभासेऽपि आभासानामनेकत्वं स्यादिति संगतिः । ननु सत्यं तत्र प्रत्येकमनेकावभासः, किंतु यादृक् देशकालस्वरूपतः एकस्य आभासः, तादृगेव अपरस्येति सर्वथा तादृग्रूप्यप्रवेशमयात् समानाभिहाररूपात् सादृश्यादनेकत्वं न आभाति । जलज्वालाप्रभासंमीलनेऽपि हि उपचयोऽधिकः स्यात् । इह तु सर्वथा ताद्रूप्यात् कथमनेकत्वं भासतामिति पराशङ्कां निवारयति **'यत्र'** इति । एकस्य सामाजिकस्य यदा चक्षुषि कामलादोषस्ततस्तस्य मृगमदानुकारिकेरललासिकावदनबिम्बमपि कीरकामिनीवदनमिव कनकगौरमाभासते, तदा तदाभासस्य प्रत्येकं वेद्यत्वादन्याभासानां च कामलिनापि वेद्यत्वात् सर्वस्य श्यामलपीतलरूपो मिलितोऽवभासः स्यात् । ननु क एवं व्यामिश्रावभासो दृष्टः इति । आह **'यथा'** इति । एकत्र चक्षुषि रेखातिमिरदुष्टे, चक्षुरन्तरे च विमले चञ्चलाचञ्चलघटसंवित्तिर्भवति । एवमेकसंततौ क्रमेण नटादिप्रेक्षायां च यौगपद्येन ज्ञानं ज्ञानान्तरवेद्यं दोषमापादयेदिति उक्तम् । अधुना तु इदमाह **'नचापि'** इत्यादिना **'प्रसज्यन्ते तु'** इत्यन्तेन—इह न दिक्परीक्षायां तावदबाधितमस्ति ज्ञानमेतद्दृश्यमानं पश्यामीति । प्रत्येकं च तत्र एकसंततिपतितता । नचापि युगद्भाविनां कार्यकारणभावः ।



तथापि च दृष्ट एव वेद्यवेदकभाव इति सर्वप्रमातृगतानां ज्ञानानामनियमेन वेद्यवेदकत्वे महान् विप्लव इति । ननु संस्कारजत्वमत्र नियामकं भविष्यति, तत् सर्वोऽयमुक्तो दोषः प्रतिसमाहित इत्याशयेन आह **'अथापि'** इति । **'स्वभावनियमात्'** इति संस्कारजत्वाभावकृतात् । **'स्वभाववैचित्र्यात्'** इति संस्कारजत्वकृतादिति व्यतिरेकान्वयद्वारेण अपौनरुक्त्यम् । यदि वा पूर्वेण कार्यस्य ज्ञानस्य स्वभावभेद उक्तः, द्वितीयेन तु तत्कारणस्य संस्कारस्येति । परो यथा एकप्रहारेण दोषान् परिजिहीर्षति, तथा सिद्धान्तवादी परप्रकाशं ज्ञानमित्यस्य पक्षस्य मूलत एव उत्थापनं न भवतीति दर्शयति **'उक्तं हि तावत्'** इति **'दृक् स्वाभासैव'** इत्यत्र । वस्तूनां निजं लक्षणमनौपाधिकं विपरिवर्तते इति आशयः । संस्कारजत्वेन तर्हि किं कृतमिति चेत्, आह **'तत्रापि'** इति स्वप्रकाशैकरूपत्वेन अन्यथाभवति अपि भिन्नात्मनोऽनुभवादन्यरूपस्यापि स्मरणस्य सादृश्यं विषयच्छायाकृतं स्यात् नाम । अनन्तसंस्कारजत्वेऽपि पूर्वकं ज्ञानमाभास्यते तेन । एवं हि सति द्वयं संभाव्यते—अनुभवगतस्य ग्राह्यांशस्य प्रकाशो ग्राहकांशस्य वा प्राक्लृप्तं निराकरोति ग्राह्यस्य स्फुटाभासस्य अनुभवसंचेतने, नतु स्मृताविति । अनेन योगिज्ञाने ग्राहकात्मनि यथा परसंवेदनं पृथगेव ग्राह्यपक्षनिक्षिप्तं प्रकाशते, न एवं स्मृतिज्ञाने स्वानुभवः । घट एव हि अत्र अस्फुटतया ग्राह्यभूमिकाधिशायीति । अनेन द्वितीयं प्रकारमपाकरोति । संस्कारेण तर्हि किमपकृतम् । आह **'सादृश्यमात्रम्'** इति । मात्रग्रहणमतिरिक्तप्रकाश्यत्वनिरासाय । यत् किल नष्टं, न तत् संस्कारजे वस्त्वन्तरे आवेशं संबन्धमेति पूर्वसंनिवेश इव संनिवेशान्तरे । नष्टश्च अनुभव इति स्वसंस्कार-

जेऽपि स्मरणे विषयतया न संबन्धमेति । संबन्धगमननिबन्धनं हि संनिधानम् । असंनिहितसंबन्धो रामोऽस्माकं राजा,–इति राजन्वद्विश्वमद्येति अनियमः । तद्विरुद्धत्वं च नष्टत्वमिति कारणविरुद्धोपलब्धिः । ननु अनुभवेन स्मरणमेकविषयं कथं स्यादिति अयं यत्नो वर्तते । तत्र अनुभवे स्मृत्या अनाभास्यमानेऽपि सादृश्यं तावत् संस्कारजत्वात् सिद्धम् । तच्च विषयद्वारेणेति एकविषयत्वमपि सादृश्यादुपचरिष्यते इति सिद्धो व्यवहारः

'स्मरणादभिलापेण.................. ।'

इतीत्याशङ्क्य आह '**वस्तुस्थित्यैव**' इति । यत् वस्तु स्थितं प्ररूढं भवति, तदवश्यं संस्करमाधत्ते । प्ररोहजो हि संस्कारलक्षणो विशेषः, केषांचित्तु प्ररोह एव पटीयस्त्वं संस्कारो विशेषः । यत्प्रज्ञालंकारः

'प्ररोहोऽस्याः संविदः पटीयस्त्वं स एव संस्कारो वाच्यः ।'

इति । यत्र च संस्कार आधीयते, तत्र सादृश्यमिति उभयं भूर्जसंनिवेशशरगमनादौ दृष्टम् । इह च पूर्वज्ञानं स्थितमभूत् । तदवश्यं संस्कारसादृश्याभ्यां भाव्यमिति कल्प्यते, ननु सादृश्यं ज्ञातुं शक्यम् । द्वयवेदी हि कापि अक्रमेणैव संनिवेशद्वयं गोगवययोरिव, कचित् क्रमेण भूर्जे इव परापररूपं पश्यन् तृतीयस्तत्सादृश्यमवेयात्, ननु इह तृतीयोऽस्ति । स्थिरमात्मानमभ्युपयतापि वैशेषिकेण दुःसमर्थमेकविषयत्वम् । स्मृत्यनुभवयोर्हि न ग्राहकं तृतीयं ज्ञानमस्ति यत् तयोः सादृश्यमवगत्य एकविषयतामध्यवस्येदुपचरेत् वा । न अनुभवस्मरणयोः सादृश्यं वेद्यं तृतीयानुपलब्धेरिति कारणानुपलब्धिः । ननु सादृश्यादेव निश्चेयमिदमेतत्संस्कारजमिति । तत्र यदि सादृश्यं न वेद्यं, तर्हि संस्कारजत्वमपि कथंकारं निश्चेयम् । नहि सर्वं वस्तु संस्कारं



करोति भूतलादपसारिते लघुनि तृणप्राये तदसंभवात् । सत्यमिदमेवम्, किन्तु अभ्युपगम्यवादमात्रमेतदिति सिद्धान्ती प्रत्युत अवज्ञामत्र दर्शयति । '**यदि नाम**'इतिनिपातसहितेन '**स्यात्**' इत्यनेन '**तदवगतिः**' इति सादृश्यस्य '**अवगतिः**' इत्यनेन '**तद्गतिः**' इति सूत्रांशस्य व्याख्यान्तरं कृतम् । उपचारश्च न वस्तुव्यवस्थाकारी एकस्य ज्ञानस्य गोविषयत्वेऽन्यस्य वाहीकविषयत्वे सादृश्यादेकविषयतायामुपचरितायामपि वास्तवैकविषयसंवेदनाधीनव्यवहारानिर्वाहात् । ततश्च उपचारस्तावदकिंचित्करोऽत्र, तादृगपिच न उपपद्यते इति परपक्षस्य सर्वथा दौर्बल्यमिति अपिशब्दः सूत्रार्थं प्रकृते प्रमेये योजयति उपसंहारद्वारेण '**तदेवम्**' इति । '**संस्कारजत्वेऽपि**' इति कथंचिदभ्युपगतेऽपीति अपिशब्दः ॥ २ ॥

**अथातद्विषयत्वेऽपि स्मृतेस्तदवसायतः ।**
**दृष्टालम्बनता भ्रान्त्या तदेतदसमञ्जसम् ॥ ३ ॥**

ननु यदि स्मृत्यनुभवयोरेकविषयत्वं पारमार्थिकं भवेत्, तत् तत्समर्थनायां प्रयस्येत अपि; ननु तथा । तथाहि—यस्तावदतीतः पिता स्मरणे भाति, स तदा नष्टः कथं स्मरणे भायात् । यथा स निर्दग्धः पिता न हसति, न कण्डूयति, तथा भात्यपि नेति निश्चयः । नच अस्य वर्तमानातीतकालद्वययोगः पितुर्विरोधात् । अभ्युपगमे च सर्वतो व्यावृत्तं रजतं कथमन्यत्रापि अनेकं स्यात् । भ्रमश्च सः । नच असावस्फुटः स्मार्तः पित्राभासो देशकालस्वरूपानियतस्तद्विपरीतेन आनुभविकेन आभासेन एकतामुपगन्तुमुत्सहेत । तेन अनिर्भासमाने एव तस्मिन् विषयेऽभिमानमात्ररूपात् तदध्यवसायात् तदवभासिकेति स्मृतिर्दृष्टविषया उच्यते भ्रमवशादिति कारिकापादत्रयार्थः संक्षेपव्या-

ख्यया अवतारितो **'भ्रमः'** इत्यन्तेन । तथाहि भट्टशङ्करनन्दनः स्मृतिदिशैव अर्थधर्मतां प्रकाशमानताया न्यषेधीत्

'अर्थो न भासते भ्रान्तिस्मृत्योरयोगात् बुद्धिकालत्वम् , नच एकता देशादिभेदात् तत्त्वे वा निजदेशादिवेदनम् ।'

इति । **'तदेतदसमञ्जसम्'**इति संक्षेपेण व्याचष्टे**'इत्यपि'** इत्यादिना । स्मृतिरसदेव असत्ख्यातिपक्षे आलम्बते, वासनोपकल्पितं वा ज्ञानाकारमात्माख्यातिपक्षे आभासयति प्रकाशयति; नतु प्राच्यमनुभवं तद्विषयं वा उभयस्यापि स्मृतिकाले नास्तित्वात्, तत् केवलमभिमानसारत्वेन अध्यवस्यति तदनुभवकालावलम्बनेन अध्यवसायस्य स्वरूपं दर्शयति **'सोऽनुभूतः'** इति । स इति अनुभवकालस्पर्शः । अनुभूत इति अनुभवस्य अर्थस्य च अध्यवसायः । असतोऽपि आत्मनो निर्भासमानस्य तेन अनुभूतेन अध्यवसीयमानेन अभेदानध्यवसायमयादभेदाध्यवसायात् भ्रमादनुभूतालम्बनत्वं स्मृतेर्न विवेकिनः प्रतियन्ति । असोऽसन् आत्माकारो वा विषयो यस्याः, स च अनुभवोऽर्थश्च न विषयो यस्या इति सूत्रार्थः । **'भ्रान्त्या'** इति भ्रमरूपत्वेनेत्यर्थः । **'असमञ्जसम्'** इति वृत्तौ व्याख्यातं नेतिसमस्तवाक्यार्थनिषेधेन । चकारेण आशङ्काद्योतकेन **'अथ'** इति व्याख्यातम् । **'अनन्तर'** इत्यादिना टीकाकारोऽनन्तरसूत्रे एतस्मिन्नर्थे हेतुत्वेन वाक्यवृत्तोपनतेन योज्ये इति दर्शयति । ननु घटे जलमितिवत् न इयं शुक्तौ रजतमिति मतिः, तत् कथमुक्तं **'शुक्तौ'** इति वृत्तावित्याशङ्क्य आह **'शुक्तिदेश'** इति । तं देशमवष्टभ्य आलम्बनीकृत्य तदभिमुखतया यतः प्रवर्तते, ततस्तदाधारत्वमुक्तम् । बाधकोदयसमं प्रमात्रन्तरसंवेदनं च अपेक्ष्य **'विपरीत'** इति **'नास्त्येव'** इति **'आकार'** इति वचनैः वित-



थासदात्माख्यातयस्तिस्रोऽपि सूचिताः । इह अत्र अवज्ञां दर्शयितुं भ्रान्तिस्तावदियं स्मृतिरन्यभ्रान्त्यवैलक्षण्यादिति साध्यम् । विपरीतख्यातिमेव भ्रान्तिमग्रे सौगतदृशि समर्थयिष्यते

'भ्रान्तित्वे चावसायस्य············ ।' ( १।३।५ )

इति सूत्रे । वैपरीत्यं च प्रवृत्तिप्राप्तिविषयमपेक्ष्य प्रेप्सिताध्यवसितमर्थक्रियाकारित्वं संभवद्वस्तुभावं च अपेक्ष्येति **'शुक्तेरन्यदेशाच्च रजतात्'** इति उक्तम् । **'रजतविकल्प'** इत्यनेन दृष्टान्तं वृत्तौ पूरयन् **'अत्रापि'** इति दार्ष्टान्तिकं स्मरणविकल्पं समीकरोति । **'ततः'** इति वितथादिख्यातिरूपत्वात् ॥३॥

**स्मृतितैव कथं तावद्भ्रान्तेश्चार्थस्थितिः कथम् ।**
**पूर्वानुभवसंस्कारापेक्षा च किमितीष्यते ॥ ४ ॥**

एतत् पूर्वोक्तं निराकरोति **'कथं'** सर्वतोमुखं समस्तोक्तवस्तुदूषणद्वारेण । तथाहि अन्यत्र किंचित् निराक्रियते—यथा श्रोत्रग्राह्यो वर्णात्मा नित्यः शब्दः समयापेक्षी वाचक इत्यत्र नित्यत्वमेव निराक्रियते, न अन्यत्; तदंशदूषणेन तु वाक्यार्थोऽयं दूषितो भवेत् । इह तु स्मृतिः संस्कारजा भ्रान्त्या पूर्वानुभूतार्थव्यवस्थापिकेति प्रतिपदार्थं तद्द्वारेण च वाक्यार्थं इति सर्वमेतत् निराक्रियते । यः स्वरूपविशेष इह विचारचित्रे भित्तित्वेन अवलम्ब्यते, स एव न उपपद्यते इति तावच्छब्दार्थः । पूर्वसूत्रार्थं टीकाकारो दूषणापादनायामनुवदति **'यद्यसदेव'** इति ततः स्मृतित्वं नाम मुख्यं रूपं न युक्तमिति संबन्धः । तच्छब्देन पूर्वश्लोकोक्तः इह अनूदितोऽर्थः परामृष्टः । अनुभूतस्य अनुभवप्रकाशितस्य विषयस्य असंप्रमोषः कंचित्कालं मध्ये मुषितस्येव न पूर्णः प्रमोषोऽपहारः पुनःप्रकाशनेन लाभादिति स्मृतेर्मुख्यं रूपम् , येन ज्ञानान्तरेभ्योऽस्या विशेषः । तदेव पूर्व-

सूत्रार्थेन उन्मूल्यते । अनुभवो न प्रकाशते इति तद्विषयोऽपि नैव प्रकाशते, अपितु सम्यक् प्रकर्षेण मुषित एव असौ जात इति हि पूर्वसूत्रार्थः । **'अनुभवानाभासनात्'** इत्यनेन **'पूर्वानुभवाप्रकाशात्'** इति वृत्तिर्व्याख्याता **'तद्विषय'** इत्यादिना **'तद्विषयसंप्रमोषे'** इति **'अनुभूतविषय'** इत्यादिना **'अध्यवसायमात्रात्'** इति **'विशेषव्यपदेश'** इत्यादिना **'स्मृतित्वं न युक्तम्'** इति, मुख्यपदेन सौत्रं तावत्पदम् । **'अन्यथा'** इति वस्तुविषयत्वेन । ननु अनुमानं भ्रान्तिर्व्यवस्थापयति च वस्तु, तद्वत् स्मृतिरपि सुखसाधनत्वादि व्यवस्थापयिष्यतीत्याशङ्क्य आह **'अनुमानस्य'** इति । भवतु तावत् भवन्मतेऽनुमानं भ्रान्तिः । यथोक्तं भवद्भिः

'अतस्मिंस्तद्ग्रहात्........................ ।'

इति, किन्तु पुनरपि उक्तं भवद्भिरेव

'..........भ्रान्तिरपि संबन्धतः प्रमा ।'

इति,

'यो हि भावो यथाभूतः स तादृग्लिङ्गचेतसः ।
हेतुस्तज्जा तथाभूते तस्माद्वस्तुनि लिङ्गधीः ॥
लिङ्गलिङ्गिधियोरेवं पारंपर्येण वस्तुनि ।
प्रतिबन्धात्तदाभासशून्ययोरप्यवञ्चनम् ॥'

इति । एवं यत् पारंपर्यं, तदिह स्मरणे यदि भवेदतीतवृष्ट्यनुमानवदपूर्वनिश्चयरूपमेव इदं पूर्वानुभवविषयमनुभूतवस्तुविषयं वा ।

'पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसंप्रतिपत्तेः ।'
'प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ।'
'वीतरागजन्मादर्शनात् ।' ( न्या० सू० ३।१।१९,२२,२५)



इत्यादिहेतोर्बालकल्पितस्मृतिविलक्षणेन पूर्वजन्मानुभवतद्विषयानुमानेन सदृशं स घट इति ज्ञानं स्यादिति पूर्वप्रकाशनात्मकनिश्चयप्रत्युज्जीवनपरमार्थस्य स्मृतित्वस्य हानिः । तस्मादनुमाने अस्तु पारंपर्यम्, इह तु असिद्धम् । तदिह अनुमानभ्रान्तेः स्मरणभ्रमस्य विशेषः,–इति कथमर्थं व्यवस्थापयेदसौ । दृष्टं स्मृतेरर्थव्यवस्थापकत्वं सर्वत्र व्यवहारे स्वगृहगमनार्धकृतसमापनादौ । एवमिह भ्रान्तेरपि अर्थप्रतिबन्धेन भविष्यति व्यवस्था । सतु स्मृतौ नास्तीति कथमर्थं व्यवस्थापयेदिति उक्तं न काचन भ्रान्तिरर्थव्यवस्थापिका । तत् कथं स्मृतिरपि तथा भवेदिति तु अनन्तरसूत्रे वक्ष्यते इति न पुनरुक्तता । ननु विकल्परूपा स्मृतिः, विकल्पश्च सर्वो भ्रान्त इति तयापि तथा अवश्यं भाव्यमित्याह **'नचापि'** इति । बहुवचनेन इदमाह—न औत्सर्गिकं सर्वस्य विकल्पस्य भ्रान्तत्वं येन स्मृतेरपि कुनृपप्रवर्तितमण्डलदण्डन्यायेन आयातं तत् स्यात् । यावता वक्ष्यते एतत् **'द्विचन्द्रेऽपि तदवसायो न भ्रान्तोऽपितु बाह्यतावसाय एव'** इति अनन्तरसूत्रे । यतो यदेव विपरीतार्थवेदनं, तदेव भ्रान्तम् । नच तथा स्मृतिः । नहि तया पूर्वप्रकाशरूपत्वमात्मनि अनुमानज्ञानवदङ्गीक्रियते येन स्वप्रतिभासे अनर्थे अर्थाध्यवसायेन प्रवृत्तेरिति उपनतं भ्रान्तित्वं भवेत् । स्मृतेर्हि पूर्वानुभव एव प्रत्युज्जीवित एव प्राणभूतः । न अस्यामपूर्वं किंचित् प्रकाशते येन वैपरीत्यमाशङ्क्यते । एतदर्थमेव वृत्तौ पूर्वानुभूतग्रहणमनुमानविकल्पनाद्याविव अपूर्वप्रकाशतानिराकरणतात्पर्येण प्रयुक्तमिति दर्शयति **'तदाह'** इतिवचसा । इयता प्रथमं व्याख्याय द्वितीयं कारिकार्धं व्याचष्टे **'पूर्वानुभवस्य'** इति । **'अन्यथा तु'** इति अवस्तुविषयत्वे । **'अस्या'** इति स्मृतेः संस्कारात् जन्म यत्

कल्पितं, तेन किं प्रयोजनम्। तत्संस्कारात् हि तत्सादृश्यं पूर्वसंनिवेशेन इव अपरस्य संनिवेशस्य, तदावेशो वा तत्संसर्गाविभागप्रतिपत्तिकारी चण्पकामोदेन इव तैलस्य । नच स्मरणस्य पूर्वानुभवेन सादृश्यं, प्रत्युत विपरीताविपरीतविषयतया अत्यन्तवैलक्षण्यम्। सादृश्यमेव च यत्र न अस्ति, तत्र आवेशः शङ्कनीयोऽपि न भवति । सहि तादात्म्यमिवेत्येवंरूपप्राणः। ननु एतदेव संस्कारजत्वम्—यदनुभवज्ञानात् पारंपर्येण तदुत्पद्यते। तर्हि पीतज्ञानमपि समनन्तरप्रत्ययादुपादानकारणात् व्यवहितात् वा उपादानोपादानात् नीलज्ञानादुत्पद्यते। तत् तदपि संस्कारजं किं न उच्यते । पूर्वानुभवेन अस्पर्शोऽसादृश्यमनावेशश्च सप्तम्या हेतुत्वेन निर्दिष्टो वृत्तौ भिन्नयोगक्षेमत्वे साध्य इति विवृणोति 'ततः' इति । योगोऽलब्धलाभः, इह तु तदुपलक्षितं प्रकाशलक्षणं स्वरूपम्, क्षेमं लब्धपरिरक्षणं, तदुपलक्षितस्तु इह विषयांशः । तदुभयमनुभवात् भिन्नं स्मृतेः प्रकाशस्य अपूर्वत्वात् विषयस्य च अवस्तुत्वादिति । ननु वृत्तौ यदुक्तं **'भ्रान्तेः संस्कारजत्वम्'** इति, तत् कथम्। नहि भ्रान्तिः संस्कारजेति कस्यचिदुपगमः। नच भ्रान्तिमात्रं सर्वं स्मृतिरिति पुरो रजतज्ञानादौ स्मृतित्वानुपगमात्। ततो भ्रान्तेः संस्कारजत्वं न वक्तव्यम्, विशेष्य वा वक्तव्यं स्मृतिरूपायाः। **'भ्रान्तेः संस्कारजत्वे को ग्रहः'** इति चोद्यद्वयं निरस्यति **'तत एव'** इति। भ्रान्तेः संस्कारजत्वं यदुक्तं, यच्च भ्रान्तेरिति केवलमुक्तम्, तत् स्मृतित्वेनापि अभिमतस्य ज्ञानस्य भ्रान्तितामात्रम्, नतु कश्चन विशेषलेशः । यतः सारं न्यायोपनतं रूपं, ततो हेतोर्भ्रान्तितामात्रसारत्वम्। कुत इत्याह **'अन्य'** इति। नीलशब्दो नीलज्ञाने, मात्रशब्दो निर्विषयत्वं तस्य आह। तद-



यमर्थः—अन्यत् ज्ञानं समनन्तरप्रत्ययरूपमुपादानं यस्य नीलज्ञानस्य विषयरहितस्य भ्रान्तात्मनः, तत्सारत्वात् तत्तुल्यत्वात् नीलस्मरणस्य । तत्तुल्यत्वं कुत इत्याह **'तत एव'** इति अनुभवास्पर्शायातादनुभवभिन्नयोगक्षेमत्वादित्यर्थः। **'भ्रान्तेः संस्कारजत्वम्'** इति अन्ये पठन्ति। तत्र एवं योजना—इह वृत्तौ **'संस्कारजत्वे को ग्रहः'** इति वचनेन संस्कारजत्वं ग्रहस्य अभिनिवेशस्य मिथ्याज्ञानस्य विषय इति भ्रान्तिरूपमुक्तम्। तत् कथम्। नहि संस्कारजत्वं स्मृतेः। भ्रान्तिर्भ्रान्तेरिति विशेष्य वक्तव्यम्; कथं केवलमुक्तमिति चोद्यद्वयस्य उत्तरम् । **'तत एवच'** इति। **'भ्रान्तेः संस्कारजत्वं'** यदुक्तं, **'भ्रान्तेः'** इति च केवलमिति अविशेष्य यदुक्तम्, तत् न अयुक्तं व्याख्यातात् हेतोरिति । एतदुक्तं भवति—परमते स्मृतिर्नाम विचारिता। नच अस्या भ्रमान्तरेभ्यो विशेषः कश्चन स्थापयितुं शक्यते येन विशेष्येत यत्सिद्धये संस्कारजत्वमङ्गीक्रियमाणमुपयोगबलेन प्रमाणसिद्धत्वादभ्रान्तिरूपं भवेदिति युक्त एव अयमुक्तिक्रम इति। तेन स्मृतिरेव न यदि भ्रान्ता, नच संस्कारजा, नच अर्थव्यवस्थापिकेति स्मृतिः संस्कारजा भ्रान्त्या अर्थव्यवस्थापिकेति सर्वतोमुखमेतत् निराकृतं भवति ॥ ४ ॥

भ्रान्तित्वे चावसायस्य न जडाद्विषयस्थितिः।
ततोऽजाड्ये निजोल्लेखनिष्ठान्नार्थस्थितिस्ततः ॥५॥

ननु पूर्वानुभवः, तद्विषयश्च तया अध्यवसीयते इति इयता सादृश्यम्, नतु सर्वात्मना। सादृश्यसिद्धये च संस्कारजत्वम्। प्रत्यक्षविकल्पेन तु प्रत्यक्षविषयो यद्यपि अध्यवसीयते, तथापि स प्रत्यक्षानुभवो न अध्यवसीयते इति न अस्य स्मृतितुल्यत्वेन

संस्कारजत्वमुच्यते। एवंस्थिते च तदध्यवसाय एव स्मृतेस्त-द्व्यवस्थापकत्वम्। भ्रान्तिस्वभावोऽपिच अयमध्यवसायो यथा-वस्तु प्रवृत्त इति न अस्य स्मृत्यध्यवसायस्य किंचित् दुष्यति। सर्वत्र च अध्यवसायादेव अर्थव्यवस्था। स च भ्रान्त एवेति भ्रान्तेरेव सामान्यमध्यवसीयते अभिमन्यते निश्चीयते विक-ल्प्यते इति शब्दमालाप्रयोगेऽपि भवन्तं पृच्छामः—किमनेन वस्तु प्रकाश्यते वा न वा। यदि तावत् प्रकाश्यते, भ्रान्तत्व-मनुपपन्नम्। प्रकाशनांशे प्रकाश्यमानांशेन भ्रान्तित्वं हि निराक-रिष्यते वितत्य। अथ अवसायस्य भ्रान्तित्वं समर्थयितुं प्रका-शनरूपत्वं त्यज्यते, अवसायरूपता अन्यैव काचिदुच्यते; तर्हि तस्मिन् व्यवस्थापनीये पूर्वानुभूतेऽर्थे स स्मृत्यध्यवसायो जडः, तदप्रकाशनात् नीलज्ञानमिव नीलमिव वा पीते इति कथमसौ तस्य व्यवस्थितये स्यात्। संविन्निष्ठा हि असौ। ननु प्रकाश-रूपत्वमस्ति स्मृत्यध्यवसायस्य स्वसंवेदने स्वाकारे च, तत् कथ-मस्य जडत्वम्। तर्हि ततः प्रकाशनात् स्वात्मनिष्ठात् स्वाकार-निष्ठाच्च यदजाड्यं, तस्मिन् सत्यपि ततोऽध्यवसायादर्थस्य बाह्यस्य स्थितिर्व्यवस्था न घटते तस्य तस्मात् स्वात्मनः स्वाकाराच्च अन्यत्वादिति सूत्रार्थः। **'निजोल्लेख'** इति **'स्वात्मोल्लेख'** इति सूत्रवृत्त्योर्द्वन्द्वसमासः। निर्विकल्पकस्य भ्रान्तत्वं न कचित् संभवतीति सूत्रे यदनुवादमुखेन अस्पष्टमुक्तं, यच्च परमतमध्य-वसायस्यैव सर्वत्र व्यवस्थापकत्वम्, सच भ्रमरूप एव। तत कोऽयं पर्यनुयोगो भ्रान्तेरर्थव्यवस्थितिः कथमिति। तदुभय-मपि एतत् वृत्तौ विधिमुखेन स्फुटयति **'अध्यवसाय एव'** इति। भ्रान्त्या भ्रमरूपेण उपलक्षितो यो विषयव्यवस्थापक उक्तः, सोऽध्यवसाय एव, नतु स्वसंवित्। नापि स्वस्य प्रकाश-



मानस्य रूपस्य संवित् निर्विकल्पकरूपा। तदियमध्यवसाये एव कृतपदा भ्रान्तिरूपता। स एव च अर्थस्य व्यवस्थापको भ्रम-रूपेण दृश्यविकल्प्यैकीकाराभिमानेनेति। अत्र आह सिद्धान्ती **'स च'** इति। चशब्दस्तर्हिशब्दार्थे परमतानुपपत्तिमाह। स तर्हि अध्यवसायो जडो व्यवतिष्ठापयिषिते बाह्येऽर्थे तस्य अप्र-काशरूपत्वात्। यदि तु तत्र प्रकाशरूपः स्यात, योगिन इव तत्र पूर्वस्मिन्नर्थे विकल्पनीयाभिमते स्फुटतया पूर्वप्रकाशः स्यादिति न स्मृतिता, नापि अध्यवसायता भवेदनुभवैकरूपत्वात्। अथ न बाह्येऽसौ प्रकाशो येन अनुभवरूपत्वं, नापि सर्वथैव अप्रकाशो येन जडः; किन्तु स्वात्मनि स्वोल्लेखे च स्वाकारे प्रकाशरूप एव असौ। तर्हि पुनरपि अर्थे बाह्ये जड एवेति न बाह्यार्थव्यवस्थाया हेतुः स्यात्। सा हि संविन्निष्ठा भवति, नतु कदाचित् जडनिष्ठेति। भ्रमरूपेण च यदबाह्यबाह्य-योरेकीकरणं, न तेन बाह्यस्य किंचित् स्पृष्टं, तत्स्पर्शे भ्रान्त-त्वायोगात्। नहि रजतज्ञानेन सत्यरजतस्य शुक्तेर्वा व्यवस्था काचिदिति तात्पर्येण वृत्त्यर्थः। एवं सूत्रे वृत्तौ च अध्यवसाय-मात्रस्य रूपं दूषितम्, तद्द्वारेण तु स्मृत्यध्यवसायस्येति। अती-तग्रहणं च वृत्तौ विकल्पोपलक्षणमुत्प्रेक्षाविकल्पस्यापि पूर्वानुभ-वोपजीवनप्रवेशेन वस्तुतोऽतीतत्वादेवेति टीकापि अध्यवसाय-मात्रनिष्ठैव। यत्तु तत्र **'स्मृतिज्ञानं हि'** इति, तदध्यवसायो-दाहरणन्यायेन प्रकृतसमर्थनाभिप्रायेण चेति मन्तव्यम्। सौग-तमतेऽपि टीकाकारो भ्रान्तितत्त्वं दर्शयन् निर्विकल्पके तावत् न भ्रान्तिता, नापि सर्वत्र विकल्पे इति घटयति **'संविदाभा-समान'** इति। स्वसंविदि तन्निष्ठे च आकारे न काचन संविद-विकल्पिका, विकल्पिका वा भ्रान्तिरुपपद्यते। यस्या एव हि

संविदो बाधकप्रमाणेन विपरीतनिष्ठत्वमावेद्यते, सैव अनवस्थितिरूपत्वात् भ्रान्तिर्भवितुमर्हति। ननु वस्तुवृत्तेन यत् विपरीतं वेदनं, तत् भ्रान्तिः, किं बाधकेन यस्या वैपरीत्यनिष्ठत्वमावेद्यते इत्यनेन विशेषेण। आह **'अन्यथा'** इति यदि अयं विशेषो न आश्रीयते इत्यर्थः। **'सुखसंवेदनम्'** इति नीलालम्बनमेव ज्ञानं तद्विपरीतसुखसंवेदनरूपम्। **'सौगतदृशि'** इत्यनेन विशेषेण पटविपरीतघटसंवेदनादि अवधीर्य सुखसंवेदनमपि भ्रान्तं स्यादिति उक्तम्। ननु वैपरीत्यं तद्देशावष्टम्भकृतं वास्तवं गृह्यते। नच अनीलदेशरूपावष्टम्भेन सुखादीनां वेदनम्, अपितु संविद्रूपावष्टम्भेन। तत एव हि चैत्ता एते सुखादय उच्यन्ते। एकचन्द्रदेशावष्टम्भस्तु द्विचन्द्रस्येति वस्तुतस्तद्विपरीतोऽसौ निर्विकल्पकेनापि गृहीत इति द्विचन्द्रे निर्विकल्पकं कस्मात् न भ्रान्तम्। तथापिहि तन्निवृत्तये एव प्रत्यक्षलक्षणेऽधिकं भ्रान्तपदं प्राक्षेपि। कामं रजतभ्रमे पूर्वं शुक्तिरन्यदेशावष्टम्भेन न प्रकाशते इति अविपरीतैव निर्विकल्पके भातीति तत्संवेदनमविकल्पकमभ्रान्तम्। रजताध्यवसायस्तु रजते शुक्तिदेशावष्टम्भेन भवन् वस्तुतो विपरीतो भवतीति भ्रमत्वं तत्र अध्यवसायस्यैव, नतु नियमोऽयमुपपद्यते अध्यवसायस्यैव भ्रमरूपतेति। एतदाशङ्कमान आह **'अथापि'** इति। रूपग्रहणं तादात्म्येन अयमवष्टम्भः, नतु आधारतया व्यतिरेकेणेति दर्शयति। **'तत्'** इति तथापीत्यर्थः। द्विचन्द्रस्य प्रतीयमानस्य कथमेकमृगाङ्कतादात्म्यं स्यात्। द्विचन्द्र एव तस्य स्वरूपम्। तदेव प्रवृत्तिप्राप्याभिमुख्येन दिश्यते इति देशः, न अन्यः। **'अपिवा'** इत्यनेन आधारस्य व्यतिरिक्तस्य देशता तावत् न उपपन्ना निःसंबन्धत्वात् सर्वधर्माणाम्। तदयं प्रौढवादितया अभ्युपगम्यवाद इति द्योतयति। आलोके



घटो भातीति घटप्रतिभासस्य अस्ति अन्यदेशावष्टम्भः। ननु न अस्य बाधकेन अन्यदेशता आवेद्यते। स हि तद्रूपसहिष्णुरेव आलोकः आधाराधेयभावस्य निर्भासमानस्य अबाधितत्वात्। ननु एकचन्द्रदेशावष्टम्भसहिष्णुर्द्विचन्द्र आधारस्य तु अप्रतिभातत्वात्। तर्हि अधिकरणदेशस्य अन्यस्य अवष्टम्भात् भ्रान्ततेति त्यक्तं, तादात्म्येन च अवभासनं नास्ति,—इति कथं भ्रान्तित्वम्, ननु असन्नेव द्विचन्द्रो भाति। मैवम्। भासमानतैव हि सत्ता। तदसच्च ख्याति चेति व्याहतम्। अन्यरूपतया तु घटादौ सत्याभिमतेऽपि असत्त्वमिति तद्वेदनमपि भ्रान्तिः स्यात्। तदेतदाह **'नच असत्ख्यातिः'** इत्यादिना। ननु न भासमानत्वं सत्त्वम्, अपितु अर्थक्रियाकारित्वं; तच्च द्विचन्द्रे नास्ति,—इति परमतमाशङ्क्य एतदसिद्धमिति दर्शयति **'अर्थक्रियाकारित्वमपि'** इति। **'असतः'** इति असत्त्वेन तथाभिमतस्येत्यर्थः। बालस्य तैमिरिकस्य आह्लादः, विविवेकिन उद्वेगः। ननु योऽन्यैरेको दृश्यते, सोऽनेन द्वित्वालिङ्गितः। नच असावेको द्वित्वालिङ्गितत्वेन अर्थक्रियाकारी। क एवमाह। तथैव हि असावर्थक्रियां करोति। यथाप्रतिभासं हि सा। तेन प्रतिभासनं चेदस्ति, तत् तदनुसारिण्या अर्थक्रियया अपि भाव्यम्। सापिच प्रतिभासादेव सती अन्यथा अनवस्थानादिति प्रतिभास एव सत्ता,—इति हृदि गृहीत्वा उपसंहरति **'स्वात्मनि'** इति। प्रतिभासमाने रूपे यदि असत् स्यात्, प्रतिभासमानतैव कथं स्यात्। एतदेव द्रढयति **'तथाहि'** इति **'न तस्य'** इति। प्रत्युत अस्य तत् सम्यग्ज्ञानम्। तथाच भिषगस्मै तिमिरं चिकित्सिपुराह भोः किं सत्यमेव द्विचन्द्रं पश्यसीति। सोऽपि तथैव प्रतिवक्ति—सत्यं पश्यामीति। अत्र दृष्टान्तमाह **'नहि'**

इति । इन्द्रजालं मन्त्रतन्त्रौषधादि विद्यते यस्य । '**असत्यत्वेन**' इति अबाह्यतयेत्यर्थः । '**न**' इति । सोऽपि चेत् भ्रान्तो भवेत्, बाह्याभिमुखः प्रवर्तेत । नच एवम् । अत एव व्यपदिशति—नाहं भ्राम्यामि, लोकं तु भ्रमयामीति । ननु एवं सर्वत्र अस्तमितैव भ्रान्तिकथा । नेत्याह '**ततश्च**' इति यत एवं, तत इदं प्रमेयान्तरं लब्धमित्यर्थः । किं तत् । आह '**असत**' इति अनन्तर्बहीरूपस्य द्विचन्द्रस्य प्रकाशमानस्यैव '**सत्त्वेन**' इति बहीरूपेण ज्ञानाकारस्य वा अर्थत्वेन अनात्मत्वेन या प्रतीतिः, स भ्रम इति । यदिवा चस्तोरर्थे । ततस्तु द्विचन्द्रप्रतिभासानन्तरं प्रतीतिरिति अध्यवसायरूपा । अत्र पक्षे '**ततश्च**' इत्यस्य अन्यव्याख्यायां '**नच**' इत्यादिना तस्याः प्रतीतेर्बलादेव अध्यवसायरूपत्वमापततीति निरूप्यते । तथाच न्यायप्रसक्तरूपान्तरसमुच्चयार्थश्चकारः । द्वितीयव्याख्यायां प्रतीतिरध्यवसायरूपा भ्रान्तेत्यत्र हेतुग्रन्थः '**नच**' इत्यादि । चो ह्यर्थे । यत् प्रथमानं प्रकाशमानं, तत् वस्तु । तत् नियताकारं यथैव प्रकाशते; तथैव तत्, अन्यथाभूतं तत् न भवति । ततस्तस्य या प्रतीतिरविकल्पा प्रकाशरूपा, सा सर्वथैव अन्यथात्वं विपरीतवेदनरूपत्वं न सहते इत्यतो हेतोः प्रतीत्यन्तरं निर्विकल्पकप्रतीतिव्यतिरिक्तम् । तदपि न सर्वम्, अपितु विपरीतं येन अध्यवसीयते । नच अस्य स्वग्राह्ये वैपरीत्यम् । अतः प्रथमाने निर्विकल्पकविषये रूपे तत् वैपरीत्यं येन अध्यवसीयते, तदेव अध्यवसायरूपं सर्वत्र भ्रमज्ञाने भ्रान्तमिति युक्तम् । ननु निर्विकल्पकान्तरमेव तथा अस्तु । नेत्याह '**तच्च**' इति । अविकल्पकत्वमेतदेव—यत् प्रथामात्ररूपत्वम् । संयोजनवियोजनादिव्यापारस्तु विकल्पनम् । तदाह '**विकल्पात्मनस्तु**' इति भ्रान्तित्वं युक्तमिति संबन्धः । तस्य हि



प्रथमानरूपपातित्वमस्ति । तदाह '**दृश्य**' इति । किं सर्वत्र भ्रान्तत्वम् । नेत्याह '**विपरीत**' इति । शुक्तौ दृश्यायां तद्दृश्यविपरीतेन रजतेन अध्यवसाय ऐक्यं यदा करोति, तदा भ्रान्तत्वम् । नीले तु दृश्ये नीलेनैव विकल्प्येन ऐक्ये का भ्रान्तता । अन्ये तु व्याचक्षते दृश्ये स्पष्टे विकल्प्येन अस्पष्टेन यदैक्यम्, तदध्यवस्यन् सर्वो विकल्पो भ्रान्तः, वस्तुमूलत्वेन तु प्रापकत्वात् न भ्रान्तितया व्यवह्रियते नीलस्यैव प्राप्यत्वादर्थक्रियाकारित्वेन अभिमानात् स्पष्टास्पष्टताद्यवान्तरानादरणात् । यस्तु दृश्येन ऐक्यं न अध्यवस्यति, स विकल्प्यरूपस्वविषयमात्रनिष्ठः सर्वथैव अभ्रान्त इति । एतदुपसंहरति '**अतः**' इति । द्विचन्द्राभासो निर्विकल्पो यः, तत्र न भ्रान्तता यथाप्रकाशमाभासस्य सत्त्वात् । अत एव नीले असत्यपि नीलप्रकाशनं युक्तम् । नहि तस्य प्रकाशनमात्मीयं वपुर्येन असति तस्मिन् तदिङ्गितवत् तत्प्रकाशनमपि न स्यात्; यावता प्रकाशमानमस्य संवेदनं, तच्च अस्तीति असत्यपि नीले तत्प्रकाशनं स्यादिति बाह्यार्थशून्यता युक्तिमती । असति नीलप्रकाशने किं तदस्ति यद्बलात् नीलप्रकाशनं प्रकाशेतेति असति नीलप्रकाशने न किंचिदपि प्रकाशेत, यदन्यस्य प्रकाशरूपं न धर्मः, तत् तदसंभवे न प्रकाशते दीपादेरभाव इव प्रभात्मकः प्रकाशः । तथाच नीलप्रकाशस्य प्रकाशनं न अन्यधर्म इति तदसंभवे प्रकाशनं यत् सर्वत्र, तत् न दृष्टमिति नियमवत्स्वहेतुना अस्य अन्यधर्मत्वं व्यापकं स्थापितमिति व्यापकानुपलब्धिः । तत् विज्ञानशून्यता नीतिबाह्यैवेति भट्टशंकरनन्दनः । तेन द्विचन्द्रनिर्विकल्पकं, तथाविधविकल्प्यमात्रनिष्ठश्च तदध्यवसायो न भ्रान्तिः । नहि अत्र उभयत्रापि बाधकं प्रभवति । नहि निवृत्तेऽपि तिमिरे एवं प्रतिपत्तिः—न मे द्विचन्द्रः प्रतिभात इति ।

तत्प्रतिभानादेव हि तिमिरचिकित्सितादिः । यस्तु द्विचन्द्रोऽयं बाह्यः सर्वसाधारण इति अध्यवसायः, स एव भ्रान्तो बाधकेन तथावेदनात् । निवृत्ते तावत् तिमिरे एवं प्रतिपत्तिः—यो मया द्विचन्द्रो बाह्यत्वेन सर्वसाधारण्येन अध्यवसितः, स तथा न प्रतिभातः; प्रतिभातस्तु अबाह्य एव असाधारणस्तिमिरादिकारणान्तरोत्थापितस्तदसाधारणपृष्ठ एव तु अभ्यमंसि—बाह्योऽयं सर्वसाधारण इति। नच असौ तथेति । यद् बाधकेन नेतिना उन्मूल्यते संवेदनेन, तत् भ्रान्ततया व्यवहार्यं स्वसंवेदनांश इव । तथाच द्विचन्द्रप्रतिभासद्विचन्द्राध्यवसायाविति कारणानुपलब्धिः। भ्रान्तताव्यवहारस्य नियमवतः कारणवत्त्वादन्यकारणासंभवाच्च नेति उन्मूल्यमानतैव कारणं, तदिह न उपलभ्यते इति । यदाह भट्टः

'असत्यस्याबहिर्भावो बाधः सत्त्वमतो द्विधा ।'

इति। तथा विकल्प्यस्यापि अनर्थता न भवति भ्रान्तत्वाभावात्। यतो बाधकेन तत्र न किंचित् क्रियते, दृश्यविकल्प्याभेदाध्यवसाय एव तु उन्मूल्यते इति प्रक्रम्य आह

'आभासभेदे त्वर्थः कस्तत्राभेदो भ्रमो वपुः ।'

इति । ननु एवं द्विचन्द्रनिर्विकल्पकप्रत्ययभ्रान्तताभिधाने तिमिराशुभ्रमणेत्यादावार्यस्य कोऽभिप्राय इत्याह **'बाह्यतावसायोऽपिच'** इति । तिमिरेण अयमसाधारण आभास उत्थाप्यते—यतो न वेत्ति, ततो बाह्यताध्यवसायः । एतदुक्तं भवति—आभास उत्तिष्ठन् प्राचुर्येण बाह्यार्थकृत एव भवतीति दृढाभ्यासवासनामहिम्ना प्रथमत एव प्रभृति स आभासः संविदि अध्यवसाये च निर्भासमानः समाकृष्टबाह्यताक एव निर्भासते मन्दमतेरिन्द्रजालतिमिरादाविति प्रथमत एव प्रभृति



भ्रान्तत्वमुक्तम् । यस्तु तिमिरादिकारणत्वमवैति गच्छन् कक्षाद्याभासस्य, स बाह्यतां न अध्यवस्यति । तथाच नावारूढं पश्य पश्य तटतरवः प्रतिलोमं तूर्णं तूर्णं धावन्तीति सविस्मयमाचक्षाणं शिशुकं प्रत्याह नैवं वृक्षा भवन्ति, दृश्यते केवलमित्थमिति । अनेन प्रतिभासधर्म एव अयमिति उक्तं भवति। एवं निर्विकल्पकेन एतत् बाधिष्यमाणबाह्यतास्वीकारात् सह्यमात्मनि भ्रान्तत्वम्, शुक्तिरजतभ्रमे तु प्रथमनिर्विकल्पकेन रजतस्वीकाराभावात् न सह्यमिति अन्याभिप्रायः इति । **'तावत्'** इति । इह तावदुपयोगि दर्शितम्, अन्यत्तु दर्शयिष्यते । **'भवताम्'** इति स्वदर्शने भ्रान्तितत्त्वं यत्, तदिह न तावत् दर्शितमिति यावत् । यत् नरेश्वरविवेकः

'परेषामपि केशादौ भ्रान्ता संविद्बहिर्मुखा ।'

इति। एवं लोकप्रसिद्धे भ्रमरूपे यस्तृतीयोऽध्यवसायांशः, तन्निदर्शनेन सर्वत्र अध्यवसाये भ्रान्तिरूपं प्रदर्श्य भ्रान्तिरूपेण अध्यवसायेन व्यवतिष्ठापयिषितस्य बाह्यस्य व्यवस्था न घटते तत्र अंशे तस्य जडरूपत्वात् । यत्र अंशे च अजडत्वमबाह्ये, तत्र व्यवस्थासंपादनानौत्सुक्यादिति दर्शयति **'स्मृतिज्ञानं हि'** इति। हि इति यस्मादेवंभूतोऽत्र विभाग इतीति, तस्मात् विषयव्यवस्थापकत्वमध्यवसायस्य न युज्यते यथा प्रकृतस्य स्मृतिज्ञानस्येति। स्मृतिरुपलक्षणमत्र । एतदेव घटयति **'स'** इति । योंऽशो न भ्रान्तो निर्विकल्पकस्वसंवेदनलक्षणः, स न अर्थस्य व्यवस्थापकस्तेन अन्यस्यैव स्वरूपस्य स्वाभासस्य च प्रकाशनात् । यतः सोंऽशः प्रतिभासमानः स्वरूपस्वाभासस्वभावः, तस्मात् स्मृतिज्ञानादभिन्नो न व्यतिरिक्तः, न बाह्यस्वभावो

'ज्ञानादव्यतिरिक्तं च................ ।'

इति न्यायात् । यस्तु विकल्पनव्यापारात्मा अध्यवसायः, स यद्यपि स्वांशादवतीर्ण इव लक्ष्यते इत्यतोऽर्थे व्यवस्थापकतया संभावयितुमारब्धः, तथापि न निर्वहति अस्य संभावना। तदाह **'यावता'** इति पूर्वप्रक्रान्तसंभावनानिर्वाहाभावद्योतकमव्ययम्। ननु भ्रान्तं च भविष्यति, व्यवस्थापकं च भविष्यति। दुष्यति किं हि तत इति भ्रान्तत्वेन सह समुच्चीयमानं व्यवस्थापकत्वमाशङ्कितं निषेधति **'भ्रान्तस्यापि'** इति। अत्र हेतुः **'जडत्वात्'** इति। ननु विषयस्य व्यवस्थापक इति कोऽर्थविषयस्य व्यवस्थां करोति। तत्र यथा काष्ठस्य प्लोषं करोत्यग्निरित्युक्ते जाड्यमग्नेर्न प्रतिबन्धकम्, तथैव अवसायो व्यवस्थां विषयस्य करोतीति किमस्य जाड्याजाड्यचिन्तयेत्याशङ्क्य आह **'व्यवस्थापनं हि'** इति। आत्मनि संवेदनं प्रख्याप्रमुखं पार्यन्तिकोपाख्यालक्षणाध्यवसायरूपम्, परत्र च प्रमात्रन्तरे तथाभूतस्य स्वात्मनि यादृगर्थाकारोऽध्यवसायः, तत्सदृशस्य अर्थाकारस्य अध्यवसायस्य पूर्वं वा तेन अर्थाकारप्रकारेण अभूतस्य जननार्थं वाचकस्य संकेतितस्य शब्दस्य उदीरणमुपाख्याप्रसादकं यद्वशात् तद्धानोपादानादियोग इति,—इत्येतत् व्यवस्थाशब्दवाच्यम्, ननु अर्थस्य असौ काष्ठस्य इव कश्चित् विकारः। हि इति यत एवं, ततः प्रख्योपाख्यावत्त्वं वस्तुविषयं जडस्य स्वात्मनिष्ठस्य वस्तु अस्पृशतः कथं स्यात्। चोऽन्वाचये। अत एव उपसंहरिष्यति **'वस्तुसंवेदनरूपत्वलाभः'** इति। तूष्णीकेनापि हि विषयं संवेदयमानेन व्यवस्थापितोऽर्थः, किंतु व्याहारव्यापारादिना सा व्यवस्थापना निश्चेयेत्युपाख्यानं प्रख्यायाः करावलम्बनमादधत् तत्साचिव्येन व्यपदिष्टमिह । ननु विषयधर्म एव व्यव-



स्था अस्तु भाट्टन्यायेन। अत्र आह **'प्रतिप्रमातृ'** इति। विषयधर्मो हि प्रतिप्रमातृ न भिद्यते। नहि एकस्य शुक्लः पटः, अन्यस्य पीतः, अन्यस्य न शुक्लो न पीत इति भवति। इह पुनरेकस्य स्पष्टं प्रतिभातोऽपरस्य अप्रतिभात एवेति दृष्टम्। विषयधर्मतायां तु इदं न घटते। यः प्रतिप्रमातृ भिद्यते धर्मः, स विषयधर्मो न भवति सुखादिरिव; तथाच व्यवस्थेति विषयधर्मत्वस्य व्यापकं व्यवस्थानं, तद्विरुद्धेन अव्यवस्थितत्वेन व्याप्तं प्रतिप्रमातृभिन्नत्वमिति व्यापकविरुद्धव्याप्तोपलब्धिः। **'प्रमातुः'** इति प्रमातृधर्म एव अयम्। यस्य च अयं विषयप्रख्योपाख्यालक्षणो धर्मः, स एव अजड उच्यते। अपिशब्दो वृत्तौ पराभ्युपगमस्य अयुक्तताद्योतकः। यद्यपि त्वया चिद्रूपोऽङ्गीकृतः, तथापि न निर्दोषत्वमिति। **'स एव'** इति तत्रैव तेन प्रख्योपाख्ये कर्तव्ये। **'सच बाह्य एव'** इति बाह्यः प्रख्यातश्च उपाख्यातश्च तत्र भवन् पूर्ण एव प्रकाशितः स्यादिति प्रत्यक्षादस्य स्मृत्यध्यवसायस्य न भेदो भवेत्; अत एव **'संविदात्मना'** इति उक्तम्। संवित्स्वभावस्य हि यो व्यापारः, स कोऽन्यः संवेदनातिरिक्तो भवितुमर्हति। तदध्यवसायादिशब्दैरपि अभिधीयमानोऽसौ प्रकाश एव पूर्णः। ततश्च यत् यत्र पूर्णप्रकाशरूपं न भवति, तत् तत्र भ्रमात्मकमपि न भवति, सुख इव स्वसंवेदनम्। तथाच स्मृत्यवसाये अतीर्थेऽर्थे यत् किल यत्र न पूर्णं प्रकाशनं, तत् भ्रान्तं रजत इव तत्संवेदनं किंचिदिति व्यापकानुपलब्धिः। अभ्रान्तत्वे प्रसक्तेऽपि न कश्चित् दोषः, प्रत्यक्षतुल्यतायां तु संवेदनविरोध इत्याशयेन वृत्तौ सैव दोषत्वेन उक्ता। टीकायां च तत एवं उभयमुक्तम्। अनर्थः स्वात्मा स्वोल्लेखश्च यः, स एव अध्यवसायस्य प्रतिभास्योऽर्थः, बाह्यस्तु नैव प्रतिभास्यः। तर्हि बाह्यो

जडोऽयम् । नहि जाड्यस्य शृङ्गमस्ति । यदेव यत्र अप्रतिभासरूपं, तदेव तत्र जडमुच्यते नीलमिव अन्यत्रेति भावः । **'अर्थांशो'** इति व्यवतिष्ठापयिषिते बाह्ये इत्यर्थः । स्वात्मा संविद्रूपः, उल्लेखश्च उत्प्रेक्षणेन स्वव्यापारेण उत्कीर्येव स्वात्मनि अर्थादुत्कृष्येव लिख्यमानश्चित्रकल्पश्छायामात्ररूपो नील इति । उभयमपि एतद्बाह्यं प्रकाशनयोगेन स्पृशता अध्यवसायेन तत्रैव प्रख्योपाख्यावता व्यवस्थाजनकेन भूयताम्, ननु बाह्य इति मात्रशब्दार्थः । इयता सौगतमते अर्थस्य व्यवस्थैव न कथंचिदुपपद्यते निर्विकल्पकेन तस्याः पूर्वापरपरामर्शप्राणिताया असंपत्तेरवसायात्मनश्च विकल्पस्य बाह्येऽर्थे जडत्वात् तद्व्यवस्थाकारितानुपपत्तेरिति दर्शितम् । प्रख्यानं हि केवलं निर्विकल्पकरूपमुपाख्यारूपशून्यम् । न तत् व्यवस्थानमर्थस्य । नापि उपाख्या केवला प्रकाशशून्येति । यश्च प्रत्यक्षायते विकल्प इति, तत्र किमसावाचरति यत् प्रत्यक्षेण उपमीयेतेति उक्तमेव । अतश्च बाह्यार्थसिद्धिरपि कथमिति सूचितम् । अत एव स्वदर्शने सिद्धान्ती प्रकाशविमर्शयोरन्योन्यमवियोगं दर्शयिष्यति येन अर्थव्यवस्था सुलभेव बाह्यत्वेनापि । सा हि प्रख्योपाख्यामयी । ते एव च प्रकाशविमर्शावर्थस्येति तदात्मको बोधः कथमर्थव्यवस्थारूपो न भवेदिति न किंचित् दुःसमर्थमत्र । अवसायो दर्शनीभूतोऽवसायीभूतं दर्शनमित्यपि पुरुषबुद्ध्यविशेषाभिधानसमानमतात्त्विकमेव । पश्यामीत्यपि न दर्शनस्य निःशमशमस्य वपुरुचितं येन इयता दर्शनीभूतमवसायरूपं भवेत् । पश्यामीति हि परामर्शोऽयमवसायस्यैव वपुरिति परस्य असमञ्जसमिति आस्ताम् ॥ ५ ॥

एवमन्योन्यभिन्नानामपरस्परवेदिनाम् ।<br>
ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः ॥ ६ ॥



**'तदेवं'** इत्यादिना सूत्रं संक्षेपेण अवतारयति । **'ज्ञानं'** इति तदीयमन्यज्ञानसंबन्धिनं विषयं न आस्कन्दति न स्वीकुरुते । कथं तत्स्वीकरणं संभाव्यते । आह **'निज'** इति स्वरूपे स्वविषयमात्रे च निष्ठा विश्रान्तिर्यस्य तादृशं यदपरं स्वीकर्तव्यो विषयो यदीयस्तज्ज्ञानद्वारेण । ननु तद्विषयस्वीकारे कथं तज्ज्ञानं द्वारतामेति । उच्यते **'तदपर'** इति तत् स्वीकर्तव्यविषयं यदपरं ज्ञानं, तत् यतः संवेद्यं भवति । ननु ज्ञानं यदि संवेद्यम्, तर्हि विषयस्तदीयः कथं स्वीक्रियेतेत्येवमाशङ्क्य इदमेव उक्तं **'तदपर'** इति तस्य अपरस्य ज्ञानस्य यतः संवेद्यो विषयः । स्वविषयप्रकाशनस्वभावं हि तज्ज्ञानं वेद्यीकुर्वता ज्ञानेन अवश्यं तद्विषयोऽपि स्वीकृतो भवेदिति यावत् । ननु यदि अयं परविषयस्वीकारे ज्ञानस्य ज्ञानान्तरवेद्यत्वमुपायः, तदाश्रीयताम् । तर्हि तदाश्रीयेत, यदि घटेत; ननु घटते इत्याह क्रमेण यद्भवनं, तेन भिन्नानि किल ज्ञानानि । ननु ततः किम् । आह स्वाभासे स्वरूपे स्वाकारच्छायारूपे च विषये प्रकाशनरूपाणि, ननु परस्वरूपे परविषये व्यतिरिक्ते वा विषये । तथा वृत्तिः **'स्वात्ममात्र'** इति । अत्र हेतुरनन्तरोपपादितो न्यायः । तेन हि न्यायेन किं कृतमिति । आह **'स्वरूपमात्र'** इति । इयता प्रथमं कारिकार्धं व्याख्यातम्, द्वितीयं व्याचष्टे **'ततश्च'** इति । ततः परज्ञानविषयस्वीकाराभावाच्च अर्थिनामर्थक्रियालाभः प्रवृत्तिपूर्वको न स्यादर्थिताया एव अनुदयात् । सा हि प्रवृत्तिविषयस्य प्रार्थनीयस्य अर्थविशेषस्य निश्चये सति भवति । प्रार्थनीयश्च इत्थमर्थो भवति यदि स पूर्वं सुखसाधनत्वेन दृष्ट इति निश्चयः । एवंच विषयसंमेलनात्मा निश्चयः प्रार्थनाकारणं, तत् नास्तीति कारणानुपलब्ध्या प्रार्थनाया अभावे तयैव उत्तरोत्तर-

कार्याणामभावः इति प्रार्थनाध्यवसायप्रवृत्तिप्राप्तिहानादानसंव्यवहारादिर्लोकयात्रा उत्सीदेत् । क्रमोपजातस्य संवित्प्रबन्धस्य विचित्रं कृत्वा संयोजनवियोजनादिना बहुप्रकारेण वैचित्र्येण यत् कस्मिंश्चित् विषये मेलनं—यस्त्वया अद्य विषयो दृश्यते, स पूर्वमपि मया इत्थमवलोकितः इत्येवंरूपं; तेन किल तत्समर्थाचरणं प्रवृत्तिविषयस्य अर्थविशेषस्य निश्चये क्रियेत । तदेव तु न घटते । अनेन **'अनुसंधानजन्मा'** इति व्याख्यातम् । आलयविज्ञानमेकमपि कल्पितं क्षणिकत्वादविषयमेलनाय प्रभवति। स्मृतिज्ञानं च विचारयितुमारब्धमिति अखिलपदम् । प्रथमज्ञानमपि अहमिदं जानामीति अहन्तापर्यवसितम्, अहमिति च पूर्वापरस्वात्मरूपपरामर्शविश्रान्तं प्रथते इति तद्विश्रान्तत्वाभावे तदपि न किंचित् भवेत् । सुखदुःखादावपि एषैव वर्तनीति । स च अयमनुसन्ध्येकरसतया प्रमाता व्यवहरन् तदभावे मूर्च्छितप्रायीभवेदिति अनुसन्धिरवश्यसमर्थनीयः । ननु मा भूवन् स्वाभासमात्रप्रकाशनरूपाणि विज्ञानानि, सन्तु बाह्यार्थप्रकाशनरूपाणि । बाह्यश्च संतानवृत्त्या वा स्थैर्येण वा तज्जातीयत्वेन वा पूर्वेण ज्ञानेन यो दृष्टः, स एव उत्तरेण ज्ञानेन दृश्यते इति सिद्धं विषयमेलनम् । सिध्येत्, यदि दृष्टता तस्य अर्थस्य धर्मः स्यात् । यावता पूर्वज्ञानरूपमेव सा । नच अन्योन्यं ज्ञानयोः स्वरूपतादात्म्यम् । ज्ञानभेदस्य अपारमार्थिकत्वे हि एवं स्यादिति । एतत् दर्शयति **'व्यतिरिक्त'** इत्यादि । विषयमेलनं हि दृष्टतायां विषयधर्मत्वेन वा ज्ञानयोः स्वरूपैकत्वेन वा परस्परवेदकत्वेन वा स्यात्, न अन्यथेति एकान्तोऽयम् । ननु तृतीयोऽस्तु अयं पक्षः । नेत्याह **'तदपि'** इति तथाभूतमपि व्यतिरिक्तार्थप्रकाशनरूपमपि तत् ज्ञानम् । **'स्वातन्त्र्येण'** इति पूर्व-



ज्ञानयोगक्षेमास्पर्शेनैव । ननु यदि तज्ज्ञानं पूर्वज्ञानपुरःसरीकारेण तं विषयं स्वीकुर्यात्, का खण्डना; प्रत्युत अस्मिन् वस्तुनि प्रतीतिः साक्षिणी ज्ञातोऽयमर्थ इति । एतदाशङ्क्य महता प्रबन्धेन ज्ञानस्य ज्ञानान्तरवेद्यतामाक्षपादाभ्युपगतां पराकर्तुमुपक्रमते **'ज्ञानानाम्'** इत्यादिना । अत्र संक्षेपेण युक्तिः **'जडतापत्तेः'** इति । **'उक्तम्'** इति

'दृक् स्वाभासैव.......................।' (१।३।२)

इत्यत्र । अत्र परो वितत्य स्वाभिप्रायं प्रकटयन् ज्ञानान्तरवेद्यतां न उपगते स्वप्रकाशत्वेऽपि समर्थयते **'स्वसंविद्रूपत्वात्'** इत्यादिना **'नात्र कश्चिद्बाधः'** इत्यन्तेन । **'भवन्ति'** इत्यन्तेन सिद्धान्तिमतं पूर्वपक्षवादिना अनूदितम्, अनेन च **'अपरसंवेद्यानि'** इति वृत्तौ नञः संवेदनेन संबन्धो व्याख्यातः । परशब्देन संबन्धे साध्याविशिष्टो हेतुर्भवेत् । एवमनूद्य **'कुतः'** इत्यनेन स्वमतमाह । इदं च अस्य आकूतम्—यथा दीपे प्रज्वलिते दीपान्तरमागच्छत् प्रकाशते न कश्चिद्विरोधः, तथा ज्ञानेऽपि ज्ञानान्तरम् । एतावता हि न तस्य ग्राहकस्य ज्ञानस्य किंचित् दुष्यति, तत् हि जडं वा गृह्णीयादजडं वा । ग्राहकत्वे का हानिः । तदाह **'यथा जड'** इत्यादि । ग्राह्यस्यापि का खण्डना । जडत्वापत्तिरिति चेत्, नैवम् । ज्ञानं हि प्रकाशमानमपि तथा स्वयं प्रकाशते यथा परस्य प्रकाशनरूपमेव भवति,-इति आत्मप्रकाशननान्तरीयकपरप्रकाशनयोगादात्मानात्मप्रकाशनरूपमस्य अनपेतमेव । तदेव च अजडत्वम् । प्रकाश्यता च नाम न तस्य स्वरूपीभवति घटवदेव । तेन सापि अस्य न जडतामानयति । एतदाह **'प्रकाश्यत्वाप्रकाश्यत्वयोः'** इति । अप्रकाश्यत्वं न प्रकाशितोऽयमिति व्यवहारः, स न विषयस्य

स्वरूपं प्रकाशितोऽयमितिव्यवहारवत्; प्रमात्रा च अस्य ज्ञानस्य ग्रहणे परप्रकाश्यत्वमेव उपपन्नमिति दर्शयति **'न स्वप्रकाशेन'** इति। येन हि प्रकाशरूपेण विषयस्य असौ प्रकाशस्तेनैव चेत् प्रमातुः संवेद्यतामेति, घटस्यापि संवेद्यतामन्ते; ज्ञानान्तरानुदये हि को विशेष आत्मद्रव्यस्य घटद्रव्यस्य वा। तस्मादस्य संवेद्यता नाम ज्ञानस्य घटवदेव ज्ञानान्तरम्, घटात् विलक्षणत्वनिदानं तु इयमेव अस्य प्रकाशता या विषयं स्वं प्रति प्रकाशरूपता। नहि विषयस्य प्रकाशरूपता निजं वपुः। तदेत-दाह **'तत्प्रकाश एव हि'** इति। स्वपक्षं परो निगमयति **'तदेवम्'** इति। ज्ञानस्य प्रकाश्यता ज्ञानान्तरमेव, स्वरूपं तु प्रकाशमानस्य परप्रकाशनरूपत्वमिति दर्शितं प्रकाशा-त्मत्वात् परप्रकाशनस्वभावत्वाच्चेति ज्ञानरूपं जडरूपं वेति ग्राहकस्य ज्ञानस्य न काचित् खण्डनेति दर्शितम्। **'ज्ञानान्त-रेणापि एवम्'** इत्यादिना ग्राह्यस्य ज्ञानस्य न किंचित् हीयते इति उक्तम्। यत् यत्र न लक्षणं स्वमपबाधते, तत् तत्र विरुद्धं दर्पणस्वच्छतायामिव स्वच्छदर्पणान्तरसंक्रान्तिः। तथाच ज्ञाने ज्ञानान्तरेण ग्राह्यता न ज्ञानस्य स्वं लक्षणं प्रकाशमानस्य सतः परप्रकाशनरूपत्वं बाधते इति व्यापकानुपलब्धिः। विरोधो हि कचिदेव भवति, न सर्वत्र। यदि च लक्षणानपबाधकोऽपि विरुद्धः स्यात्, सर्वं सर्वस्य विरुद्धं भवेदिति नीलस्य कार्यत्व-कारणत्वाद्यपि रूपं न भवेत् विरुद्धत्वात्। एवं नियमवत्त्वस्य व्यापकस्य अनुपलम्भप्रसङ्गात् विरोधव्यवहारो लक्षणानपबाध-करूपात् प्रतिपक्षतः प्रच्युतो लक्षणापबाधकत्वेन व्याप्यते। तच्च इह न उपलभ्यते इति। एतत् परिहरति **'अत्र उच्यते'** इत्यादिना। अनेन च लक्षणानपबाधकत्वस्य असिद्धिं निरूपयन्



विरोधमेव समर्थयते। ज्ञानं हि घटस्य प्रकाशनरूपम्। तत्र प्रकाशमानत्वं न घटनिष्ठं किंचिद्रूपम्, अपितु ज्ञानस्वरूपमेव तत्। यदि च तत् प्रकाशमानत्वं ज्ञानगतमपि ज्ञानान्तरस्वरूप-मेव, तर्हि प्रकाश्यस्य ज्ञानस्य निःस्वरूपत्वमेव स्यात्। ग्राहक-स्यापि ज्ञानस्य या प्रकाशमानता, सापि ग्राहकज्ञानान्तरमेवेत्य-नेन पर्यायेण सर्वमेव ज्ञानं निःस्वरूपं भवेदित्यभिप्रायेण उपक्र-मते **'यथा'** इत्यादि। **'प्रकाश्यमानेऽपि'** इति वचनमात्रेण अभ्युपगमे सत्यपीत्यर्थः। **'अहमितिप्रत्येयः'** इति अर्हे कृत्यः। प्रकाशमानतायामनन्यापेक्षत्वं बोधलक्षणम्। तच्च ग्राह्यतायामन्यापेक्षतारूपायां बाधितमेव स्यात्। एवग्रहणेन अनन्यापेक्षामाह। अहमित्येवप्रकाशार्हः स एव हीति संबन्धः। मध्यग्रन्थस्तु **'अहमित्यस्यैव'** इत्यादिरत्र हेतुत्वेन उक्तः। ननु अहमिति न ज्ञानमेतत्, अपितु ज्ञातुरयं परामर्शः; ज्ञानं च इह मीमांस्यते इत्याशङ्क्य आह **'यदा तु'** इति। तुशब्दद्वयं वास्तवे सत्यपि अभेदे अर्थावच्छेदानवच्छेदकृतं ज्ञानत्वं ज्ञातृत्वं चेति विशेषद्वयं द्योतयति। एतदुक्तं भवति—न खलु आत्मा नाम किंचित् द्रव्यान्तरं यस्य ज्ञानेन घटवदेव ज्ञानं प्रकाश्यते। तथात्वे हि न किंचित् प्रकाशेत। तथाहि घटस्य प्रका-शमानत्वं न स्वरूपम्, अपितु ज्ञानम्। तस्यापि प्रकाशमानत्वं यत्, तत् न स्वरूपम्, अपितु ज्ञानान्तरमिति अप्रकाशाद्वैतं भवे-दिति सुप्तं जगत् स्यात्। तस्मात् संविदेव प्रमातृरूपा अन्तः शरी-रप्राणशून्यादिकावच्छेदपरिगृहीतसंकोचा अपि बहिर्मुखानवच्छे-दात बहिरलब्धसंकोचा मायाप्रमातृरूपा बहिरपितु लब्धसंको-चतायां ज्ञानरूपा। तत्रापि बहिरसंकुचितं रूपमनुयायि भासते एव अन्यथा अनुसंधानायोगादिति ज्ञानमात्मधर्म उच्यते इति।

**'सौगतैरपि'** इत्यादिना सर्वस्य इत्थमेव अयमवभास इत्या-
ह। स्थिरमस्थिरविषयच्छायोपरक्तरूपानुविद्धं प्रकाशलक्षणं सर्वस्य
तावदध्यात्मसिद्धमनपह्नवनीयम् । तत्तु समर्थयितुमशक्नुवद्भिः
कुशकाशमवलम्ब्यते। तथाहि बौद्धैरस्थिरमेव अस्य पारमार्थिकं
रूपमङ्गीक्रियते, स्थैर्यं तु संताननिष्ठतया विकल्पकल्पितं ज्ञान-
मात्रवादिभिः, सांख्यैरस्थिरं रूपं विषयच्छायोपरागकृतं, प्रका-
शरूपत्वं च पुरुषच्छायोपनतं बुद्धितत्त्ववादिभिः। **'मुख्यया'**
इति न वास्तवमत्र मुख्यत्वम्, अपितु प्रतिभासानुसारेणेति
मन्तव्यम्। अत एव आह **'प्रकाशमानायाम्'** इति।
वास्तवं हि प्रमातृत्वं पुरुषस्यैव। यदिवा पुरुषस्य चितिमात्ररूप-
त्वात् प्रमातृत्वादिव्यवहार उपचरितः प्रमाणविपर्ययादिवृत्ति-
सारूप्यकृतः। 'बुद्धिवृत्त्यविशिष्टा हि व्यावृत्तिः' इत्युपगमात् तु
पुरुषच्छायोपरक्ते बुद्धितत्त्वे एव मुख्यः प्रमातृभावः। **'उभय-
रूपः'** इति इदं ज्ञानम्, अयं प्रमातेति च। **'येषामपि'** इति
नैयायिकादीनां ज्ञानलक्षणो यः प्रकाशः, ज्ञानोदय एव हि एषां
मते विषयप्रकाशः, ततोऽतिरिक्त आत्मशब्दवाच्यो नित्यव्यापि-
द्रव्यविशेषः प्रमातेति। तत्रापि स विषयप्रकाशस्तावत् तस्मा-
दात्मद्रव्यादव्यतिरेकेण निर्भासमानोऽङ्गीकृतः । केवलं तथा-
निर्भासने समवायस्य निमित्तत्वमुक्तम्। यथा तु रक्तशुक्लः पट
इति रागशौक्ल्यानुविद्ध एव चित्रपटो भाति, तथैव ज्ञाता अह-
मात्मेतिप्रत्ययेऽपि घटज्ञानात्मना प्रकाशेन पटज्ञानज्ञानात्मना
च प्रकाशेन ओतप्रोतस्वभाव एव असावात्मा स्यादिति विचि-
त्रप्रकाशरूपानुविद्ध एव आत्मा,—इति युक्तमवोचाम। स एव
ज्ञानं प्रमाता चेति । ननु समवायः संबन्धः, स च भेदेनैव
भवति संयोगवदित्याशङ्क्य सत्यम, किंतु अयुतसिद्धत्वात् ज्ञानस्य



न जातु भेदेन अवभासो युक्त इति दर्शयति। **'अन्यथा'** इति
व्यापित्वनित्यत्वाभ्यां तद्विपरीताभ्यो व्यक्तिभ्योऽत्यन्तभिन्नयोग-
क्षेमा अपि जातिर्व्यक्तितादात्म्येनैव अवतिष्ठते निर्भासते चेत्येवं-
भूतो यः समवायस्य महिमा, स कथं गुणगुणिनोरत्यन्तमभिन्न-
योगक्षेमयोर्भेदेन अवस्थाननिर्भासावङ्गीकुर्यादित्याशयेन जातिम-
त्र दृष्टान्तीकरोति **'नहि'** इत्यादिना। दृष्टान्तस्य हेतुस्वरूपपरि-
पोषकत्वेन प्रकृतप्रसाधनाङ्गतेत्याशयेन हेतुताद्योतको हिशब्दः।
यदि जातिः स्वतन्त्रा आसीत भासेत वा, तदा तत् द्रव्यमेव
स्यात् प्रकाशेत च। भिन्नेषु अभिन्नप्रत्ययजनकत्वं हि जातेर्जी-
वितम्। ननु यदि सर्वज्ञः षट् पदार्थान् विविक्तानालोचयति,
तदा जातिं पृथक्त्वेनापि अवलोकयेत्, महाप्रलये च व्यक्त्यभा-
वेऽपि अवश्यं जातीः पश्येत् नित्यत्वेन च तदापि तासां भावा-
दित्याशङ्क्य आह **'सर्वज्ञस्यापि'** इति। नहि अयथास्वरूपं
सर्वज्ञः पदार्थान् पश्यति। एवं हि स भ्रान्त एव भवेत्। सर्व-
ज्ञत्वाच्च प्रलयेऽपि असावतीतानागताः साक्षात् व्यक्तीः पश्यन्
तदुपरञ्जकत्वजीवितामेव जातिमवैति। तदेतत् **'अर्हति'** इत्य-
नेन उक्तम्। दृष्टान्तं व्याख्याय दार्ष्टान्तिके योजयति **'तद्वत्'**
इति। अहंप्रकाशप्रतिभास्यो हि प्रमाता आत्मा। तदभेदेनैव
ज्ञानमुचितप्रकाशं घटाभेदेन इव शुक्लस्तद्गुणत्वात् । ततो हि
भेदेन प्रकाशमानं यदि तद्गुणः स्यात्, विश्वमपि तद्गुणः स्यादिति
तद्गुणत्वमनियमप्रसङ्गेन विपक्षात् व्यावृत्तं साध्येन तदभेदप्रका-
शेन व्याप्यते इति स्वभावहेतुः। एवंच ज्ञानं ज्ञाता अहमित्येव
उचिताभासम्। इदमिति तु अवभासे ज्ञातुर्बहिर्भूतमतद्गुणरूपं
स्वतन्त्रमन्यगुणरूपं वा भासमानं ज्ञानमेव भातं भवेत्। एवमहं-
प्रकाशयोग्यस्य प्रमातुरन्तर्निष्ठतयैव ज्ञानस्य प्रकाशनं सर्वदर्शनेषु

उदितम् । **'ज्ञानम्'** इति ज्ञानस्य ज्ञानान्तरवेद्यता न युक्ता । ननु मा भूदिदमिति ज्ञानस्य प्रकाशः, भवतु च अहमिति; किंतु यथा सुखी अहम्, इच्छामि द्वेष्मि प्रयतेऽहमित्यादौ सुखेच्छादेरात्मसमवेतत्वेन आत्मसमवेतेनैव व्यतिरिक्तेन ज्ञानेन प्रकाशनं, तद्वत् ज्ञाता अहमिति ज्ञानस्यापि ज्ञानान्तरेणैव एकार्थसमवायिना भविष्यतीत्याशङ्क्य दृष्टान्त एव अयमयुक्त इति हृदये गृहीत्वा अहंप्रकाशस्यैव रूपं निरूपयति **'स्वयम्'** इति । अहंप्रकाशमयत्वमेतदुच्यते—प्रकाश्यतायां स्वातन्त्र्यमनन्यमुखप्रेक्षित्वम्, अन्यथा प्रकाशान्तराव्युपरमेऽनवस्थानात् न किंचित् प्रकाशेतेति असकृत् निर्णीतं

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि···।' (अ०प्र०सि०२२ का०)

इति । यस्य हि नैयायिकस्य सदा परोक्ष एव आत्मा, तस्य तत्परोक्षवृत्तिर्धर्मः प्रकाशेतेति । एतदेतावत् कथम् । पृथक्प्रकाशमानश्च कथमयुतसिद्धो भवेत् । नभसोऽपि अनिर्भासे शब्दस्य निर्भास इति चेत्, एतदपि कथम् । तरुपवनसंयोगाप्रत्यक्षत्वं च कथं स्यात् । अथ अहमितिज्ञाने प्रकाशते एव आत्मा । तत्रापि अहमित्यपि ज्ञानं न स्वकाशम् । तदपि ज्ञानान्तरग्राह्यम् । तत्तु ज्ञानान्तरं केन आकारेण उदेतीति चिन्त्यम् । यदि तावदिदमिति, तदा आत्मबहिर्भावोऽस्य स्यात् । अथ अहमिति, तर्हि आत्मज्ञानमिदं भवेत्, न आत्मज्ञानज्ञानम्; अनवस्थानाच्च न किंचित् प्रकाशेत । ज्ञानस्य उदयो विषयस्य प्रकाश इत्युक्तिर्हि ज्ञानविषययोस्तादात्म्यं वा आनयेत्; घटस्य उदकाहरणं यत्, तदेव पटसंबन्धि प्रावरणमित्येतत्तुल्यतया वा वक्तुरुन्मत्तताम् । तस्मादनन्यापेक्षप्रकाशत्वं ज्ञानस्य स्वरूपं तदन्यापेक्षप्रकाशत्वेन विरुद्धम्, तदेव च ज्ञानान्तरग्राह्यत्वमिति न



ज्ञानं ज्ञानान्तरवेद्यम् । **'तद्विषय'** इति ज्ञानानां ये विषयास्तेषां या व्यवस्थितयः, तासां निष्ठा अनवस्थाभावेन परिसमाप्तिरिति यावत् । **'तदेव'** इति यदस्य ज्ञानस्य स्वरूपं विषयोन्मुखाहंप्रकाशमानरूपत्वम् । **'किमन्यत्'** इति अन्यत् हि तदीयं गुणत्वादि तावत् न भाति अर्थप्रकाशमात्रस्यैव निर्भासात् । भासमानमपिच तद्रूपादि गुणान्तरसाधारणज्ञानरूपतया नैव निर्भातं स्यादिति ज्ञानं न आभातं भवेत् । एतदुपसंहरति **'तत्'** इति यदेतदुक्तं, तस्मात् हेतोः । इदमिति प्रकाशस्वातन्त्र्यरूपादहंभावात् पृथक्कृतं सत् ज्ञानं यदा प्रकाशते, तदा अहं ज्ञाता विषयप्रकाशमयः इत्येवंभूतां पार्यन्तिकीं प्रतिपत्तिमधिशय्य प्रकाशितं भवति । यथा अयं शुक्लो गुणः पटात् पदार्थान्तरभूतस्तत्र परं समवायेन वर्तते इतिविकल्पे अयं पटः शुक्लः इति विकल्पान्तरव्यवधिना गुणस्वरूपमामृष्टं भवति, न साक्षात्; तथा मम ज्ञानमिदमिति इदानीमिति अन्यस्य प्रकाशबलात् यस्य प्रथते इति व्यवह्रियमाणता इदन्तारूपा, तत् जडम्; स्वप्रकाशताबलात् यस्य अहन्तारूपा, तदजडमिति । इत्थंच यदि पराधीनप्रकाशं प्रकाश्यं चेति जडलक्षणम्, तदस्तु; अन्येन तु प्रकारेण प्रकाशभिन्नत्वेन इदन्ता, तदभिन्नत्वेन अहन्तेति जडाजडत्वमिति त्यक्त्वा यत् प्रकाश्यं, तत् जडमित्युक्ते किं तस्य प्रकाश्यत्वम् । ज्ञानस्य उदय इत्युक्ते तस्य न किंचित् स्वरूपमुक्तं भवेत् । एवंच जडलक्षणेन अयुक्तमिति अजडं नीलादि स्यात् । **'उक्तम्'** इति भवतैव । पूर्वपक्षे एवमसंभवात् न लक्षणमतिव्याप्तिश्च अत्रेति हृदये गृहीत्वा भङ्ग्यन्तरेण जडाजडलक्षणस्य अविरोधापादनेन जडाजडयोरव्यवस्थां दर्शयति **'अतश्च'** इति । न केवलं स्वरूपास्वरूपास्पर्शनात्, यावदभ्युपगतेऽपि

स्वरूपस्पर्शित्वे। इतश्च अविरोधात् जडाजडलक्षणयोः प्रसक्तात् जडमपि अजडं स्यात्। अविरोधमेव अपिशब्दद्वयेन द्योतयति। **'अद्य'** इति अस्मदुक्तायां व्यवस्थायाम्। **'अर्थस्वरूपम्'** इति इदन्तया अर्थ एव प्रवृत्तिप्राप्तिनियोजनादिना भासमानतया व्यवह्रियते, अहंतया तु स्वप्रकाशरूपं ज्ञातृज्ञानरूपम्। प्रकाशाच्च यौ भेदाभेदौ, तावन्योन्यविरुद्धौ स्वव्याप्त्योर्जडाजडयोर्विरोधं विदधानावन्योन्यसंस्पर्शाक्षमत्वेन प्रविभक्तं रूपं तयोर्व्यवस्थापयतः। तदाह **'सुव्यवस्थितः'** इति सुष्ठु व्यवस्थितो नियत इत्यर्थः। इयता न किंचित् ज्ञानं ज्ञानान्तरवेद्यं भवतीति उपपादितम्। अधुना यदि कश्चिदाचक्षीत—मा भूदन्यत्र ज्ञानानामन्योन्यवेद्यवेदकता, स्मृतौ तु सा अनुभवविशिष्टार्थनिर्भासनायां कथमवज्ञायते—इति, तं प्रति प्रत्युत ज्ञानस्य वेद्यत्वे ज्ञानविषयं ज्ञानविशिष्टार्थविषयं वा अनुभवान्तरमेव भवेत्, न स्मृतिरिति हृदये गृहीत्वा स्मरणज्ञानेन अस्य अनुभवज्ञानं वेद्यं न भवति,—इति प्रकृतं घटयति **'पूर्वानुभूतस्य च'** इति। चकारो युक्तिसमुच्चये। न केवलं पूर्वोक्तयुक्तिभिर्ज्ञानस्य ज्ञानान्तरवेद्यत्वं नास्तीत्येतावतैव स्मरणज्ञानेन पूर्वानुभवस्य विषयीकारो निषिध्यते, यावत् युक्त्यन्तरेण अपि। तथाहि घटं स्मरामीति ज्ञाने घटस्यैव विषयतया प्रतिभासः, न पूर्वानुभवस्य। स केवलं स्मरणज्ञानेनैव सह मिलितो भाति। अन्यथा तस्य पृथगवभासे स्मरणं घटेन सविषयं न भवेत् योगिन इव परचित्तज्ञानं परचित्तविषयेन। यदाह

'नच सालम्बनं तस्याविषयीभूतत्वात्।'

इति। ननु घटमनुभूतमनुभवामीति स्मरणस्य वपुः, तत्र अनुभूतत्वमर्थस्य विशेषणं न स्मरणेन ऐक्यमापद्यते। उच्यते।



एषा खलु स्मर्यमाणदृश्यमानानुसन्धिरूपा प्रत्यभिज्ञा, नतु शुद्धं स्मरणम्। तत्र तु अनुभूतमिति यदुल्लिख्यते भूतत्वमनुभवस्य, इदमेव स्मरणस्य प्रातिस्विकं वपुः। तत्रापि भूतता विषयोपाधिसंकोचकल्पिता अनुभवदशायोगेन स्वयंवर्तमानत्वेऽपि। अनुभूतं स्मरामीत्यपि प्रतिपत्तावनुभूतमित्यस्यैव स्पष्टीकरणं स्मरामीति, नतु अतिक्रान्तानुभूततास्मरणात् सदा वर्तमानो हि बोधः प्राच्येन ज्ञानेन उद्रिक्तावस्थेन उपलक्षितः स्मरणमिति उच्यते। तदाह **'अनुभवैक्यापन्नम्'** इति। केवलं सौगतेन एतत् कथंचित् समर्थ्यते अनुभवेन स्वसंततौ वासनात्मकशक्त्याधारद्वारेण, नैयायिकेन अपि आत्मनि संस्काराधानद्वारेण, नतु स्मरणेन। अनुभवो ज्ञायते इति तयोर्दर्शनम्। एवं हि पूर्वज्ञानज्ञानरूपमनुभवान्तरमेव भवेत्, नतु स्मरणम्। चिरातीतस्य च ज्ञानस्य निःस्वभावस्य कथमर्थप्रकाशरूपता। नश्यदवस्थं च ज्ञानं ज्ञानेन ज्ञायतां नाम एकार्थसमवायात्, अयोगी तु चिरनष्टमधुना वेत्तीति का संभावना। न जानाति, अपितु स्मरतीति चेत्, तर्हि ज्ञानज्ञानं जानातीति आयातं स्यात्। तत्रापिच अयमेव दोषः,—इति युक्तमुक्तम्। **'नतु अन्तरालवर्ति'** इति। स्मरणस्य विषयस्य च अन्तराले मध्ये भवन्ननुभवो विषयं प्रकाशयन् स्मरणेन प्रकाशमानः स्मरणस्य तं विषयमर्पयतीति न युक्तमित्थमननुभवात्। एतदेव च युक्तम्—यत् स्मरणविग्रहपतित एव विषयप्रकाशात्मा अनुभवः। तथाहि स्मृतिरनुभवं प्रकाशयति तं यो विषयं प्रकाशयतीति उपगमे विषयस्य या प्रकाशना, सा विषयनिष्ठा तावत् न भवति प्रकटतावादस्य दूषितत्वात्; अपितु इयमेव तस्य प्रकाशना या तद्विषयोऽनुभवः। सच यदि न स्वयं प्रकाशते, न किंचित् प्रकाशेत।

अथ उच्यते तस्य प्रकाशना स्मरणेन, तथापि अनुभवस्य प्रकाश्यस्य न धर्मो विषयस्यैव, किन्तु स्मरणमेव तस्य अनुभवस्य प्रकाशना अभवदिति विषयकक्ष्यापतितोऽसावनुभवो जडाकारः प्रकाशभिन्नः कथं मार्गस्य प्रकाशो भवेदिति घटं स्मरामीति अन्धपदं पर्यवस्येत् । तदेतदाह **'सा'** इति विषयप्रकाशरूपता न स्यात् पूर्वानुभवस्य इदन्तया प्रकाशमानत्वेन जडस्य । अन्यत्र स्मरणज्ञाने तन्मुखस्तदधीनप्रकाशो हि असावनुभवः । एवमिदन्ता नाम प्रकाश्यत्वं प्रकाशात् भिन्नत्वं जडस्वरूपमिति स्थापिते स्वपक्षप्रकोपं शङ्कमान आह **'एवंच'** इति । अनेन जडाजडलक्षणविभागेन अहमिदमितिप्रकाश ईश्वरात्मा । तत्र जडाजडयोः कथमेकत्वमिति । तत्र उच्यते—इह इदमित्यपि भासमाने प्रकाशपरमार्थतैव रूपमन्यथा अप्रकाशयोगे इदन्ताया अपि अन्धतमसत्वात् । केवलं मायाशक्त्या प्रकाशाभिन्नेऽपि प्रकाशभिन्नत्वाभिमान इति यथोचितमातृमेयसृष्टिप्रभावित इति जडता उच्यते । ईश्वरदशा च प्रकाशभिन्नत्वाभिमानविषया ये पशुप्रमातॄणाम्, तेऽर्थाः परमार्थतः प्रकाशात्मान इति परामर्शरूपा । तत् पशुप्रमात्रपेक्षया ते जडाः सन्तु नाम, पशुप्रमातृरूपस्यापितु प्रकाशभागस्य वस्तुत ऐश्वरप्रकाशाव्यतिरेक इति तदनुसारेण इदमित्यस्य रूपस्य विद्युन्न्यायेन उन्मिषतोऽपि प्ररोहाभावादहंभावे एव विश्रान्तिरिति सामानाधिकरण्यमहन्तेदन्तयोरुच्यते । एवंच अनूद्यमाना इयमिदन्ता प्रथमं यद्यपि भाति, तथापि अनुभवादस्य स्वविश्रान्त्ययोग्यत्वेन विधीयमानाहन्तानुधावनेनैव कृतित्वमिति अहंमात्रतैव । **'तदाच'** इति ईश्वरदशायाम् । **'नाधिक्यम्'** इति इदन्ता नाम तत्र न अधिका प्रकाशस्य अहन्तात्मनः । स्वातन्त्र्यमहिमैव



हि वस्तुत इदन्ता । तदत्र परस्य स्वप्रसिद्धेनैव दृष्टान्तेन मोहमपोहति **'यथाहि'** इति । एष भङ्गया दृष्टान्त एक एव साधर्म्यवैधर्म्याभ्यां ग्रन्थकारेण उक्तः । यथा रूपं संनिवेशस्य उदये भ्रंशे च रूपमेव तथातदित्युपगमात्, एवं बोधो विश्वस्य उदयप्रलययोर्बोध एव; न अस्य अतिशय आधिक्यमिति साधर्म्यदृष्टान्तः । रूपे तु क्षणिकत्वात् तथा तथेति कश्चित् योऽतिशयोऽङ्गीकृतः, स बोधे न उपपद्यते । बोधस्य एकरूपत्वात् विशेषलेशो न युज्यते इति हि उक्तम् । यत् नरेश्वरविवेकः

> 'नीलादिकोपरागेण न प्रथैव विशिष्यते ।
> अविशिष्टप्रथारूपोपगमात्सर्ववादिनाम् ॥'

इति । एतच्च वितत्य वक्ष्यते इत्याह **'तदास्ताम्'** इति । अस्य प्रमेयस्य औदासीन्यं प्राप्तकालमिति यावत् । यथा रूपस्य न संनिवेशोऽर्थान्तरम्, एवं बोधरूपेऽपि नैव कश्चिदतिशयः संभवतीति साधर्म्ये योजना । तुरेवकारार्थे अत्र, वैधर्म्ये तु विशेषद्योतकः । यथा रूपस्य विशिष्टता स्यात्, एवं बोधरूपेऽपि विशिष्टतात्मा अतिशयः शङ्क्यते; सतु नैव अस्तीति वैधर्म्ये योजना । हीति यस्मादेवं, तदीश्वरदशायां बोधरूपताया न आधिक्यं किंचिदिति संबन्धः । प्रकृतलक्षणविभागस्य हेतुमुपसंहरति **'सिद्धं तावत्'** इति । **'परसंवेद्यता बोधस्य'** इति परसंवेद्यता बोधस्य निषेध्या स्वसंविद्रूपत्वेन हेतुना । तत् हि निषेध्यस्य व्यापिका या इदन्ता, तद्विरुद्धया अहन्तया व्याप्तम् । अहन्तैव हि संविदो लक्षणम् । तेन व्यापकविरुद्धव्याप्तेन स्वसंविद्रूपत्वेन परसंवेद्यत्वं निषिध्यते । अत्र हि स्वसंविद्रूपत्वं ज्ञानस्य परेण अङ्गीकृतं, केवलं तथाभावेऽपि परसंवेद्यत्वमिच्छति । सहि—स्वात्मना संविद्रूपता परप्रकाशा परसंवेद्यत्वं तु तद्विषयज्ञानान्तरो-

दयः, तदनयोः को विरोधः—इत्याह स्म **'को हि विरोधः'** इत्यादिना । तस्य इदानीं विरोधप्रतिपादनेन मोहः शमितः । परसंवेद्यताया हि लक्षणं प्रकाशभिन्नत्वं जडत्वमिदन्ता, संविद्रूपायास्तु स्वसंविद्रूपतायाः प्रकाशतादात्म्यमजडत्वमहन्ता,—इति लक्षणद्वारेण तयोर्विरोध एवेति परसंवेद्यता स्वसंविद्रूपत्वेन निषिध्यते । सा हि हेतोः स्वसंविद्रूपत्वस्य यत् व्यापकमहमिति रूपं, तस्य यत् विरुद्धमिदमिति प्रकाशभिन्नत्वं; तेन व्याप्ता तल्लक्षणिकेति । यश्च विधौ स्वभावहेतुः, स एव तद्विपर्यये निषेध्ये विरुद्धोपलब्धिरूपोऽनुपलब्धिहेतुर्भवतीति दर्शयति **'यथा'** इति । अनित्यत्वे क्षणिकत्वे साध्ये क्रमिकार्थक्रियाकारित्वलक्षणं यत् सत्त्वं तत् स्वभावहेतुः, नित्यत्वे तु निषेध्ये व्यापकविरुद्धव्याप्तोपलब्धिः । नित्यस्य लक्षणं व्यापको धर्म एकस्वभावत्वं नाम, तद्विरुद्धं च भिन्नस्वभावत्वं; तदेव व्यापकं लक्षणं क्रमिकार्थक्रियाकारित्वस्य । क्रमेण अर्थक्रियां करोतीति हि भावितस्य अयं परमार्थः——नानास्वभावोऽयमिति न अवृक्षोऽयं शिंशिपात्वादित्यत्रापि अवृक्षत्वस्य व्यापकं यत् लक्षणमशाखादिमत्त्वं, तद्विरुद्धेन शाखादिमत्त्वेन शिंशिपात्वं व्याप्तमिति व्यापकविरुद्धव्याप्तोपलब्धिरेव । अथ लक्षणात्मा यो व्यापको धर्मः, स न पृथग्व्यावृत्त्या समाकृष्यते पृथगाकर्षणस्य परप्रत्यायनफलस्य प्रसिद्धे विषये निष्प्रयोजनत्वात् ; तदा अवृक्षत्वविरुद्धेन वृक्षत्वेन शिंशिपात्वं व्याप्तमिति विरुद्धव्याप्तोपलब्धिर्भवति । यदा तु शिंशिपायामपि वृक्षत्वं न पृथक् क्रियते प्रसिद्धत्वात्, केवलं भ्रान्त्या आरोपितं यदवृक्षत्वं, तदपसार्यते; तदा स्वभावविरुद्धोपलब्धिरेव भवति । प्रकृतेऽपि परसंवेद्यत्वमिदन्तेति एकं तत्त्वं चेत्, तद्विरुद्धव्याप्तोपलब्धिः । अहन्ता स्वसंविद्रूपत्वमित्यपि



चेदेकं तत्त्वं, तत् स्वभावविरुद्धोपलब्धिरेव । इह तु परसंवेद्यतास्वसंवेद्यते परस्य लक्षणतो न तत्त्वतः सिद्धे । तत एव हि स तयोरविरोधमभिमनुते इत्याशयेन लक्षणात् स व्यापको धर्मस्तयोः पृथक्कृत्य प्रदर्शित इति व्यापकविरुद्धव्याप्तोपलब्धिर्विवृतिकृता दर्शिता । न अनग्निर्धूमादित्यपि विरुद्धकार्योपलब्धिरेव भवतीति । एवं तत्र तत्र अवधातव्यमिति अलमवान्तरेण । एवमजडे परसंवेद्यतामपाकृत्य परसंवेद्येऽपि स्वसंविद्रूपता नास्तीति दर्शयति **'घटस्यापि'** इति । यद्यपि घटस्य स्वसंविद्रूपत्वं न केनचिदुपगतम्, तथापि विरोधस्फुटीकरणाय इदमुक्तम् । यथार्थधर्मप्रकटतावादिनस्तत् बलात् प्रसज्यते, नच युक्तं विरोधादित्येतदनेन दर्शयति। **'अनयैव'** इति सैव इयमनुपलब्धिजातिरित्यर्थः । स्वसंविद्रूपत्वस्य निषेध्यस्य व्यापकमहमिति । तद्विरुद्धमिदमिति, तेन व्याप्तं परसंवेद्यत्वमिति । एतदुपसंहरति **'तदेवम्'** इति । अशेषमपि विश्वं यदि क्रमेण यदिवा युगपदपि संवेद्यते, तथापि वर्तमानमेकं ज्ञानं स्वविषयमात्रमेव गृह्णाति; नतु कस्यचित् विषयस्य ज्ञानान्तरस्वीकृततां वेत्ति । ज्ञानं हि न ज्ञानान्तरेण ज्ञायते जडतापत्तेः । ज्ञानान्तरस्वीकृतत्वे च अज्ञाता इयं मया पूर्वं दुःखरूपा, अर्थक्रियासाधनो निश्चितोऽयं सुखसाधन इति संवेदनाभावात् भूतग्रस्त इव न तस्मिन् दृष्टे तितिक्षोपादित्सात्मिकामिच्छारूपामर्थितां भजेत । तदभावे त्यजामि—गृह्णामीतिप्रयत्नोपक्रमः कायस्पन्दमध्यस्तत्त्यागादानरूपप्राप्त्यन्तो व्यवहारो न स्यादिच्छाद्वेषयोः स्मृतिपूर्वकत्वात् तदभावेऽनुत्पत्तेस्तत्पूर्वकप्रयत्नाभावे प्रयत्नजशरीरकर्मासंभवे तत्कृतार्थसंयोगविभागाद्यसंपत्तेरिति सद्योजातनालिकीरद्वीपवासिभिरिव प्रमातृभिः स्थीयेत । तेषामपिवा अस्ति अनुसन्धा-

नादि किंचिदिति तेभ्योऽपि शोच्याः प्रमातारो न प्रमातारः स्युः । इयता सूत्रं व्याख्यातम् । ज्ञानानां यदेकमनुसन्धानविषये मेलनं, ततो जन्म यस्याः सा जनस्थितिस्त्यागोपादानादिव्यवहारो नश्येदिति । वृत्तिरपि—ज्ञानानां यत् परस्परं विषयेषु संघट्टनं, तत् यथा विकल्पज्ञानमनुभवस्य विषये—इदं दृष्टं विकल्पयामीति, सोऽपि विकल्पज्ञानस्य—यदेव अनुमानेन विकल्पितं, तदेव पश्यामीत्यादौ, उभयस्यापि स्मृतिः, तस्या अपि प्रत्यभिज्ञानमित्यादिबहुप्रकारम्, तदेव प्रकृतं मूलकारणं यस्य लोकव्यवहारस्य स तस्मिन् संघट्टनात्मनि मूलनिदाने निरस्ते केन प्रकारेण भवेत् । संस्कारादिना केवलेन तस्य न संपत्तिरिति हि भणितमेव । **'वृत्तौ च'** इति **'ज्ञानानाम्'** इत्येव षष्ठी वृत्तौ प्रयुक्ता **'तेषाम्'** इति । परामर्शेन सूत्रे अनुसन्धानस्य नित्यसापेक्षत्वात् समासः, अन्यथा चैत्रस्य चित्रा गावोऽस्येतिवत् न स्यात् । अनुसन्धानं तु नित्यसापेक्षं सकर्मकत्वादस्याः क्रियायाः । वृत्तौ विषयसंघट्टनायाः प्राधान्यात् **'तेषाम्'** इत्यपेक्षणेऽपि समासस्य यद्यपि न विरोधः, तथापि विषयार्थस्य अप्रधानस्य तेषामित्यपेक्षणे समासाभावः प्राप्नोति, स विषयस्य नित्यसापेक्षत्वं विषयापेक्षणादिति परिहृतः । समासेन च अत्र तद्धितवृत्तिरपि उपलक्ष्यते । नहि भवति धान्यानामपूपमयी यात्रेति । इह तु विषयसंघट्टना विषयद्वारेण नित्यसापेक्षेति भवत्येव धनस्य अर्जनसमये इत्यादिवत् । ननु व्यवहारोऽयं मूढानां विप्लवमात्रमविचारितरमणीयम् । का तत्र तत्त्वपरीक्षा । असदेतत् विप्लवेन व्यवहारनियमानुपपत्तेः । किञ्चिदेव हि अयं जहाति, किञ्चिदेव च उपादत्ते । तत् नियतनिदानाभावे कुतस्त्यो नियमः । अस्तुवा मूढव्यवहारो विप्लवः, यस्तु अमूढानां व्यवहारः, स



कथं समर्थ्येतेति दर्शयति वृत्तिकृत् **'परमार्थ'** इत्यादि । एतत् व्याचष्टे **'विदितवेद्यैरपि'** इति । **'तत्त्वम्'** इति ननु लोकव्यवहारः । **'अयमेव क्रमः'** इति अनुभूतानुसन्धानादिः । कुत इति चेत्, आह **'तेऽपि हि'** इति । न केवलं मूढा एवं, यावत् तेऽपि,—इति अपिशब्दः । **'विदितपूर्वम्'** इति अनुभवं दर्शयति । **'एवमयम्'** इति स्मरणानुसन्धानपूर्वकं विकल्पनम् । **'शिष्येभ्योऽपि'** इति अवतारणीयेभ्य इति यावत् । यदिवा न केवलं शास्त्रकरणात्मनि उपदेशेऽयं क्रमः, यावत् संनिहितान्तेवासिसंक्रमणोपदेशावसरेऽपीति अपिशब्दः । एतदुक्तं भवति—असर्वज्ञस्तावत् तत्त्वमागमानुमानयोगिप्रत्यक्षादिना स्वात्मनि प्रसिद्धं शास्त्रे निबध्नन् परस्मै वा निरूपयन् स्मृत्वा स्मृत्वा विकल्प्य निरूपयेदिति तावत् स्थितम् । योऽपि सर्वज्ञो विश्वं साक्षात् पश्यति, सोऽपि शिष्यमुपसंक्रान्तबोधं चिकीर्षुरुपदिदिक्षुः शास्त्रं वा चिकीर्षुः शब्दोपारोहयोग्यतां शिष्यजनभावनायोग्यतां च साक्षात्क्रियमाणस्य स्वलक्षणस्य पश्यन् तस्मात् साक्षात्कारात्मकात् सार्वज्ञ्यात् स्वातन्त्र्यरसेन करुणारसेन वा व्युत्थाय अयमिति साक्षात्कृतमपि अर्थमेवमिति विकल्पनेन अनुसन्धाय उपदिशेत् । विकल्पनं च पूर्वदृष्टतासमुल्लेखेन शब्दाद्यनुस्मरणप्राणतया च भवतीति । सोऽपि तदानीं पूर्वापरज्ञानमेलनां विना कथमुपदिशेत् । यथोक्तं भवद्भिरेव

'तथताव्युत्थितो बुद्धस्तथतामुपदेक्ष्यति ।'

इति । आगमेषु अपि

'पुंसामनुग्रहार्थाय परोऽप्यपरतां गतः ।'

इति । तथा

'यथा प्रक्ष्यन्ति ते शिष्यास्तथा स्थास्यति शङ्करः ।'

इत्यादि च । '**तेषामपि**' इति प्रबुद्धानाम् । '**लोकयात्रा**' इति परोद्धारणादिका । '**स्वात्म**' इति स्वविषयप्रकाशतायामात्ममात्रप्रकाशतायां च विश्रान्तैर्वर्तमानैरेवेत्यर्थः । '**सर्वे एव**' इति प्रबुद्धाश्च अप्रबुद्धाश्च । '**निःस्तिमिताः**' इति भूतग्रस्तप्रायाः । नहि सर्वज्ञोऽपि भूतग्रस्त इव आस्ते तस्यापि विकल्पयितुमशक्तावस्वातन्त्र्यापत्तेर्जडताप्रसङ्गात् । अत एव परमशिवस्य अपि भगवतः शक्त्युपक्रमं लयभोगाधिकारैः सदाशिवेश्वरविद्येश्वरादिक्रमेण मायाप्रमातृपर्यन्ततया प्रकाशनमेव विकल्पनव्यापाररूपमिति निःस्तिमितत्वं जाड्यमेव । निःस्तिमितत्वविपक्ष एव हि विमर्शः स्फुरत्तास्पन्दादिव्यपदेश्यो भगवतः शक्तिविशेषो यन्न्यूनतातारतम्यकृतं स्थावरान्तं जडत्वम्, यदुत्कर्षतारतम्यकृतं च भगवत्परमशिवान्तं प्रबुद्धत्वमिति वक्ष्यामः

'सा स्फुरत्ता..................... ।' (१।५।१४)

इत्यादौ । ननु अयमुपदेशोऽपि विप्लवत्वात् पारमार्थिकं विषयं नैव स्पृशतीति शङ्कित्वा आह '**परमार्थोपदेशस्यापि**' इति । लौकिकस्य व्यवहारस्य अस्तु तावत् विप्लवता; अस्यापितु विप्लवत्वे यः परमार्थ उपदिष्टो भावितश्च, तस्य परमार्थतः पूर्वप्रकाशितपरमार्थरूपत्वाभावे परमार्थोऽस्पृष्ट एव कथं प्राप्येत । मिथ्यापरमार्थोपदेशपूर्विका हि भावना मिथ्यापरमार्थ एव कृता तमेव स्फुटीकुर्यात्

'..............यद्यदेवातिभाव्यते ।'

इति न्यायात्; अथ सत्यपरमार्थमेव स्फुटीकरोति प्राच्यानुभवविषयीकृतं, ततो न विप्लवता । एवंच संवेदनानां विषयमेलनमायातमिति आकूतान्तरम् । ननु किमत्र विषयमेलनेन । यथाहि बीजाद्याद्यातिशयादिक्रमेण अन्त्यातिशयं प्राप्तादङ्कुरो मृदश्च



घट इत्यादिर्विचित्रः कार्यकारणभावो लोके प्रसिद्धः; नच तत्र विषयमेलनं किंचिदुपयुज्यते समर्थ्यते वा; तथैव पूर्वमनुभवः, ततो विकल्पः, तत उपदेशनम्, ततो भावनाभियोगः, ततो भावनानिष्पत्तिः, ततः परिस्फुटा भवति ज्ञानोदये इयमेव परमार्थप्राप्तिरिति । किमत्र विषयमेलनसमर्थनाप्रयासेनेत्याशङ्क्य ब्रूते '**नचेदम्**' इति । कार्यकारणभावोऽयं भवति, नतु बीजाङ्कुरादिजडतुल्यवृत्तान्त इति मात्रपदम् । अयं भावः—इह कार्यकारणभावमात्रेण अनुभवविकल्पादीनां जडतुल्यवृत्तान्तत्वे स्वरूपमात्रनिष्ठत्वेन परत्र अकिञ्चित्करत्वात् विषयस्य साक्षात्करणं विकल्पनं स्मरणमित्यादयो विषयनिष्ठाप्रकाशनविमर्शनपरमार्था व्यापारात्मानो व्यवहाराः कथं भवेयुः, अध्यात्मसिद्धाश्च अमी न अपह्नोतुं शक्याः । एते च एकविषयतया विना कथं प्रकल्प्येरन् । दृष्टं विकल्पयामि स्मरामीति हि तेषां प्राणितम् । तस्याश्च असमर्थनीयतायां विकल्पाः प्रत्यक्षायन्ते, अनुभवः स्मृतिबीजमाधत्ते स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेनेत्यादि किमर्थमुद्घोष्यते । तद्धि एकविषयतायाः संपत्तये जालमुत्थाप्यते । सा तु तावता न सिध्यतीत्येतावदस्माभिरुच्यते इति । एतदाह '**प्रतीतिरेषा**' इति अनुभवविकल्पनोपदिदिक्षोपदेशभावनादिरूपं यदुपदेशनं, तत् किल प्रतीतिविषयनिष्ठं संवेदनम्; नतु बीजादिजडवत् स्वनिष्ठं किंचिद्रूपम् । ततः किमिति । आह '**प्रतीतिश्च**' इति । भूतं यत् परमार्थज्ञानमुपदेष्टुरज्ञतोपदेशे वितारकत्वादुपदेष्टृतायोगात् भविष्यच्च यत् परमार्थज्ञानं स्फुटं फलरूपं भावयितुस्तयोर्ज्ञानयोर्यो विषयः, स एव यदि स्मरणविकल्पनोपदिदिक्षोपदेशविकल्पनभावनापरम्पराणां न भवेत्; तर्हि अन्यत् ज्ञातमन्यत् विकल्पितमन्यदुपदिष्टमन्यत् भावितमन्यत् प्राप्तमिति भवेत् । नच एतत् समञ्जसं

'..................यद्यदेवातिभाव्यते ।
भावनापरिनिष्पत्तौ तत्स्फुटं कल्पधीफलम् ॥'

इति यत्तद्वथामेकविषयत्वस्य दर्शितत्वात् । प्रमाणादपि हि प्रवृत्तिप्राप्त्यादिकमेकविषयतयैव संतानाशयेन निर्वाह्यते, अन्यथा प्रमाणाप्रमाणविभागायोगः । तदेतत् सर्वं निगमयति **'तस्मात्'** इति । अयमिति प्रबुद्धाप्रबुद्धनिष्ठो व्यवहारोऽन्योन्यं विषयाणां प्रापणं, ज्ञानान्तरगतस्य हि विषयस्य ज्ञानान्तरे स्मृत्यादौ प्रमात्रन्तरविषयस्य च प्रमात्रन्तरे नियोगोपदेशादौ प्रापणं स्वात्मनि परमात्मनि च व्यवहार उच्यते । व्यवेति व्यतिहारे, हरतिः प्रापणे । स व्यवहार एकविषयत्वेन व्याप्तः । तद्विरुद्धा अनेकविषयता । अनेकात्मत्वे च ज्ञानानां सा व्यापिका प्रसज्यते । प्रकारत्रयेण हि तदुपपद्यते । प्रकारद्वयं च दूषितम् । नहि दृष्टता विषयधर्मः । यदाह भट्टः

'व्यापृतिः प्रत्ययस्यार्थे तत्र किंचिदकुर्वतः ।'

इति । **'प्रतिपद्यते'** इति । प्रतिपत्तिरेव कथंचिद्भाव उक्तः स्यात्, नतु अर्थस्य रूपातिशयो निर्वर्त्यते । तथात्वे अन्येन्द्रियादिव्यापारमन्यस्य न प्रतीतयेऽपेक्षेत, यथा कृतो न पुनरन्यस्य करणमित्यादि च । तत् विषयधर्मता न युक्ता । वेद्यता च संविदां निरस्ता । यदि च अयमवशिष्यमाणोऽपि प्रकारो न स्यात् ज्ञानानामेकात्मकतालक्षणः, तदयं व्यवहारो व्यापकविरुद्धव्याप्तोपलब्ध्या न भवेदेव । **'नश्येत्'** इति सूत्रस्य वृत्तिः **'कथम्'** इति विवृता **'न स्यादेव'** इति संभावनालिङ्ङ । कथमिति च प्रश्नेन अनपह्नवनीयतां व्यवहारस्य ब्रुवाणः पारिशेष्यात् सिद्धैव ज्ञानानामेका अन्तर्मुखसंवित्तत्त्वस्वरूपतेत्याह । अत एव समनन्तरलभ्रतयैव **'न चेत्'** इति सूत्रार्थोऽत्र स्फुरति ॥ ६ ॥



**न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः ।**
**स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ॥ ७ ॥**

तस्य च व्यवहारबलादनपह्नवनीयात् सिध्यति एकात्मतेति तात्पर्यं निषेधमुखेनापि प्रवृत्तौ । एतदर्थ एव हि यद्यर्थश्चेच्छब्दः । सहि स्वमतस्य दार्ढ्यमाह परपक्षेऽनपह्नवनीयस्यापि अवश्यमापतति संभव इति द्योतयन् । तदेतत्तात्पर्यमवतारणिकायामाह **'युज्येत'** इति हेतुहेतुमतोर्लिङ्ङ । व्यवहारसंभवस्य ज्ञानानामेकात्मता हेतुरिति । **'एतादृशः'** इति प्रबुद्धाप्रबुद्धनिष्ठ एकविषयतामय इत्यर्थः । **'चिन्मात्रसारत्वेन'** इति **'चिद्वपुः'** इत्यस्य व्याख्या **'विश्वात्मनः'** इति **'अन्तःकृत'** इत्यादेः **'परमेश्वरस्य'** इति **'महेश्वरः'** इत्यस्य । **'आत्मा'** इति स्वभावः । **'एताः'** इति सर्वजनप्रसिद्धाः । **'विचित्राः'** इति तत्तत्स्वातन्त्र्यबलात् विचित्रोन्मेषनिमेषभाजः । **'शक्तयः'** इति तदाश्रिताः, नतु स्वतन्त्राः, नापि तत्स्वरूपातिरिक्ता धर्मधर्मिभावेन परं वर्तमाना इत्याह **'शक्तियोगलक्षणं च'** इति । एतदेव अस्य माहेश्वर्यम् । अनेन **'ज्ञान'** इत्यादि व्याख्यातम् । एवं तात्पर्यं व्याख्याय **'न चेत्'** इति सौत्रं स्पृशति **'अन्यथा तु'** इति । प्रकाशरूपं तावत् संवित्तत्त्वं सकलप्रमाभित्तिभूतं स्वयं सिद्धं, न साध्यमिति तद्भित्तिपृष्ठे अन्यत् निरूप्यमित्याशयेन वृत्तिकृत् तदनुवादेन विश्वरूपत्वं सौत्रं व्याचष्टे इति टीकाकारो विवृणोति **'प्रकाशरूपम्'** इति । **'हि'** इति यस्मादेवं, तस्मात् वृत्तिकार इदं विध्यनुवादरूपमाह । **'तत्र च उपपत्तिमाह'** इति दूरेण संगतिः । एतावता आदिसिद्धसूत्रार्थः स्मारितः । **'नीलसुखादेः'** इति बाह्यस्य आन्तरस्य च सर्वस्येति यावत् । **'जडाभिमतस्य'** इति परमार्थतश्चिद्रूपस्य अपि

चिच्छक्तेरेव मायात्मिकाया अभिमानमात्रेण गृहीतजडभावस्ये-त्यर्थः । **'स्वयम्'** इति जडस्य हि लक्षणमुक्तं—न अस्य आत्मीयः प्रकाशः इति । तर्हि परोऽस्य प्रकाशो भविष्यति । नेत्याह **'अतद्रूपत्वे च'** इति । यस्य यत् न रूपं, स तेन न समानाधिकरणतया परमार्थतो व्यपदिश्यते नीलेन इव सिन्दूरम् । तथाच अप्रकाशात्मा भाव इति प्रकाशेन तथा न व्यपदिश्येत, तत्तद्व्यपदेशस्य नियमवत्त्वात् ताद्रूप्यं कारणमिति कारणानुपलब्धिः । व्यपदिश्यते च एकाधिकरणतया प्रकाशेन पराभिमतो जडः प्रकाशते इति, तस्मात् तद्रूप एवेति स्वभावहेतुर्व्याप्तिः कारणानुपलब्ध्या अधुनैव प्रसाधिता यतः । ननु च व्यतिरिक्तेन श्वेतगुणेन धर्मी तथा व्यपदिश्यते,—इत्यनेन अनैकान्तिको हेतुः । मैवं विपक्षतो बाधकेन आकृष्टस्य हेतोः साध्येन व्याप्तिसिद्धौ व्यभिचारस्य निरवकाशत्वात् । नहि व्यतिरिक्तेन श्वेतगुणेन श्वेतमानता युक्ता । यत् नरेश्वरविवेकः

'स्वयं प्रासादो न श्वेतो नाप्यश्वेत······ ।'

इति अप्रामाणिकोक्तिः । नहि वस्तुधर्मयोरन्योन्यपरिहारेण अवस्थितयोरन्यतरेण अयुक्तं वस्तु संभवेदिति । **'उपपादयिष्यते'** इति

'प्रकाशात्मा प्रकाश्योऽर्थ················।' ( १।५।३ )

इत्यादिस्थानेषु । ननु च इह ज्ञानानामेक आत्मा,—इति समर्थयितुं प्रक्रान्तं, तत् किं जडानामपि तदेकात्मताभिधानेनेत्याशङ्क्य आह **'भिन्नावभासिनाम्'** इति । चः उक्ताशङ्कासूचकः । अपिशब्दो दण्डापूपीयन्यायेन प्रक्रान्तप्रमेयसिद्धिद्योतकः । यत्र भिन्ना अपि अभिमननात्मकस्वातन्त्र्यविमर्शबलात् प्रतिभान्त इदन्तया परिगृह्यमाणत्वात् परमार्थतोऽहमितिप्रकाशमात्रस्वरूपाः,



तत्र ज्ञानानामहमंशातिरेकेण निर्भासमानानां कथं ताद्रूप्यं न भविष्यति । तेषां हि अहमंशादाधिक्यमव्यापकत्वमनित्यत्वं च विषयस्वरूपदेशकालानुवर्तित्वेन संकुचिततया यत् भाति, तत् हि विषयौन्मुख्योपाधिकृतम् । विषयस्यापितु प्रकाशात्मकत्वे सा आधिक्यसंभावनापि निर्मूलिता भवति । तदेतदाह **'तथापि'** इति तेनापि अहमंशाव्यतिरेकप्रकारेण वर्तमानानामित्यर्थः । विषयस्य यो मायाशक्तिकृतादभिमानमात्रात् भेदः, तेन अवकल्पितोऽवज्ञया अप्ररोहयोगेन कल्पितः स्वाच्छन्द्येन उपरचितो यो भेदः, तद्वतामेषां ज्ञानानां मायादशायामपि अस्यां पारमार्थिकं प्रकाशात्मकाहन्तातादूप्यमखण्डितमेव । माया हि भगवतः शक्तिः । सा न अस्य स्वरूपमावृणुते शक्त्या शक्तिमतामनावरणात् । एवं प्रकृतप्रमेयसिद्धिप्रसङ्गेन उक्तमपि एतददधिकरणसिद्धान्तदिशा साध्यान्तरमपि व्यवहारान्यथानुपपत्त्या सिध्यतीति । एवकारेण प्रकाशमानतया विना तावत् व्यवहारा न उपपद्यन्ते, साच चित्तत्त्वस्यैव, न अन्यस्येति द्योतयता स्वतन्त्रचिदद्वैतमपि सिध्येदिति समस्तशास्त्रार्थसिद्धिरियतैव अयत्नघटितेति वृत्तिकृदाह । इयता **'अन्तःकृतानन्तविश्वरूपश्चिद्वपुर्ज्ञानादिशक्तिमान्'** इति सूत्रांशः कृतोपक्षेपः । अन्तःकृतं बहीरूपमपि सत् प्रमातृरूपस्वात्मैकरूपत्वात् मनागपि अच्युतं स्वाच्छन्द्यशक्त्या कृतं संपादितम् , अन्तरितिच प्रमात्रेकात्मकतया स्थितं सत् कृतं बहीरूपताभासनेन निर्मितमनन्तं चतुःषट्षोडशचतुर्विंशतिषट्त्रिंशदादिपरिगणितरूपादभ्यधिकमपि

'तस्य तेनाथ························ ।'

इति न्यायेन संभाव्यमानं विश्वं रूपं विशति अस्मिन् सर्वमिति

वेद्यसमूहो येन। **‘न चेत्’** इति तु सौत्रं वृत्तिकृता पूर्वमेव व्याख्यातं **‘कथम्’** इति। अनेन च अन्यसूत्रार्थस्पर्शेन वृत्तिकृता **‘नश्येत्’ ‘न चेत्’** इति सूत्रांशयोरेकवाक्यत्वेन निर्वाहो हेतुमल्लिङ्ग उक्तः इति स्फुटीकृतम् । ननु पूर्वमुक्तमनुसन्धानजन्मा जनस्थितिः, तदिह वक्तव्यं न चेदनुसन्धानं स्यादिति, तत् कथमुक्तं चिद्वपुरित्याशङ्क्य वृत्तिकृदाह **‘अशेषपदार्थज्ञानानामन्योन्यानुसन्धानं चित्तत्त्वम्’**इति। सामानाधिकरण्येन अनुगामित्वेन सन्धानं विच्छिन्नसंमतानामपि ज्ञानानामेकीभवनं नाम चिदेव अन्तर्मुखा, न अन्यत् किंचिदिति। तदत्र दधातिः कर्मकर्तृविषयः । स्वयं सन्धानं पट्टतूलशकलानामितिवत् । अथ मिश्रीकरणं सन्धानं, तथापि तस्य मिश्रीकर्तुश्चित्तत्त्वादनन्यत्वमिति युक्तमेव अभेदेन उपचरणं क्रियाकर्त्रोः परमार्थत ऐक्यात्। अनेन एतदुक्तं भवति—अनुसन्धानात् जनस्थितिरिति सत्यम्, तत्तु अनुसन्धानमेकविषयतालक्षणं प्रकारान्तरेण उक्तनीत्या न संभवतीति परिशेषत एकचिद्रूपतामात्रायत्तं संपद्यते इति। **‘अन्यथा’** इत्यादिना उपक्रमेण **‘केवलप्रदेश’** इत्यादि अभिदधत् नियतग्रहणात्मिकां सर्वव्यवहारमूलभूतां जनस्थितिमनुपपद्यमानामावेदयमानो **‘न चेत्’** इत्यनेन सह **‘नश्येत् जनस्थितिः’** इत्यस्य एकवाक्यतां दर्शयति। तत्र आसतां तावत् प्रवृत्तिप्राप्त्युपदेशादयोऽनन्तरसूत्रवृत्तिटीकाप्रदर्शिता व्यवहारा येषु स्फुटमेव अनुसन्धिः संवेद्यते। नियतैकपदार्थज्ञानं यत् स्वविश्रान्ततया अनुसन्ध्यनधीनं संभाव्यते, तदपि एकान्तर्मुखसंवेदनरूपत्वाभावे बहिर्मुखानां संवेदनानां न भवेदिति तत्परिच्छेदः। अन्यव्यवच्छेदैर्ग्रहणव्यवहारोऽपि स्वपरविषयो य उच्यते, सोऽपि न निर्वहेदित्याशयेन



सौगतीयमभावसिद्धिप्रकारमेव विचारयति। तत्र ज्ञानं स्वप्रकाशैकरूपमिति उपपादितमसकृत्। यथाह तत्रभवान्

‘यथा ज्योतिः प्रकाशेन नान्येनाभिप्रकाश्यते।
ज्ञानरूपं तथा ज्ञाने नान्यत्राभिप्रकाश्यते ॥’

इति। ततश्च ज्ञानान्तरेण एकज्ञानसंसर्गयोग्यं न भवति येनैवमुच्येत यदि द्वे ज्ञाने भवेतां, तद्विज्ञानज्ञानं तृतीयं भवेत्; इदं तु एकज्ञानज्ञानं, तस्मात् न द्वे ज्ञाने स्त इति। तदत्र घटो वैधर्म्यदृष्टान्तः। तमेव व्याचष्टे **‘संवेदयमानम्’** इति स्वसंवेदनतया। एतच्च **‘केवलप्रदेशज्ञानम्’** इति कर्तृपदस्य विशेषणम्। ननु यदि एवं घटाभावो निश्चितः सिद्धः, तत् किमधिकमस्माकं साध्यं घटज्ञानाभावनिश्चयेनेति। आह **‘स्यात् यावता’** इति भवेदेतत्, नतु भवति यत एवं वर्तत इत्यर्थः। तेन विना स एव न निश्चितः सिद्ध इति तात्पर्यम्। **‘कामम्’** इति त्वदभिप्रायेण अस्तु तावत् सांप्रतमियदिति भावः। **‘अन्यथा’** इति यदि नास्तीति न सिध्यतीति उच्यते, तदवश्यमापतति घटस्तत्र अस्तीति। तत्सद्भावे च केवलप्रदेशे न विषययोर्ज्ञानम्, अपितु तदेकसामग्रीकग्रहणम्। **‘घटमपि’** इति सघटप्रदेशज्ञानं तत् भवेत्, नतु एतद्विपरीताघटप्रदेशज्ञानम्। **‘द्वितीयं तु’** इति व्यतिरिक्तम्। **‘केन’** इति नहि अघटप्रदेशज्ञानेन ज्ञानान्तरस्य भावो ज्ञायते, येन तदभावोऽपि ज्ञायेत। ननु स्वात्मानं निश्चिन्वता ज्ञानेन केवलप्रदेशालम्बनेन तावत् स्वयंप्रकाशेन भूयते। सघटप्रदेशज्ञानं तु यदि तत्काले अन्यत् स्यात्, तेनापि प्रकाशमानेन भूयेत। नच एवम्। ततश्च तत् नास्तीति निश्चीयतामिति पराशङ्कां दूषयति **‘नच’** इति। इति च वक्तुं न युज्यते इति संबन्धः। **‘हि’** इति यस्मादेतदेव केन

प्रकारेण ज्ञातं–सघटप्रदेशज्ञानेन स्वप्रकाशेन च भूयते इति। ननु अघटप्रदेशज्ञानं प्रकाशते इत्यत्र इदमेव तत्त्वं सघटप्रदेशज्ञानं न प्रकाशते इति। नैतदित्याह '**अघट**' इति। पर्युदासवृत्त्या हि अत्र वस्त्वन्तरप्रकाशो भाति, नतु प्रसज्यप्रतिषेधात्मा सघटप्रदेशज्ञानप्रकाशाभावः । ननु भावाभावयोरन्योन्यपरिहारात् पर्युदासेऽपि तद्विपरीतवस्तुनो निषेधः कृत एव भवति। सत्यं तादात्म्येन शङ्क्यमानस्य, नतु व्यतिरिक्तस्य एतत्समयसंभाव्यमानस्य। अनीलप्रकाशेन हि स्वप्रकाशेन स्वात्मनि नीलप्रकाशरूपतायाः काममभाव आवेदितः, नतु पृथग्भूतायाः। ननु केवलं प्रदेशज्ञानं यथा प्रकाशते, तथा पृथग्भूतम्। अघटप्रदेशज्ञानाभावोऽपि प्रकाशेत, यदि अभावो ज्ञानं स्यात्। स तुच्छरूपः कथं प्रकाशो भवेत्। '**एकतर**' इति भावेन सघटप्रदेशज्ञानस्य व्यतिरिक्तस्य अभावेन वा अव्यभिचारोऽविनाभावो नास्ति केवलप्रदेशप्रत्ययस्य उभयथापि उपपत्तेः। ननु सघटप्रदेशज्ञानस्य कारणं घटसद्भावः, घटसद्भावस्य च व्यापकं तुल्यसामग्रीकप्रत्ययग्राह्यवस्त्वन्तरसंवेदनसंवेद्यत्वम् । सतोऽपि हि घटस्य तत् यदि न भवेत्, न कदाचित् सघटप्रदेशज्ञानं स्यात्। नच तद्व्यापकमुपलभ्यते। तस्य हि विरुद्धं प्रत्युत केवलप्रदेशज्ञानं स्यात्। नच तत् व्यापकमुपलभ्यते इति व्यापकविरुद्धोपलब्ध्या घटाभावे निश्चिते कारणानुपलब्ध्या सघटप्रदेशज्ञानस्य अभावो निश्चीयते। एकैव वा कारणव्यापकविरुद्धस्य उपलब्धिः स्वविरुद्धव्याप्तकार्यस्य निषेधाय प्रभविष्यति। किंच केवलप्रदेशो घटो वा अनन्तरूपपरमाणुमयः संनिहितानन्तावयवो वा । तत्र यावन्ति द्रव्याणि, तावन्ति चेत् पृथक् ज्ञानानि; तर्हि तेषां पृथक् पृथक् स्वप्रकाशत्वेन एकसमूहरूपप्रकाशाभावात् प्रदेशज्ञानमेव



न भवेत्, भाति च तत्प्रदेशज्ञानमिति दृश्यानुपलब्धिप्रसङ्गभयेन रूपात्मनां वस्तूनां संनिहितानामनेकज्ञानग्राह्यत्वलक्षणात् विपक्षात् व्यावृत्तावेकज्ञानस्य ग्राह्यत्वेन व्याप्तिरिति रूपात्मको घटः संनिहितश्चेत्, तत् रूपात्मकप्रदेशग्राहिकेवलप्रदेशज्ञानग्राह्य एव भवेदिति केवलप्रदेशज्ञानमेव सघटप्रदेशज्ञानं स्यात्। नच तत् तथा, अपितु तद्विपरीतमिति व्यापकविरुद्धव्याप्तोपलब्ध्या घटस्य निषेधः । चाक्षुषं प्रदेशज्ञानं स्वावधौ न पृथक् घटज्ञाने चाक्षुषे पृथक् भवति चाक्षुषत्वात्। पृथक्त्वस्य व्यापक एकत्वानियमः। तस्य विरुद्ध एकत्वनियमः। तेन उक्तयुक्त्या व्याप्तं चाक्षुषत्वमिति व्यापकविरुद्धव्याप्तोपलब्धिः । तर्हि एवमुच्यमाने घटज्ञानाभावोऽनुमानगम्य एव स्यात्, न कदाचित् प्रत्यक्षः। अनुमानगम्यत्वे च अनवस्थानादसिद्धिः। तथाहि दृश्यानुपलब्धिर्वस्त्वन्तररूपा बाह्या ज्ञानान्तररूपा च आभ्यन्तरी प्रत्यक्षसिद्धैव प्रत्यक्षविकल्पेनैव व्यवहार्या, केवलं नास्तीत्यभावात्मना व्यवह्रियमाणा प्रमाणान्तरमपेक्षते येन उच्यते–यावान् कश्चित् प्रतिषेधः, स सर्वोऽनुपलब्धेरिति। आनुमानिकत्वे तु सापि स्वभावानुपलब्धिर्व्यापकादेरन्यस्य अनुपलब्ध्या विरुद्धस्य उपलब्ध्या च साध्यते, तदा सापि अनुपलब्धिरन्यानुपलब्ध्या अन्यविरुद्धोपलब्ध्या वा,–इति अनिष्ठा। विरोधोऽपि हि तद्ग्रहणे नियमेन तस्य ग्रहणाभावात् निश्चीयते लाक्षणिकः । ग्रहणाभावश्च अनुपलब्ध्येति अनवस्था। सहानवस्थानविरोधोऽपि अपर्याप्तकारणस्य भवतोऽन्यभावेऽभावात् विरोधगतिदृशा निश्चेयः। अभावश्च अनुपलब्ध्येति अनिष्ठैव। तथा आचार्यधर्मकीर्तिः

'एकोपलम्भानुभवादिदं नोपलभे इति।
बुद्धेरुपलभे वेति कल्पिकायाः समुद्भवः॥

विशिष्टरूपानुभवादन्यानन्यनिराक्रिया ।<br>
तद्विशिष्टोपलम्भोऽतस्तस्याप्यनुपलम्भनम् ॥<br>
तस्मादनुपलम्भोऽयं प्रत्यक्षेणैव सिद्ध्यति ।<br>
अन्यथार्थस्य नास्तित्वं गम्यतेऽनुपलम्भतः ॥<br>
उपलम्भस्य नास्तित्वमन्येनेत्यनवस्थितिः ।'

इति । सर्वं च अनुसन्धानं स्मरणानुसन्धानप्राणं विषयमेलनेन विना न संभवत्येव । अथ एवमुच्यते **'तत्'** तस्मादुच्यमानात् हेतोः **'एवम्'** इति, स्वकल्पनया लोकप्रतीत्यननुगृहीतया य इयानिति अनवस्थापादको न्यायस्तस्य अनुसरणादिति वाक्यसंगतिः । यदि तु अस्मदृशा ज्ञानानां स्वसंवेदनमन्तर्मुखमेकमेवेति अङ्गीक्रियते, तदा स्वविशिष्टज्ञानाभावादभावव्यवहार इति अर्थवत् न संवेदनस्य संवेदनान्तरसत्ताविशेषाभ्यां तत्सिद्धिरित्यादि च यत् भवद्भिरुक्तं, तदुपपद्यते; न अन्यथा । तथाहि समकालभाविन्यौ यदि सघटाघटप्रदेशसंवित्ती भवेताम्, तदनयोरेकं स्वसंवेदनं तद्रूपत्वेनैव निरभासिष्यत । तच्च तद्विरूपविविक्तं निर्भासमानं द्विरूपस्वसंवेदननिषेधं विदधत् समकालोभयज्ञाननिषेधं स्वप्रकाशत्वेनैव करोतीति न कश्चित् बाधः । तस्मात् नियतपदार्थदर्शनमपि एकस्वसंवेदनानभ्युपगमे न उपपद्यते । अपिच घटज्ञानं नास्ति केवलप्रदेशसंवेदनावसरे इति तावत् झटिति न्यायमनुसरतोऽपि भाति । न्यायानुसरणे च अनवस्थेति उक्तम् । अभ्युपगम्य अपि उच्यते—मा भूदत्र अनवस्था, इह तु किं कर्तव्यं यत्र एतदपि न वक्तुं घटते इति दर्शयति **'यदिवा'** इति । सन्ततेऽन्धकारे सर्वस्य अस्ति प्रतिपत्तिः—अहं रूपं न पश्यामीति, सा च कथम् । **'एतदपि'** इति अप्रातीतिकं निष्फलं च सदपीति अपिशब्दार्थः । कुतो न शक्यते इति आह



**'भिन्नेन्द्रिय'** इति । अभिन्नेन्द्रियजन्यज्ञानग्राह्याणां हि घटपटादीनामिव संनिहितानामेष नियमः—यदेकज्ञानग्राह्यतेति । नच रूपस्पर्शौ, रूपरसौ वा सामानेन्द्रियग्राह्यौ, येन तद्विषयमेकमेव ज्ञानं रूपस्पर्शाभासं संभाव्येत, रूपरसाभासं वा । अथ उच्यते —यदि सह रूपज्ञानस्पर्शज्ञाने समभविष्यताम्, विकल्पोऽनन्तरस्ते द्वे अपि सहैव अध्यवस्येत्, स्मृतिश्च स्मरेत्; नच तथेति कार्यानुपलब्ध्या रूपज्ञानाभावसिद्धिरिति । तत्र इदमेव तावत् वाच्यं 'नावश्यं कारणानि' इति न्यायात् कार्यानुपलब्धिः कथं कारणाभावं गमयेत् । अन्यावस्थां प्राप्तं नास्तीति चेत् मा भूत् तथाभूतं, तत्तु नास्तीति कुतः । स्पर्शज्ञानकाले च अयं रूपज्ञानाभावं मन्वानः स्वात्मनि तदभावनिबन्धनान् प्रदीपाङ्गोपसंहरणादीन् कुर्वाणो दृश्यते, नतु कार्याभावं प्रतीक्षते । विकल्पोऽपि रूपज्ञानं पूर्वभावि कथं निराकुर्यात्, सहि स्पर्शं वा स्पर्शज्ञानं वा विकल्पयन् कामं न रूपविकल्पो न वा रूपज्ञानविकल्पः । स द्विकल्पनीयो योऽधुना स्पर्शप्रत्ययस्तदीये पूर्वस्मिन् काले रूपज्ञानं न अभूदिति तु कथं प्रकाशयेत् । नहि तत्कालभाविनि रूपज्ञाने सति स्पर्शज्ञानविकल्पस्य अन्यप्रमातृगतस्य इव काचित् हानिर्येन स स्वयं भवन् तस्य प्राच्यस्वकालभाविनो रूपज्ञानस्य अभावमव्यभिचारेण भवन्तं साधयेत् । एवं स्मरणेऽपि वाच्यम् । एतदाह **'नापि'** इत्यादि । इत्यपि नेति संबन्धः । तत्र हेतुत्वं ग्रन्थान्तरस्य आह **'यतः'** इति । **'विकल्पः स्मृतिर्वा'** इति यथासंभवमुभयमुक्त्वा तस्यैव न्याय्यत्वात् नैकट्यात् स्मृतिमुखेनैव पूर्वपक्षाशङ्कां तत्प्रतिसमाधानं च करोति ग्रन्थलाघवमर्थयमानः । ननु स्मृतिविकल्पज्ञानयोर्ज्ञानं विषयश्चक्षुर्ज्ञानस्य इव प्रदेशः । तत्र यथा प्रदेशज्ञानेन एकज्ञानसंसर्गयोग्यसंनिहितघट-

निराकरणं क्रियते, तथा स्मृतिविकल्पज्ञानाभ्यां स्पर्शज्ञानं शुद्धं विषयीकुर्वद्भ्यां तद्विकल्पनस्मरणयोग्यद्वितीयतत्सहभाविरूपप्रत्ययप्रतिक्षेपः करिष्यते। तदस्ति एव स्पर्शज्ञानाभासमात्रस्य स्मृतिविकल्पप्रत्ययत्वस्य प्राच्यद्वितीयरूपज्ञानाभावाव्यभिचारः,तत् कथमव्यभिचाराभाव उक्त इत्याशङ्क्य आह **'स्मार्तं हि'** इति। यस्मादेवं,तस्मात् नास्त्येव अव्यभिचारः इति संबन्धः। संस्कारजत्वात् हि स्मृतिज्ञानं पूर्वमनुभवमनुकरोति, नतु विषयत्वेन आभासयति ज्ञानानां परसंवेद्यत्वस्य विस्तरतो निराकृतत्वात्। **'येन'**इति स्वातन्त्र्यसाक्षात्कारित्वेन । यदि हि स्वातन्त्र्येण स्वेन प्रकाशबलेन विषयतया पूर्वं स्पर्शज्ञानं स्मृतिराभासयेत्, तदा पूर्वस्मिन्निति पूर्वकालविशिष्टत्वेन निर्भातादाभासमानात् स्पर्शज्ञानलक्षणादाकारात् विपरीतं रूपज्ञानं स्पर्शज्ञानलक्षणे स्वविषये तादात्म्येन असहमाना पूर्वकालभाविनो द्वितीयस्य रूपज्ञानस्य एकज्ञानसंसर्गितया विषयस्य संभाव्यमानतत्स्मरणज्ञानविषयताकस्य अभावसिद्धये प्रभवेत् यथा शुद्धप्रदेशसंवित्तिर्घटस्य, नतु एवमस्ति । स्मृतिर्हि पूर्वमनुभवमनुकरोति परं स्मर्तव्यसंबन्धिनम् । स्मार्यस्य च स्पर्शज्ञानस्य योऽनुभवः, स तथा अनुकार्यः। एवंच यथा तत्स्पर्शज्ञानमन्तः स्वसंवेदनेन आत्मनि अनुभवरूपं स्वकाले न रूपज्ञानस्य नामापि वेत्ति कथञ्चित् भवतोऽपि, तथा तदनुकाररूपा स्पर्शज्ञानस्मृतिरपि रूपज्ञानस्मृतितयापि यदि भवेत्, तथापि स्पर्शज्ञानरूपज्ञानयोः सहभावं पूर्वमपरिगृहीतं न स्मरेदेव। यदि तथा स्मर्तुं शक्नुयात्, तदसहभावास्मरणे पूर्वमपि तयोर्न सहभावः इति निरचेष्यत नाम,—इति तात्पर्यम्। यतो न स्वातन्त्र्येण साक्षात्कारि, तत इति संबन्धः । **'विकल्पज्ञानम्'**इति सामान्योक्तिः स्मृतिमपि संगृह्णीते। तदभिप्रायेणैव आह **'अनुभू-**



**तम्'** इति **'परामृशति'** इति। अन्ये तु—विकल्पोऽपि परमार्थतोऽनुभवसंस्कारजत्वात् स्मृतिरेव, केवलमचिरवृत्तत्वादनुभवस्य सर्वात्मना तदुपरक्तत्वादिदन्तानिर्भासिनीति अनुभवायमानतया स्मृतित्वेन न भाति,—इति पृथक् विकल्प उच्यते—इत्याहुः। तं विकल्पं दर्शयति **'अनुभवामि'** इति। एवं ज्ञानद्वयमपि यदि विकल्पे प्रतिभासते, तथापि न तस्य सहभावः प्रतीयते तस्य तत्त्वसंवेदनद्वयेन पूर्वमगृहीतत्वात् विकल्पस्य च पूर्वापरिगृहीते वस्तुनि स्वातन्त्र्येण ग्रहणासामर्थ्यात्। ततश्च एकाकि ज्ञानं गृह्णता विकल्पेन तत् कामं व्यवह्रियताम्, तदव्यतिरिक्तश्च द्वितीयज्ञानाभावः; नतु व्यतिरिक्तद्वितीयज्ञानस्य प्राच्ये काले यदभवनं, तत् व्यवहर्तुमस्य सामर्थ्यमस्ति पूर्वस्वसंवेदनव्यतिरिक्तज्ञानापेक्षयोः सहभावपृथग्भावयोरपरिग्रहात् । तत्कारणकत्वाच्च विकल्पस्य तथा व्यवहारः इति कारणानुपलब्धिः। **'येन'** इति द्वयग्रहणकाले अतदैककालिकत्वग्रहणेन हेतुना निराकुर्यात् पूर्वस्मिन् काले रूपप्रत्ययम् । रूपज्ञानविविक्तस्वाभासोपारूढस्पर्शज्ञानपरामर्शि विकल्पज्ञानमिति संबन्धः। नतु एवं घटते इत्याह **'यावता'** इति **'न स्वयम्'** इति स्वसंवेदनमात्रनिष्ठत्वात् द्वयोः। **'तत्संस्कारजन्मना'**इति स्वातन्त्र्येण योगिज्ञानवत् पूर्वज्ञानद्वयगतसहासहभावग्रहणं सामर्थ्यात् तत्संवेदनद्वयमुखप्रेक्षित्वादिति यावत्। एतदपिच अभ्युपगम्य उक्तमित्याह **'नचापि'** इति। उक्तं हि

'भ्रान्तित्वे चावसायस्य न जडाद्विषयस्थितिः।' (१।३।५)

इति। यदातु एकं चित्तत्त्वमन्तर्मुखं स्वसंवेदनं, न पृथक् स्वसंवेदनानि; तदा ज्ञानद्वयं चेत् सह भवेत्, एकस्वसंवेदनविश्रान्तं तत् भासेत। नच तथा अन्धकारकाले इति स्वात्मनि रूपज्ञानं नास्तीति निश्चिन्वन् तत्सजातीयस्य अपि प्रमातृवर्गस्य

तथैव तदभावनिश्चयात् निःशङ्कोऽत्युष्णजनितसंतापपरिहारप्रयोजनान् स्वाङ्गावच्छादनानावरणादीन् व्यवहारान् करोति,—इति सिद्धमिष्टम् । योऽपि आह—मनःसद्भाव एकज्ञानोत्पत्तिनियामक इति, तस्यापि ज्ञानानामयौगपद्यनियमे सिद्धे मनःसिद्धिः । स एव तु कुत इति चिन्त्यम् । ज्ञानान्तरेण च ते सहकालभावित्वात् द्वे ज्ञाने अवश्यग्राह्ये इति । कुतः । सहकालभाविनोऽपि संस्कारादेर्ज्ञानान्तरेण अग्रहणात् । एकश्च आत्मा तज्ज्ञानसमवायिकारणतया भवन्नपि कथमिदं जानीयात्—ज्ञानद्वयं मम न उत्पन्नमिति । ननु तदुत्पत्तावर्थद्वयं प्रकाशेत । आः कोऽयं मोहप्रलापः । अर्थद्वयं प्रकाशते इति हि ज्ञानद्वयमेव । तदेवच पर्यनुयुक्तम् । प्रकाशस्य अर्थधर्मतायामपि कथं ज्ञायते रूपरसद्वयनिष्ठः प्रकाशो न जात इति । ज्ञाने च उत्पन्ने अप्रकाशे स्वपरविभागासंवेदनं स्यात् । तथाहि कस्त्वं यस्य घटज्ञानम् । परस्यापि घटज्ञानम्, समवायोऽपि समानः । आत्मा न प्रकाशते, ज्ञानान्तरेण प्रकाशते इत्यपि सर्वं समानमेव । तस्मादनन्यापेक्षप्रकाशमहमिति संवित्तत्त्वमेकमन्तर्मुखमङ्गीकार्यम् । तस्मिन् सति समस्तविप्लवावकाशाभावः । तथाहि ज्ञानद्वयं यदि भवेत्, एकमस्य स्वसंवेदनं भवेत् । नच एकं तथा अस्ति स्पर्शज्ञानस्वसंवेदनमात्रत्वेन अस्य निर्भासादिति उक्तमेव । यश्च अनन्यापेक्षतया स्वप्रकाशत्वेन प्रकाशे, सोऽहं; यस्तु नैवं, स पर इति सर्वं स्वस्थम् । तदेतदाह **'तदेवम्'** इत्यादिना । **'ऐन्द्रियिकाणामपि'** इति । येषु सत्सु सर्वो लोक इदं गृहीतम्, इदं न गृहीतमिति समाश्वस्तो निःशङ्कं व्यवहरति, तेषामपि यत्र एषा गतिः, तत्र क आश्वासो ज्ञानान्तरेष्विति यावत् । **'अर्थानामपि'** इति । ज्ञाननियमकृतो हि अर्थसत्तानियमस्तदनियमे कथं स्यात् । प्रदेश-



कैवल्यव्यवहारोऽपि आनुमानिकत्वादनवस्थोपहत इति एकेन्द्रियग्राह्येषु अर्थेषु न सदसद्भावनियमनिश्चय इति अवोचाम । **'एकशब्दोऽपि'** इति । न केवलमनेन **'चिद्वपुः'** इति विवृतं सौत्रं, यावदेकशब्दोऽपीति अपिशब्दः । ननु च बहूनां ज्ञानानामनुसन्धानं विकल्पान्तरेण ग्रहणं, नच विकल्पान्तरमेव चित्तत्त्वमित्याशङ्क्य आह **'स्मृत्यादौ च'** इति । उक्तं हि 'न ज्ञानं ज्ञानान्तरवेद्यं भवति' इति । ततश्च यदेकमन्तर्मुखमेषां रूपं, तदेव स्वेच्छावशात् यावत् जिघृक्षति तावत् प्रत्यवभासते इति न यौगपद्येन सर्वानुसन्धिप्रसङ्गः । **'नश्येत्'** इति सूत्रे यः प्रसङ्गः उक्तः, स पूर्वत्र वृत्तौ व्याख्यातः **'कथम्'** इति । तेनैवच **'न चेत्'** इत्येतत्सूत्रगतमपि व्याख्यातमिति तदवधीयैव नच अत्रैव विश्रमितव्यं जनस्थितेः प्रकाशमानाया नश्यतु इति शापमात्रेण अनपह्नवनीयत्वादिति बलादेव यः प्रसङ्गविपर्ययः, सोऽत्र वृत्तौ व्याख्यातः । टीकाकारेण तु **'नश्येत्'** इत्यपि व्याख्यातमेव ज्ञाननियमानुपपत्तिं दर्शयतेति उक्तमादावेव । ननु यदि असावेकः सर्वैर्भावममण्डलैर्निर्भरश्चिद्वपुः, तर्हि तानि सदैव उन्मग्नानि सदैव वा निमग्नानि निर्भासेरन्; कादाचित्कं तु वैचित्र्यमेषां कथमित्याशङ्क्य प्रकाशस्वाच्छन्द्यमेव चित्तत्त्वमित्याशयेन यदुक्तं सूत्रे **'ज्ञान'** इत्यादि, वृत्तौ च वर्णितम् **'अस्यैव'** इत्यादिना; तत् विवृणोति **'तस्य चैवम्'** इति । उक्ताभिर्युक्तिभिरेकस्य

'प्रकाशात्मा प्रकाश्योऽर्थ............. ।' ( १।५।३)

इति

'स्वामिनश्च ....................... ।' (१।५।१०)

इत्यादिवक्ष्यमाणाभिः समस्तभावपूर्णस्य ज्ञानं नाम शक्तिः । ततः

किमिति। आह तस्य तस्य भावस्य विचित्रं स्फुटास्फुटादिरूपं कृत्वा या इयं चिदव्यतिरेकादवभासस्वतन्त्रस्य अपि सतस्तद्विच्छेदरूपजडतापुरस्कारेण पारतन्त्र्यप्राणा इदमिति अवभासमाना पशुप्रमातृवर्तिनी, तत्र यत् तत् समर्थाचरणं स्वातन्त्र्यात्मकं तदेव प्रकृतं रूपं यस्य, तत् ज्ञानं नाम शक्तिरिति संबन्धः। एतदुक्तं भवति—

'इच्छाया एव यस्य…………………… ।'

इति न्यायेन अपरिगणितसर्वभावनिर्भरो भगवान् स्वातन्त्र्यात् भावराशिमध्यात् कंचित् भावं प्रकाशस्वरूपात् पृथक् करोति, पृथक्कृतं च प्रकाशयति, नच पृथक्कृतस्य प्रकाशना उपपन्नेति न महाप्रकाशात् पृथक् करोति, अपितु तथाविधमपरमार्थप्रकाशरूपमारोपितप्रकाशं मायाप्रमातारं निर्मिमीते। तथा संकोचेन अवभासनमेव च भगवतः स्वात्मनि तन्निर्माणमुच्यते। एवंच मायाप्रमाता शरीराद्यवच्छिन्नसंकुचितप्रकाशस्वभावो भवन् स्वापेक्षया पृथग्भूतं भावमवभासयति। तत् नवनवतदीयच्छायोपरक्तमस्य बहिर्मुखं रूपं नवनवं ज्ञानमुच्यते। तत्र च यदैश्वरं स्वातन्त्र्यम्, सा ज्ञानशक्तिरिति। '**अवभासन**' इति कारितद्वयम्। तथापि नवाभासानां प्रतिक्षणमुदयलयग्रस्तानां कथं व्यवहारोपयोग इति आभातपूर्ववस्तुनि बहिर्मुखं यत् संवेदनमासीत्, तस्य यदन्तर्मुखं रूपं, तत् कालान्तरावस्थायि सत् स्वात्मगतां तामेव विशिष्टविषयां बहिर्मुखतां परामृशति, मायाप्रमातरि तदेतत् स्मरतीत्युच्यते। तत्र यत् तथाविधप्रमात्रादिनिर्माणसामर्थ्यं, तत् भगवतः स्मृतिशक्तिः। यत् वक्ष्यति 'पूर्वावभासितवस्तुन' इति। अनेन च प्राच्यज्ञानोपयोगो वक्ष्यते 'पूर्वावभासितत्वेन' इति। प्राच्यो बहिर्मुखताविमर्शादिकः, न इदानीन्तनः, तत्र



नवः प्रकाशः इति प्रख्यापनशब्देऽपि द्वौ णिचौ। ननु कस्मादियं ज्ञानादिका भगवतः शक्तिरुच्यते इत्याशङ्क्य आह '**फलभेद**' इति। अनन्तार्थक्रियाकारिणि पदार्थेऽखण्डमण्डले उपदेश्योपदेशव्यवहारादिर्न सिध्यतीति तत्सिद्धये तया तया विचित्रया अर्थक्रियया एकैकमवच्छिद्य स पदार्थ एक एव बहुधा व्यवह्रियते अग्निर्दाहकः पाचकः प्रकाशकः इति। तत्र बहुत्वपरामर्शप्रधानतायां शक्तिव्यवहारः, तदेकपरामर्शप्रधानत्वे तद्वद्व्यवहारः। सचापि न अपारमार्थिकः परमेश्वरेणैव तथा सृष्टत्वात्। यदुक्तमागमे

'न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते।
केवलं ज्ञानसत्तायाः प्रारम्भोऽयं प्रवेशने॥' (वि०भै०१९)

इति, तथा

'………………शैवी मुखमिहोच्यते।' (वि० भै० २०)

इत्यादि। तदास्तां तावदेतत्। ननु महद्ग्रहणं सूत्रे किमर्थं, तच्छक्तियोगादेव लब्धं हि अस्य स्वातन्त्र्यमित्याशङ्क्य आह '**सा च**' इति। पशुप्रमातुर्यद्यपि तथाभूतं ज्ञानं, ततश्च सोऽपि तया शक्त्या न न ईश्वरः, तथापि न तस्य तत्र स्वेच्छा प्रभवति अप्रतिहतसंकल्पत्वाभावात्। तेन यस्यैव तत्र अप्रतिघात इच्छायाः, स महेश्वर एव तथा युक्तः। आदिष्टं हि आगमे भगवता

'प्रभुशक्तिरथात्मा च प्राणश्चेति त्रयं सह।'

इत्यादि। अतो वस्तुतस्तत्तदात्मना भगवानेव जानाति स्मरति अपोहतीति युक्तम्। यदुक्तं

'यद्यप्यर्थस्थितिः……………… ।' (अ०प्र०सि० २०)

इत्यादि, तदाशयेन इह स ज्ञानादिमानिति युक्तम्। मायाप्रमातृणां तु ततः परमेश्वरादपृथक्तानवभास एव मायाप्रमातृतेत्याश-

येन भगवता गीतासु 'मत्तः' इति मत्सामर्थ्यादेतत्, नतु 'मम' इति प्रदर्शितम्। एतदपिच इह सूत्रे शक्तिपदेन स्पृष्टमेव न मम ज्ञानादि, अपितु यद्बलात् तत् भवति, तत् मम स्वातन्त्र्यमिति दर्शयता। तेन उभयथापि ज्ञानशक्तिपदं तत्र तत्र विग्रहीतव्यम्—ज्ञानमेव शक्तिः, तत्र च अस्य शक्तिरिति। तत एव इच्छाशक्तिः पृथगिह न उपात्ता आगमे कथिता अपि महेश्वरशक्तिपदाभ्यामेव अप्रतिघातं ज्ञानादीनामभिदधद्भ्यां तस्याः स्वीकारात्। अग्निः शक्तिः, संदहतीति च अबाधितप्रत्ययाभासादाभाससारपरमार्थवादिना शक्तिश्च क्रिया चेति उभयमपि उपगम्यम्। तत्तु प्रत्यर्थक्रियं भिन्नमपि सत् विततवितस्य अनेकार्थक्रियाकारिणो भावस्य स्वरूपं भेदेन अनुपलक्षणादर्थक्रियाभेदबलोन्नीयमानत्वादनुमानार्थापत्तिगम्यमस्तु, को विरोधः। शक्तिः शक्ता करोतीति तु शक्तेः शक्तिमदात्मना सृष्टिरिति शक्तेः शक्त्यन्तरयोगेऽनवस्थेत्यपि न किंचित्, भावस्वभावानधिकत्वाच्च यथादर्शनं नित्या भवतु अनित्या वेति का क्षतिः। अत एव कार्योदये सहकारिभिः किमिति तु चोद्यमेकसहकारियोगे सहकार्यन्तरेषु तुल्यमबाधिताभासात् कथङ्कारं सहकारिणो निह्नूयन्तामिति शक्तिष्वपि समः प्रकारः। तदियं शक्तिर्भावस्वरूपमेव उपनीय आसीना शक्तिरुच्यते, नतु पृथगवभासेति स्वरूपसहकारिलक्षणैव उभयी पदार्थस्थितिः शक्तिरित्यपि न कांचिदस्मन्मते क्षतिमावहति। तथाच अगमेषु सर्वमिदमभ्यनुज्ञातमेव। यथोक्तं

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं देवि सा तस्य सिसृक्षोः प्रतिपद्यते ॥' (मा०वि० ३।५)

इति



'योगोऽस्य शक्तयः स्वाक्या·········।' (म०त० ४।५)

इति

'शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः।'

इति

'शक्तिर्विद्यादिका शम्भोः स्यात्परिग्रहवर्तिनी।'

इति च। **'फलति'** इति फलपर्यन्ता संपद्यते, न पुनः प्रतिहन्यते यस्य। अन्यानि यानि कारणानि सहकार्युपादानादीनि, तेषां यत् सामर्थ्यं तानि एव वा सामर्थ्यं; तत्साचिव्येन तत्सहिततया येषां शक्तिः फलति ब्रह्मविष्णुशक्रादीनां क्रिमिप्रमातृपर्यन्तानां भगवन्नियतशक्तिमुखप्रेक्षित्वापरिक्षयात्, ते स्वशक्तियोगेन ईश्वरा अपि भवन्तो न महेश्वरा इति यावत्। **'तथा'** इति विश्वरूपतया चिद्रूपत्वेऽपि ज्ञानाद्यपपादकतया समस्तजनस्थितिसंपादकत्वेन च। ननु महेश्वरस्य भगवतो भवतु ताथारूप्यम्, तावता तु आत्मना किमङ्गीकृतेन एकेन। महेश्वरस्य च विश्वरूपत्वं ज्ञानशक्त्यादियोगित्वं च संविद्रूपाधिकं जडत्वादप्रकाशमानं प्रकाशात्मनः संवेदनस्य कथं रूपं स्यादित्याशङ्काद्वयं वारयति **'चित्तत्त्वस्य'** इति। चित्तत्त्वमेव महेश्वररूपम्, नच आत्मा चित्तत्त्वादन्यः कश्चिदिति प्रथमचोद्यं परिहृतम्। चित्तत्त्वं च प्रकाशस्वातन्त्र्यमेव उच्यते, न अन्यत् किञ्चित्। तदेवच विश्वात्मतया प्रकाशनं नवाभासनमनवाभासपरामर्शत्वेन अधुना परामर्शनं वेद्यवेदकानां संक्षेपतश्चतुर्धा अन्योन्यतो भेदेन अवमर्शे, प्रस्तारतः पुनः परार्धकोटिधेति च अपोहनाभासनमिति अपरा अपि शङ्का शमिता मन्तव्या। **'अग्रे'** इति

'अत एव यथाभीपृ ················।' (१।६।११)

इत्यादौ 'पूर्वावभासितत्वेन' इति प्रमातृभेदेन पूर्वाभासे पूर्वावभासपृष्ठे च प्रत्यभिज्ञादाविव अपूर्वावभासं निराकरोति । अवभासे च तदव्यभिचारी पूर्वविमर्शोऽपि स्थित एव । तृतीयाप्रयोगश्च तथा परामर्शमाह । यथाहुः 'क्षणिकोऽपि गृहीतः' इति । वार्तमानिकस्तु विमर्शः सन्नपि न वस्तुनस्तात्कालिकतां तात्कालिकप्रकाशतां वा वितरति पूर्वप्रकाशविमर्शानपहारमात्रे परं विश्राम्यति । एवं ज्ञानस्मृती व्याख्याय, अपोहनं व्याचष्टे **'देश'** इत्यादिना । उपपादितं संपादितं मायीयप्रमातृनिष्ठं विकल्परूपं विज्ञानं यथा भगवतः स्वातन्त्र्यशक्त्या, सा अपोहनशब्दवाच्या । कथमुपपादितम् । आह अवभासभेदेन निर्विकल्पकप्रतिभातेन वस्तुना या वासना संस्काररूपा कृता, तन्मात्रेण पुनर्वस्तुप्रकाशादिनिरपेक्षेण प्रबोधितेन स्वकार्ये विकल्पलक्षणे कर्तव्ये लब्धवृत्तिना । कथं तस्य प्रबोधनम् । आह देशाभासेन कालाभासेन च यः पूर्वमवच्छिन्न आभासमेलनमयः स्वलक्षणात्मा प्रत्यवाभासिष्ट, तस्य योऽसौ देशकालाभ्यामवच्छेदस्तदपासनेन । अत एव तस्य आभासस्य देशावच्छेदापासने विभुत्वम्, कालावच्छेदापासने नित्यत्वमिति । सच

'भासो विकल्पविषयः सामान्यमिति गीयते ।'

इति

'तस्मात् यो येन धर्मेण विशेषः संप्रतीयते ॥
न स शक्यस्ततोऽन्येन तेन भिन्ना व्यवस्थितिः ॥'

इति नीत्या च प्रत्याभासं विकल्पस्य उदयात्मनो देशकालाभासयोरपि विकल्पो भवन् देशकालानवच्छेदात् सामान्यात्मनोरेव भवति । अयमित्यपि सावच्छेदो विकल्पः । स सर्वपुरोवर्तिवर्तमानवस्तुसाधारणरूपपरामर्शात्मैव । यथोक्तमाचार्यपादैरेव—



'नियतेऽप्ययमित्येष परामर्शः पुरःस्थिते ।
सर्वभावगतेदन्तासामान्येनैव जायते ॥'

इति । किं बहुना । वाक्यार्थप्रायोऽपि यो विशेषो भेदसंसदि विकल्पेऽपि स्फुरति—अयमधुना गौर्मया दृश्यते,—इति स्वीकृतप्रत्येकपदार्थावधारणः, सोऽपि अवश्यं देशकालप्रमात्रन्तरगततथाभूतवाक्यार्थसाधारणमेव रूपं विषयीकुर्वन्नुपजायते । तस्मात् सर्वो विकल्पो देशकालाद्याभासावच्छेदशून्यसामान्यप्रतिभासी । ननु देशाद्यवच्छिन्नेऽनुभूते तत्कृतया वासनया कथं तदवच्छिन्नविषयया प्रबुध्यते । आह विचित्रा अपर्यनुयोज्या भगवतो महाप्रकाशरूपस्य शिवनाथस्य या इच्छा, तत एव विश्वमन्योन्यभेदप्रधानमुद्भावयन्ती तद्भेदभासनभित्तिभूतान् मायाप्रमातृनाविर्भावयति एवंभूतेन अनेन सामान्यावभासेन विकल्पनेन । ननु विकल्पजनिका या भगवतः शक्तिः, सा ज्ञानशक्तिरेव कस्मात् न उच्यते, तद्दृष्टे विशेषरूपमेतदपोहनशक्तिरिति किमुक्तमित्याशङ्क्य आह **'शङ्कित'** इति । शङ्किताः शङ्कावशादारोपिता ये प्रतिपक्षाः अभिमतनीलशरीरानुप्रवेशिनां विचित्रार्थक्रियासंपादनाद्युपकल्पितभेदानां धर्माणामतदर्थक्रियाकारित्वादयो धर्माः, तेषां यः प्रतिक्षेपोऽभिमुखीभूतानां सतामिव पुरो गलेहस्तिकया इव दूरीकरणात्मकमपसारणं तदेव परं प्रधानकर्तव्यमसाधारणव्यापाररूपं येषां, तेषां भावस्तत्त्वं; तस्मात् हेतोः सा शक्तिर्विकल्पजनिका अपोहनप्रधानतद्रूपजननादपोहनशक्तिरिति संबन्धः । एतदुक्तं भवति—यद्यपि विकल्पो विविधरूपा प्रतीतिरिति आमुखे प्रतिभासते, तथापि तदस्य निर्विकल्पकमनुकरोति आविशति उपजीवति वेत्यतो हेतोरायातं स्वयं विषयेण स्वलक्षणेन

आभासमेलनात्मना सामान्येन वा ऐक्याभासमात्रेण साकमलब्धज्ञातेयत्वात् विषयाभावेऽपि संभवात्। तदयं विविधतया व्याप्रियमाणः सिद्धे सति आरम्भो द्विर्बद्धे सुबद्धत्वं दार्ढ्यम्, तच्च

'शङ्कितान्यव्यवच्छेद··················।'

इति न्यायादन्यव्यवच्छेदात्मेति अपोहनव्यापार एव उच्यते। इह च

'क्रिया संबन्धसामान्य············।' (२।२।१)

इति भाविनीत्या संभवदपि सामान्यं साक्षात्कारेण वा अनुभवात्मना स्वीकृतमिति तत्स्वीकारोऽपि न विकल्पव्यापारः। ननु स्वलक्षणेऽवभाते कुतोऽतद्रूपमाशङ्क्यते यदपोह्यते;

'निश्चयारोपमनसोर्बाध्यबाधकभावतः।'

इति

'नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम्।
शुक्तौ वा रजताकारः···················॥'

इति च दृष्ट्या समारोपादाशङ्का,—इति चेत्, समारोपस्य विकल्पितविषयत्वात् विकल्पान्तरस्य अपि समारोपपूर्वकत्वात् विकल्पसमारोपपरम्परानवस्थानात् युगकोटिभिरपि न नीलनिश्चयः, अन्योन्याश्रयादि च बहुशाखम्। यदपि भट्टेन उक्तमपोहसिद्धौ

'प्रसङ्गप्रत्ययनिवर्तनमेव नीले अनीलमेतत् न भवति।'

इति,

'व्यवच्छेदप्रत्ययेन कर्तव्यम्·············।'

इति,

'नारोपस्थित्यपेक्षं तत्···················।'

इत्यादि; तत्रापि विशिष्टे अर्थे प्रतिभाते कोऽन्यथाप्रसङ्गस्य अवसर इति वक्तव्यम्। अविद्याकृतः प्रसङ्गः समारोपो वा। सोऽनादिः। समारोपप्रसङ्गादिजननशक्तिरूपा वासनेति चेत्,



सैव अनवस्था विकल्प्य प्रसञ्जनात् समारोपाच्च तयोरपिच विकल्परूपत्वात्। नीले च अनीलं विकल्प्य समारोप्यते, अनीले च विकल्प्यमाने नीलं समारोप्यते इति अन्योन्याश्रयादिदूषणमपि बहुशाखं जैमिनीयैर्दर्शितम्। यदपि अनन्तर्बहीरूपमारोपितं विकल्पेन गृह्यते इति उच्यते, तत्रापि निःस्वभावत्वे नीलपीतविकल्पयोरभेदप्रसङ्गः। नीलमिव विकल्पेन गृह्यते, ननु नीलमेवेति चेत्; किं तेन गृह्यते यत् नीलमिवेति उपमेयेत उत्प्रेक्ष्येत। नीले प्रकाशनमिव अध्यवसायात्, ननु प्रकाशनमेवेत्यत्र अपि किं तस्य रूपं यदेवं व्यपदिश्येत। ततो न ग्राह्यांशेन, न अध्यवसेयांशेन विकल्प्यस्य विकल्पान्तरात् भेद उचितः। तुच्छस्य हि को भेदः। वस्तुद्वयमेव हि सत्यवस्तुनि कथं स्यात्। यत् भट्टः

'····················नचाभावो विशिष्यते।'

इति। आरोपितेन बाह्येन अध्यवसेयेन वपुषा भेद इति चेत्, आरोपोऽपि विकल्परूप एवेति सैव अनिष्ठा। अभिमानमात्रत एव नीलं विषय इत्यपि उच्यमाने अभिमाने तस्य अर्थस्य प्रकाशनमप्रकाशनं वेति न तृतीया गतिर्लभ्यते। यत्तु चित्रप्रहारपातपण्डितंमन्यादिवदुक्तम्, तत्र सादृश्यप्रतिपत्तिमात्रमभिमानशब्दवाच्यम्। यादृशो हि पततः प्रहरणस्य आकारः, तादृगेव चित्रलिखितप्रहर्तृपुरुषकरसंनिवेशसमावेशिनश्चित्रप्रहरणस्य। पण्डितश्च यादृशमाकारं मोहसहायात् पाण्डित्यादुद्धरकन्धरं च परमार्थपाण्डित्यात् वा समस्तजनहितोपदेशकरणादिप्रवणमुद्वहति, तथैव अपण्डितोऽपीति। अपिच पण्डितोऽयमिति यत्र लोकतः शृणोति, तत्र कंचिदाकारविशेषं पश्यन् तथाभूतलाभसत्कारादिकमात्मनि इच्छन् यत्नतस्तथाकारं करोतीति पाण्डित्याभिमान उच्यते। एवं विकल्पेन न किंचित् नीलस्य श्रुतं दृष्टं

वा यत् तथाभिमानं कुर्यात् । आरोपाभिमानादीनां लज्जादिवत् चित्तधर्मतायामपि न अर्थस्पर्शनशक्तिरिति न अभिमानोपकल्पितोऽपि विषयः । दूषितं च अध्यवसायस्य स्वप्रतिभासमात्रनिष्ठत्वं

'भ्रान्तित्वे चावसायस्य…………… ।' (१।३।५)

इत्यत्र । तस्मात् स्वलक्षणे अवभाते कुतस्तद्विपरीतं रूपमाशङ्क्यते येन तदपोहनं फलवत् स्यादिति शिष्यस्य आशङ्कां निवर्तयति **'पदार्थान्तर'** इति । इह वस्त्वन्तरेण क्षीरजलवदामिश्रणाद्वा वस्त्वन्तरस्वभावत्वाद्वा भावस्य अतद्रूपतापि संभाव्यते । उभयमपिच एतत् न संभवतीति विशेषणद्वयेन उक्तम् । पदार्थान्तरासंपृक्ते अन्यानामिश्रे नियतप्रकृतावेकस्वभावे च भावे तेनैव स्वभावेन विचित्रार्थक्रियाकारिणि अवभातेऽपि मायाशक्त्या अवाङ्मुखीभूतत्वेन भातेऽपि भातत्वादेव हेतोस्तत्र एकामभीष्टामर्थक्रियां योऽर्थयते, स तदर्थक्रियाकरणविहीनान् तान् तानतिबहून् प्रतिपक्षानाशङ्कते यथा घटे उदकाहरणमनोहरणगगनाभोगावरणाद्यर्थक्रियाशतकारिणि उदकाहरणेन अर्थी अतत्कारिणो घटानाशङ्कते अलोहिताननुन्नतांश्च मनोहरणादिना । कुत इति चेत्, आह अन्योन्यात्मतया । सहि एकोऽपि भावो वस्तुतोऽन्यैः सह तदात्मैव यद्यपि मायाशक्त्या पृथक्कृतः, तथापि भातत्वादेव अन्योन्यात्मतामुन्मीलयति । कथमित्याह **'ईश्वर'** इति । ईश्वरः सर्वमिदमहमितिसंवेदनरूपः, तदङ्गभावं तदविनिर्भक्तताम् । यतस्तत्पर्यन्तत्वासंप्राप्तौ भानमेव हि न स्यादिति उक्तम् । यद्यपिच परमशिवान्ततादात्म्यप्रतिपत्तिपर्यन्तं भानं, तथापि तत्र भावस्वरूपस्य सर्वथा अनुन्मीलनात् न अन्योन्यात्मता काचित् । यत्र तु तदुन्मीलितं, तदेव दर्शितम् **'ईश्वर'** इति । नच सा मायास्पर्शे प्ररूढा तत्र



ईश्वराङ्गता येन अन्योन्यात्मतैव स्यादिति इवशब्देन उक्तम् । तदेवं शङ्क्यमानस्य तस्य तस्य प्रतिपक्षस्य निराकरणं विना स एकैकया अर्थक्रियया अर्थी प्रतिपत्ता तेन भावेन व्यवहर्तुं हानादानक्रयविक्रयादिमन्तमात्मानं कर्तुं न शक्नोति, नच परं व्यवहारयितुम् । एवं द्वितीयोऽपि । ततश्च परस्परनिष्ठः कथं व्यवहारः । एवं शरीरप्राणादौ मायाप्रमातृरूपेऽपि अर्थे प्रमात्रन्तराणि प्रमेयाणि च प्रतिपक्षरूपाणि निराकर्तव्यानि । इयता च एकस्मिन्नपि भावे अनेकार्थक्रियाकारित्वेन तत्तदर्थक्रियाविपक्षाणां बहुत्वात् तदाशङ्कापोहेन बहुविकल्पसमर्थनकृतं—घट उन्नतो लोहित इति—अहं कृशो गौरो मन्दाग्निरिति बह्वीष्वपि व्यक्तिषु विकल्पैक्यमनेनैव उक्तमिति व्याख्यायते । व्यक्तिभेदेन विविधार्थक्रियाकारी अपि योऽर्थो गोमण्डललक्षणः पदार्थान्तरेण महिष्यादिवर्गेण अमिश्रः, तत्र यो विशिष्टामेकामेकप्रत्ययविमर्शविषयां वाहदोहप्रायामर्थक्रियां प्रतिनियतस्वभावतया तावतीष्वेव व्यक्तिषु संभवन्तीमर्थयते । तस्य अर्थस्य शङ्क्यमाना ये अतत्कारिणः प्रतिपक्षाः, शङ्कायां च कारणं पूर्ववदेकः । एवंच महिष्यादिवर्गात्मकस्य एकस्य प्रतिपक्षस्य अपोहनात् बहुषु अपि व्यक्तिषु एको विकल्पो गौर्गौरिति । तदुक्तमाचार्यपादैरेव

'यावत्योऽर्थक्रियास्तावत्संख्योऽतत्कारिणां गणः ।
तावन्तस्तत्समारोपास्तन्निषेधाश्च तत्समाः ॥'

इति । तथा

'एकप्रत्यवमर्शो यस्तत्कारिषु बहुष्वपि ।
सोऽप्यतत्कारिविच्छेदसाम्ये स्यात्सनिबन्धनः ॥'

इति । ननु ईश्वराङ्गभूततायां यदन्योत्मत्वेन पूर्णत्वं, तत् प्रत्युत पारमार्थिकं रूपं स्वभाव इति युक्तम् । अत्र आह **'मायीया-**

**नाम्**' इति। इदं हि प्रमातृप्रमेयाणां मायापदं मीमांस्यते। तत्र पारमार्थिकस्वरूपतायां मायीयतैव न्यक्कृता भवेत्। प्रमातृणां प्रमातृभ्यः प्रमेयेभ्यश्च, प्रमेयाणामपिच उभयेभ्यो यदनन्तशाखं निःसंख्यं भेदनं पृथक्करणम्, एतदेव यस्मात् मायीयत्वे प्रकृतं मुख्यं रूपम्। अयं तात्पर्यार्थः—इह प्रकाशमात्रस्वभावत्वेन प्रमातृप्रमेयाणां विश्वेषामेव तावत् तादात्म्यादेकरूपावेश एव वास्तवः। सच मायापदेऽपि अनिवृत्त एव अप्रकाशनप्रसङ्गात्। केवलमन्योऽन्यं नेतिपरामर्शरूपस्वातन्त्र्यशक्तिबलादविमृश्यमान एव आदौ प्रभाववता स्तम्भितभुजङ्गमविषवह्निवत् पूर्णे स्वरूपे उदास्ते इव। यस्य यत् रूपं वास्तवं, तत् तद्विदा प्रभावात् प्रतिस्तम्भितमपि न न शङ्क्यते विषस्य इव मारकत्वम्। तथाच विश्वस्य विश्वात्मत्वम्। अनाशङ्कायां हि कारणं तद्रूपासंभवित्वम्, तद्रूपस्य संभवेऽपिवा तदवेदनम्। नहि खस्य क्षुत्प्रशमनत्वं शङ्क्यते बालेन वा स्तम्भितशक्तेर्विषभुजगादेर्मारकत्वमिति कारणविरुद्धोपलब्धिः। सर्वस्य च प्रमातुस्तथाभूतमीश्वरात्मत्वं प्रकाशते एवेति विश्वात्मत्वं न अप्रकाशितम्। यथोक्तमादिसिद्धसूत्रे 'अनेन हि विना शून्यप्राणादेः' इत्यादि। मायापदेऽपिच तत्प्रकाशसंस्कारस्य ईश्वरस्य अनतिवृत्तेराशङ्का प्रमातृमाहात्म्यादेव उत्तिष्ठति, यत् वक्ष्यते

'तदतत्प्रतिभाभाजा मात्रैवातद्व्यपोहनात्।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम् ॥' (१।६।३)

इत्यादि, येन पृथग्विकल्पनसमारोपणादिकृतानवस्थादिदोषाप्रसङ्गः इति। यत्तु आर्येण उक्तम्

'एकप्रत्यवमर्शाख्ये ज्ञान एकत्र हि स्थितः।
प्रपत्ता तदतद्धेतून्भावान्विभजते स्वयम् ॥'



इति, तत्र स्फुरितमपि वस्तु दुःसमर्थमिति अग्रे भविष्यति। ननु अपोहनं ज्ञानस्यैव विकल्परूपस्य विकल्पविशेषात्मनश्च स्मृतेर्वपुरिति किमस्य पृथग्गणनया। मायीयप्रमातृगताश्च अमी अनादयः कथममायीयप्रमात्रन्तररूपेऽर्जुनगुरौ भवेयुरन्यधर्माणामन्यत्र वृत्त्यदर्शनात्। तदिदमाशङ्काद्वयमपाकरोति '**तत्**' इति। यस्मात् विश्वे ये व्यवहारा भेदप्राणिताः, तेऽनया अपोहनशक्त्या प्रयुक्ताः; तस्मादन्तर्गता अपि एषा प्राधान्यात् पृथगुपात्ता। नच असौ गुरुर्मायाप्रमाता। यत आ समन्तात् विष्टो व्याहृत्या स्वीकृतो महेश्वरभावो माहेश्वर्यं येन, तथाभूतोऽसौ।

'आचार्यमूर्तिमास्थाय शिवः पाशान्निकृन्तति।'

इति परमेश्वरस्यैव गुरुसंबोधमभेदेन अधितिष्ठतः परमार्थतो गुरुत्वमागमे उक्तं यतः। तथाहि

'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्।' (११।८)

इति,

'इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे........................॥' (११।७)

इति शरीरस्थाने विश्वमेव मम परमात्मनः इति अर्जुनस्य बोधं व्यतारीत्। केवलमधिकं प्रकृतोपयोगि भविष्यत्कालैकीभावेन

'अमी सर्वे धृतराष्ट्रस्य पुत्राः.............।' (११।२६)

इत्यादिकं प्रादीदृशत् यथाकालावस्थितमेव अन्यथा इन्द्रजालमात्रं स्यात् तदानीं तेषां बहिर्यथास्वस्थमवस्थितत्वात्। उपयोग एवच प्रदर्शितः

'.............यच्चान्यद्द्रष्टुमिच्छसि।' (११।७)

इति। अहमितिच सर्वत्र अत्र पारमार्थिकमेव प्रकाशविमर्शरू-

पमुक्तम्, ननु मायीयं चतुर्भुजादि स्थावराणां हिमालयोऽहमि-
त्यादेः प्रत्यक्षादेर्विरोधादिति । यत् मया स्तुतं

'सर्वत्र भावपटलेन विजृम्भमाण-
विच्छेदशून्यपरमार्थचमत्कृतिर्या ।
तां पूर्णवृत्त्यहमितिप्रथनस्वभावां
स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम् ॥'

इति । ननु एवमपि भगवतो मायीयतानुपपत्तेः कथं विकल्पयोग इत्याशङ्क्य आह **'विकल्पव्यापार'** इति । नहि भगवतोऽपूर्वाभासनस्मरणविकल्पनादयो धर्माः । ते तु मायाप्रमातृणां तत्स्वातन्त्र्यादुद्भवन्ति,—इति भगवतस्तत्र तत्र स्वातन्त्र्यं ज्ञानादिशक्तय उच्यन्ते । तदर्थमेव शक्तिग्रहणम् । विकल्पनं पशुप्रमातृगतं व्यापारः कर्तव्यं यस्या भगवच्छक्तेः । भगवानेव हि नेतिविमर्शं स्वीकरोति एव ईश्वरदशायाम् । नेतिविमर्शानुन्मीलने हि चिद्रूपतातिरिक्तसर्वांशविमर्शात्मन इदंभावस्य सर्वथैव अभावादिदमहमितिसामानाधिकरण्यात्मा बोध ईश्वर इति कथं भवेत् । तस्मात् तत्रापि सा अपोहनशक्तिरस्त्येव । तदुक्तं

'.............दशा रुद्राधिदैवता ।
निषेधरूपास्त्यैशाने पदेऽहं सर्वमित्यपि ॥'

इति । ईश्वरतैव च विश्वरूपता गीतासु दर्शिता । इहापि एतदर्थमेव **'अन्तःकृतानन्तविश्वरूपः'** इति उक्तम् । विश्वरूपाविभागादेव च मायाप्रमातारोऽपि तत्र अभेदेनैव परमार्थतो भान्तीति विकल्पादयोऽपि भगवति न अत्यन्ताय दूरापेताः । तत एव अस्य ज्ञत्वकर्तृत्वप्रकाशादौ यत् सर्वशब्दार्थेन विशेषणं, तत् न संकोचितं स्यात् । अन्यथा विकल्पनादेः स्वात्मवर्तिनः संभवे यः कोऽपि आस्वादः, तत्र अयमज्ञ एवेति स्वविषयं सा-



र्वज्ञ्यादि सर्वसाधारणमेव अस्य उपगतं भवेत् तदेकनियमात्, संकोचात् तु न अस्य मायीयतेति । तेन 'मत्तः' इति स्वात्मनो हेतुता आधारता च पंचम्या स्वीकृता । हेतौ ल्यब्लोपे च सा यतः । ननु पूर्वं **'कर्तरि ज्ञातरि च'** इति ज्ञानक्रिये एव भगवति शक्ती निरूपिते, अधुना तु स्मृत्यपोहनशक्ती अधिके इति किमेतदित्याशङ्क्य आह........चेति । ज्ञानानि स्मरणं साक्षात्करणं विकल्पनं च अपोहनशब्दवाच्यम् । तत्र शक्तिः, तान्येव च शक्तिरिति ॥ ७ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचिताया-
मीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां ज्ञानाधिकारे
परदर्शनानुपपत्तिविमर्शस्तृतीयः ॥ ३ ॥